॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

# ॥ श्रीविशिष्टाद्वैतवैजयन्ती ॥

चतुस्तंत्रपारीणैः अद्वैतविद्याचार्यैः

**श्रीमदप्पयदीक्षितैः**

विरचिता

विशिष्टाद्वैतसिद्धांतानुसारिणी

श्रीशारीरकब्रह्मसूत्राधिकरणार्थसंग्रहरूपा

# ॥ नयमयूखमालिका ॥

श्रीमच्छ्रीनिवासरामानुजमहादेशिकचरणनळिनवरिवस्याधिगत-

वेदान्तयुगीरहस्येन

( ओप्पिलियप्पन् सान्निधि )

**व. न. कृष्णमाचार्येण**

नानादेशानीतश्रीकोशपरिशीलनपुरस्सरं विद्वद्वरैस्सह

यथामति परिशोध्य


**कुम्भघोणे**

रा. गुरुराजाचार्यस्य

“ श्रीगोपालविलासमुद्राक्षरशालायां ”

मुद्रयित्वा प्रकाशिता.

1915

॥ श्रीः ॥

# विज्ञापना ।

विदितमेव विश्वेषां विदुषां यदिमे करतलामलकीकृतनिखिलतंत्राः श्रीमदप्पयदीक्षिताः 'चतुरधिकशतप्रबन्धनिर्वाहकाचार्ये'त्यादिबिरुदावलिसूचिततावत्प्रबन्धनिबन्धनाः महावैयाकरणानां भट्टोजिदीक्षितानां वेदान्ताध्यापकाः, कुवलयानन्दचित्रमीमांसादिग्रन्थानां, श्रीमन्निगमान्तमहादेशिकानुगृहीतयादवाभ्युदयादिकाव्यरत्नव्याख्यानस्यच निर्माणेन आत्मन आलङ्कारिकचूडामणितामाविष्कुर्वाणाः द्वासप्ततिं वत्सरान् भुवनतलमिदमलंकुर्वाणाः, परित्यक्तप्राकृतशरीरा अपि निजनिर्मितनिबन्धमयेन वपुषा भारतभूमिमिमामद्यापि भूषयन्तीति ॥

एते च आंग्ले १५५४-वत्सरे कृतावताराः १६२६-वत्सरात्प्रागेव वसुन्धरामिमामुत्सृष्टवन्तश्चेति विमर्शकानां सरणिः ॥

एतैश्च प्रणीतस्य चतुर्मतसाराख्यप्रबन्धस्य परिच्छेदचतुष्टयपरिमितस्य द्वितीयः परिच्छेद एव व्यपदिश्यते प्रकृतनयमयूखमालिकानाम्ना ॥

एषा च श्रीभगवद्रामानुजानुगृहीतगभीरतमभाष्यफक्किकानुसारिण्या पूर्वमीमांसाशिक्षितन्यायकलापसंवलनपरिष्कृतया प्रत्यधिकरणसमाप्तिप्रणीतनिर्गळितार्थसंग्रहकारिकासंवलितया षट्पञ्चाशदुत्तरशताधिकरणार्थविन्यासधोरण्या तादृशभाष्यपरिचिचीषूणामतीव साहायकमाचरतीति निश्चप्रचम् ॥

इयञ्च न केनापि मुद्रणपथमेतावता कालेनावतारिता ॥

अत्र च विशिष्टमातृकाप्रदानेन प्रसन्नानां विपश्चिदपश्चिमानां महामहोपाध्यायबिरुदभूषितानां तिरुविशनल्लूर्. श्रीरामसुब्रह्मण्यशास्त्रिणां, मैलापुरस्थसंस्कृतकलाशालाप्रधानाध्यक्षाणां श्रीवेङ्कटसुब्रह्मण्यशास्त्रिणां, गदाधरपुरं श्रीवत्साङ्कं चक्रवर्ति श्रीनिवासाचार्याणां, कावेरिपाक्कं श्रीशेषाद्रिनाथाचार्याणां, विल्लियंपाक्कं चक्रवर्ति श्रीकृष्णमाचार्याणाञ्च निरतिशयमुपकारं न कदापि विस्मरेयम् ॥ इति

श्रीभूमिदेवीदयितपदपंकजोपजीवी

ओप्पिलियप्पन् सन्निधि य. न. कृष्णमाचार्यः.

॥ श्रीः ॥

## अधिकरणानामकारादिक्रमेणानुक्रमणिका ॥

| विषयः । | पुटं (४) | विषयः । | पुटं । |
|---|---|---|---|
| भूमज्यायस्त्वाधिकरणं । | ३०८ | शास्त्रयोनित्वाधिकरणं । | १५ |
| भूमाधिकरणं । | ७२ | शिष्टापरिग्रहाधिकरणं । | १४२ |
| भोक्त्रापत्त्यधिकरणं । | १४३ | श्रेष्ठाणुत्वाधिकरणं । | २१९ |
| मध्वधिकरणं । | ९८ | सङ्कल्पाधिकरणं । | ३७७ |
| मनोऽधिकरणं । | ३५४ | संज्ञामूर्त्यधिकरणं । | २२५ |
| महद्दीर्घाधिकरणं । | १६४ | संख्योपसंग्रहाधिकरणं । | ११७ |
| मुक्तिफलाधिकरणं । | ३३९ | सन्ध्याधिकरणं । | २४३ |
| मुग्धाधिकरणं । | २५० | सप्तगत्यधिकरणं । | २१७ |
| यथाश्रयभावाधिकरणं । | ३१३ | सम्पद्याविर्भावाधिकरणं । | ३७४ |
| योगप्रत्युक्त्यधिकरणं । | १३० | समन्वयाधिकरणं । | १९ |
| रचनानुपपत्त्यधिकरणं । | १५८ | समानाधिकरणं । | २७४ |
| रश्म्यनुसाराधिकरणं । | ३६२ | समुदायाधिकरणं । | १७४ |
| लिङ्गभूयस्त्वाधिकरणं । | ३०० | सम्बन्धाधिकरणं । | २७५ |
| वरुणाधिकरणं । | ३६८ | सम्भृत्यधिकरणं । | २७७ |
| वाक्यान्वयाधिकरणं । | १२६ | सर्वत्र प्रसिद्ध्यधिकरणं । | ४४ |
| वागधिकरणं । | ३५३ | सर्वव्याख्यानाधिकरणं । | १३३ |
| वायुक्रियाधिकरणं । | २२० | सर्वथाऽनुपपत्त्यधिकरणं । | १८७ |
| वाय्वधिकरणं । | ३६६ | सर्ववेदान्तप्रत्ययाधिकरणं । | २६२ |
| विकल्पाधिकरणं । | ३१२ | सर्वान्नानुमत्यधिकरणं । | ३२७ |
| विधुराधिकरणं । | ३३१ | सर्वापेक्षाधिकरणं । | ३२५ |
| वियदधिकरणं । | १९६ | सर्वाभेदाधिकरणं । | २६९ |
| विलक्षणत्वाधिकरणं । | १४० | सहकार्यन्तरविध्यधिकरणं । | ३३५ |
| विहितत्वाधिकरणं । | ३२९ | साम्परायाधिकरणं । | २८६ |
| वेधाद्यधिकरणं । | २८१ | स्तुतिमात्राधिकरणं । | ३२२ |
| वैश्वानराधिकरणं । | ९३ | स्मृत्यधिकरणं । | १३५ |
| शब्दादिभेदाधिकरणं । | ३१० | स्वाम्यधिकरणं । | ३३४ |
| शमदमाद्यधिकरणं । | ३२६ | हान्यधिकरणं । | २८२ |
| शरीरेभावाधिकरणं । | ३०५ | | |

॥ श्रीः ॥

॥ श्रीभूमिदेवीसमेतश्रीनिवासपरब्रह्मणे नमः ॥

॥ श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः ॥

# श्रीमदप्पयदीक्षितविरचिता

## श्रीशारीरकब्रह्मसूत्रव्याख्या

# नयमयूखमालिका ॥



### प्रथमस्याध्यायस्य प्रथमः पादः ॥

हेषारवैर्यश्श्रुतिब्रह्मनिर्भरैः स्वीयां व्यनक्ति स्वरसो दितां पुरा ।
निश्वासपङ्क्तिं निखिलामपि त्रयीमश्वाननः पातु स वश्चिरं हरिः ॥

श्रेयसान्निधिमिव श्रियःपतिं प्रेप्सतां प्रियहिताध्वदर्शिनी ।
लक्ष्मणार्यहृदयानुसारिणी लिख्यते नयमयूखमालिका ॥

'अथातोधर्मजिज्ञासे' त्यारभ्य 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दा' दितिपर्यंतं विंशतिलक्षणमेकं शास्त्रं, तत्र कर्मविचारार्था द्वादशलक्षणी देवताविचारार्था चतुर्लक्षणी च वृता । ब्रह्मविचारार्था चतुर्लक्षण्यारभ्यते । तत्रादौ ब्रह्मविषयव्युत्पत्त्यभावप्रतिपत्तिदौःस्थ्यमानान्तरसिद्धत्वफलराहित्यरूपतदनारम्भहेतुचतुष्टयनिरासेन तदारम्भसमर्थनार्थतया शास्त्रोपोद्घातरूपाणि समन्वयाधिकरणपर्यन्तानि चत्वार्यधिकरणानि । तेषु व्युत्पत्त्यभावशंकानिराकरणार्थमिदमाद्यमधिकरणम् ॥

### अथातो ब्रह्मजिज्ञासा ॥१॥

ब्रह्मविचारात्मकमिदं शास्त्रमारम्भणीयं नवेति संशयः । तदर्थं ब्रह्मणि वेदान्ताः प्रमाणं नवेति संशयः । तदर्थञ्च सिद्धरूपे ब्रह्मणि व्युत्प-

त्तिस्संभवति नवेति संशयः । सिद्धे शब्दव्युत्पत्त्यसम्भवे ब्रह्मणि वेदांतानप्रमाणमिति, वेदांतरूपप्रमाणमुखेन कर्तव्यतयाऽभिमतो ब्रह्मविचारो नकर्तव्य इति, तदर्थमिदं शास्त्रं नारम्भणीयमिति, पूर्वपक्षे फलफलिभावः । शब्दानां सिद्धे व्युत्पत्तिसम्भवे वेदान्तानां ब्रह्मणि प्रामाण्यमुपपद्यत इति, तन्मुखेन ब्रह्मविचारात्मकमिदं शास्त्रमारम्भणीयमिति, सिद्धांते फलफलिभावः । तत्रोत्तममध्यमवृद्धव्यवहाराभ्यां बालस्य कार्य एव व्युत्पत्तिग्रहात् उपजीव्यकार्यव्युत्पत्तिग्रहानुसारेण तदुपजीविषु 'पुत्रस्तेजात' इत्यादिपाश्चात्यव्यवहारेषु कार्यपदाध्याहारावश्यंभावात् सर्वे शब्दाः कार्यएव व्युत्पत्तिमन्त इति पूर्वपक्षः । सिद्धांतस्तु– आद्यव्युत्पत्तिग्रहस्य कार्यविषयत्वनियमेऽपि पाश्चात्येषु सिद्धार्थव्यवहारेषु न कार्यपदाध्याहारः कार्यः । तथाहि– किमाद्यव्युत्पत्तिग्रहकाले गामानयेत्यादिवाक्यगतानां सर्वेषां पदानां कार्यवाचित्वमवगतमिति तदनुसारेण द्वितीयादिप्रयोगेषु श्रुतैरपि सर्वैः पदैः कार्यसामान्ये बोधिते तद्विशेषजिज्ञासया कार्यविशेषवाचिक्रियापदाध्याहार इष्यते, उत आद्यव्यवहारस्य क्रियापदघटितत्वदर्शनमात्रेण । नाद्यः । गोपदसमभिव्याहारात् कर्मकारकस्येव क्रियापदसमभिव्याहारात् कार्यस्य प्रतीत्युपपत्त्या कर्मकारक इव कार्येऽपि तेषां शक्तेरकल्पनीयत्वात् । नापिद्वितीयः । 'दण्डेनगामानय' त्याद्यव्युत्पत्तिग्रहे करणश्रवणेऽपि 'अग्रे घटं पश्य' त्यादौ करणानध्याहारवत् कार्यानध्याहारस्याप्युपपत्तेः । अन्यथा आद्यव्युत्पत्तिग्राहकवाक्यस्य आनयनकार्यघटितत्वे द्वितीयादिप्रयोगेष्वपि तस्यैवाध्याहारापत्तेः । अग्रे कार्यान्तरघटितवाक्यश्रवणात् आनयननियमस्त्यज्यते चेत्, कार्यवाचिपदरहितासिद्धार्थवर्णनपरकाव्याद्युपलम्भबाहुळ्यात् कार्यनियमोऽपि त्यक्तव्यः । अपिच सिद्धार्थविषयोऽप्याद्यव्युत्पत्तिग्रहो दृश्यते । यथा मातापित्रादयो बालान् शब्दार्थं ग्राहयन्तः शशिपशुप्रभृतीनंगुळ्या निर्दिश्य तत्तद्वाचकशब्दान् प्रयुञ्जते, बालाः तथाभूतांगुळिनिर्देशसहितैः तत्प्रयोगैः शब्दार्थसम्बन्धं निश्चिन्वन्तीत्यनुभवसिद्धमेवैतत् । ननु, अंगुळिनिर्देशसहितशब्दप्रयोगदर्शनमात्रेण कथं बालः अस्य

शब्दस्य अयमर्थ इति निश्चिनुयात् । नन्वर्थविशेषाभिमुखांगुळिनिर्देशस-हितशब्दविशेषप्रयोगात्तयोर्वाच्यवाचकभावप्रत्यायनार्थ इति बालस्य व्यु-त्पत्तिग्रहोऽस्ति; नवा तथा नियमोऽस्ति, बहुजनसमाजे चैत्रमदृष्ट्वा तं तमन्विच्छन्तं प्रति तदभिमुखांगुळिनिर्देशसहितचैत्रशब्दप्रयोगस्य वाच्य-वाचकभावप्रत्यायनार्थत्वाभावात् । यत्तु तत्तदर्थानंगुळ्या निर्दिश्य तत्त-द्वाचकशब्देषु बहुशः प्रयुक्तेषु बालानां तत्तदर्थाभिमुखांगुळिनिर्देशशब्दवि-शेषप्रयोगसाहचर्यदर्शनजनितवासनाबाहुळ्यात् तत्तच्छब्दश्रवणानन्तरंतत्त-दर्थविषयस्वबुद्ध्युदयेन तत्रतत्रार्थेन तत्तच्छब्दस्य वाचकत्वरूपसंबन्ध-निश्चयो भवेत्, संबन्धं विना शब्दादर्थबोधासम्भवात् संबन्धान्तराभावा-च्चेति । नैतद्युक्तं — यदि तत्तदर्थविषयांगुळिनिर्देशशब्दप्रयोगसाहचर्यरूपसं-बन्धान्तराधीनो बालस्य शब्दादर्थप्रत्ययः, किमर्थं वाचकत्वरूपसंबन्धा-न्तरस्यापि कल्पना, साहचर्यसंबन्धेनैव अर्थप्रत्ययसिद्धेः । नहि संबन्धा-न्तरेण सिद्धे अर्थप्रत्यये तदुपपादकत्वेनान्योपि संबन्धः कल्प्यः, कल्प्य-मानोऽपि न प्राङ्निष्पन्नार्थप्रत्ययस्योपपादकः, ज्ञातोहि संबन्धोऽर्थप्र-त्ययहेतुर्भवति, नच पश्चात्संबन्धकल्पनया अर्थप्रत्ययात्पूर्वं संबन्धज्ञान-मुपपादितं भवतीति चेत्, उच्यते दृश्यते तावन्मातृकृतांगुळिनिर्देशादि-सहितशब्दविशेषप्रयोगभूयोदर्शनवन्तो बालाः तयोर्वाच्यवाचकभावं प्र-तिपद्य शब्दश्रवणे तदर्थं स्मृत्वा तदनुसारेण चेष्टन्ते, अर्थदर्शने तद्वा-चकशब्दं स्मृत्वा प्रयुञ्जते चेति, तेन तद्दर्शिनामित्थमवधारणं जायते, शब्दार्थसंबंधानभिज्ञान् प्रति अंगुळिनिर्देशचेष्टाविशेषसहितशब्दप्रयोगो वाच्यवाचकभावसंबन्धप्रत्यायनार्थः, अतएव तेन बालाः प्रतिलब्धवाच्यवा-चकभावज्ञानास्तदनुकूलं व्यवहरन्तीति, एवमवधारणवन्त एव जन्मान्तरे शैशवं प्रतिपद्य मात्रादिभिर्व्युत्पाद्यन्त इति तेषां पूर्वजन्मसंस्कारानुवृत्त्या मात्रादिकर्तृकार्थविशेषाभिमुखशब्दविशेषप्रयोगस्य शब्दार्थसंबन्धप्रत्याय-नार्थत्वस्मरणं भवतीति ततो वाच्यवाचकभावरूपसंबन्धनिश्चयः । यद्वा पूर्वपूर्वजन्मसु मात्रादिकृतांगुळिनिर्देशसहितशब्दप्रयोगाधीनव्युत्पत्तिग्रहज-

नितसंस्कारबलादेव बालानामुत्तरोत्तरजन्मसु तेन व्युत्पत्तिग्रहः, अवश्यञ्च 'पुत्रस्तेजात' इत्यादिव्यवहारेषु व्युत्पत्तिग्रहेऽपि जन्मान्तरसंस्कारोपजीवनमपेक्षितम् । नखलु तत्र आद्यव्युत्पत्तिग्रहं वदतां शिशूजननं । 'चैत्र पुत्रस्ते जात' इति वाक्यश्रवणानन्तरं चैत्रस्य स्नानदानादिकञ्च दृष्टवतोऽपि बालस्य जातशिशुश्चैत्रस्य पुत्र इति वा, पुत्रजन्म हर्षकारणमिति वा, पुत्रजन्मनि स्नानाभ्युदयादिकं कुर्वन्तीति वा, स्वतएव ज्ञानमस्ति । अतः पुत्रजन्मश्रवणे हृष्टाः स्नानदानादिकं कुर्वन्तीत्येतद्विषयजन्मान्तरसंस्कारोद्बोधेन स्मृत्वैव, जातशिशुश्चैत्रस्य पुत्रः 'चैत्र पुत्रस्ते जात' इति शब्दस्यापि चैत्रपुत्रजननमर्थः, अतएव मदृष्टपुत्रजन्मश्रवणानन्तरकर्तव्यं स्नानदानादिकमयं करोतीति निश्चिनोतीत्येवोपपादनीयं । पुत्रपादांकितपटप्रदर्शनपूर्वकेऽपि 'पुत्रस्ते जात' इति वाक्ये श्रुते लाटदेशे पुत्रपादांकितपटप्रदर्शनपूर्वकं पुत्रजननवार्तां वदन्तीत्येतद्विषयजन्मान्तरसंस्कारोद्बोधापेक्षाऽस्त्येव । तस्मात्सिद्धे पदानां व्युत्पत्तिसत्त्वात् वेदान्तानां ब्रह्मणि प्रामाण्यमुपपद्यतएवेति सिद्धं । सूत्रस्यत्वयमर्थः । अथ=वेदपूर्वभागार्थकर्मविचारानन्तरं । अतः=कर्मविचारस्य पूर्ववृत्तत्वादेव हेतोः । वेदोत्तरभागार्थब्रह्मविचारः कर्तव्य इति । यद्यपि जिज्ञासापदं ज्ञानेच्छाप्रतिपादकं, तथाऽपि अध्याहृतस्य कर्तव्यतायाः स्वतःप्राप्तायामिच्छायामनन्वयात् तद्विशेषणे विचाररूपे ज्ञानेऽन्वयः, यथा 'दध्ना जुहोती' त्यत्र उत्पत्तिविधिप्राप्तं होमं विहाय तद्विशेषणे दाध्नि विधेरन्वयः । यद्यपि विचारोऽपि रागतः प्राप्नुयात्, तथाऽपि सिद्धव्युत्पत्त्यभावशङ्कया प्रतिबन्धपरिहारेण तदुत्तंभनार्थं तत्र कर्तव्यतान्वयो युक्तएव । ननु वृत्तस्य कर्मविचारस्य कथं वर्तिष्यमाणे ब्रह्मविचारे हेतुत्वं । कर्मणामावृत्तिविधानाद्यवगम्य अल्पास्थिरफलत्वावगमनेन ब्रह्मप्राप्त्यर्थोपासनापेक्षितकर्मस्वरूपाधिगमनेनच हेतुत्वमितिचेत् । तथाऽपि बादरायणकर्तव्यब्रह्मविचारशास्त्रप्रतिपाद्यविरुद्धार्थाभिधानेन जैमिनिना प्रवर्तितस्य कर्मविचारस्य हेतुत्वं नयुज्यते, जैमिनेः ब्रह्मसन्न्यासाद्यपलापेन तद्विरुद्धार्थाभिधायित्वञ्च भगवता बादरायणेनैव 'शे-

षत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः, परामर्शं जैमिनिरचोदनाच्चा-पवदती' त्यादिभिस्सूत्रैर्दर्शितमिति चेत् । मैवं । जैमिनेरन्वारुह्यवादस्ते-षुसूत्रेषु अनूदितः, अतएव तस्य ब्रह्मसन्यासाभ्युपगमः 'साक्षादप्यविरोधं जैमिनिः' 'तद्भूतस्य तु नातद्भावो जैमिनेरपी' त्यादिसूत्रैर्दर्शितः । अथापि स्यात् ब्रह्मसन्यासापलापाभ्युपगमादिना जैमिनेः 'विप्रतिषेधाच्चासमञ्जस' मिति सांख्यादिपक्षोक्तदोषभाक्त्वमत्र सूचितम्, एवमपि जैमिनिकृतकर्म-विचारोपजीवने दोषो नापतति, नहि तत्कृते कर्मविचारशास्त्रे ब्रह्मसन्या-सादिनिराकरणं सूत्रितमस्ति, ततोबहिर्विरुद्धार्थवादित्वमस्तिचेदसौ नदोषः । वेदप्रामाण्यप्रतिक्षेप्तृभिरपि कृतस्य काशिकावृत्त्यादेः 'युक्तियुक्तं वचो ग्राह्यं नतुपुरुषगौरवमि' ति न्यायेन परिग्रहात् । ननु बादरायणीये देवताधिकरणे जैमिनीयदेवताऽधिकरणकृतं देवताप्रत्याख्यानं दूषितम् । 'आम्नायस्य क्रि-यार्थत्वा' दित्यादिसूत्रेण वेदस्य क्रियार्थत्वेनैव प्रामाण्यं वक्तव्यमिति अ-विशेषेण अकार्यार्थानामप्रामाण्यमाशंक्य तेषां विध्येकवाक्यतया तदर्थत्वो-पपादनेन प्रामाण्यसमर्थनं जैमिनिना कृतं, तदपि बादरायणेन समन्व-यसूत्रे ब्रह्मविषयाणां वाक्यानामक्रियार्थानां स्वातंत्र्येण प्रामाण्यसमर्थनेन प्रत्याख्यातम् । एवं विरुद्धयोः कथमैकशास्त्र्यमिति चेत् । उच्यते-जैमिनिना स्वकीये देवताधिकरणे देवतास्वरूपनिराकरणं कण्ठतो न कृतं । नच आभिप्रायिकतत्कल्पनं युक्तम्, तिर्यगधिकरणे तेन देवताभ्युपगमस्य स्फुटीकृतत्वेन तद्विरोधापत्तेः । तत्रहि 'नदेवता देवतांतराभावा'दिति सूत्रेण देवताः कर्मसु नाधिक्रियन्ते, इन्द्रादिदेवतानां हविस्त्यागोद्देश्येन्द्रादिदेवतांतराभावात्, स्वात्मने संकल्प्यमानस्य द्रव्यस्य स्वत्वत्यागासंभवेन यागाद्यनिष्पत्तेरित्युक्तम् । ननुच तथापि जैमिनिबादरायणयोः देवतानां कर्मसु गुणत्वप्राधान्याभ्युपगमाभ्यामपरिहार्यो विरोधः । तथाहि- जैमि-निना 'विप्रतिपत्ता'वित्यष्टमाध्यायाधिकरणे 'विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपाख्यत्वा' दिति सूत्रेण ऐन्द्रपुरोडाशेषु पुरोडाशरूपहविस्सा-मान्यादाग्नेययागविध्यन्तः, नत्विन्द्ररूपदेवतासामान्यात् सान्नाय्ययाग-

विद्यन्तः । हविस्त्यागरूपस्य यागकर्मणो हविष्युपलभ्यमानत्वात् दृश्यमानत्वात्, हविषा हि त्यज्यमानेन यागः क्रियमाणो दृश्यते नत्वप्रत्यक्षया उद्देश्यमात्ररूपयेति प्रतिपाद्य यागस्य देवताराधनरूपत्वात् देवतैव प्रसन्ना फलदात्री प्रधानभूतेति तत्सामान्यं हविस्सामान्याद्बलीय इति शङ्कानिराकरणार्थं सूत्रितम्, 'गुणत्वेन देवताश्रुति'रिति । तथा नावमिकेदेवताऽधिकरणे 'देवतावा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वा'दिति सूत्रेण यथाऽतिथिपूजनात्मकमातिथ्यं अतिथिप्रीत्यर्थं सत् अतिथिप्रधानं, एवं देवपूजनात्मकं यजनमपि देवताप्रीत्यर्थं सद्देवताप्रधानमिति पूर्वपक्षमुक्त्वा 'अपिवा शब्दपूर्वत्वाद्यज्ञकर्मप्रधानं स्यात् गुणत्वे देवताश्रुति'रिति सूत्रेण न देवताप्रधानं यजनं, तदेव अपूर्वद्वारा फलजनकं, न तु हविषा प्रीता देवता, तस्यास्तु द्रव्योद्देश्यतया यागोपसर्जनत्वेनैव श्रुतिरिति सिद्धान्तमभिधाय 'अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यात् तस्य प्रीतिविधानत्वा'दिति सूत्रेण अतिथिवैषम्यन्दर्शितम्, आतिथ्यं=अतिथिप्रीतिविधानं, यथाऽतिथिः प्रीयते तथा कर्तव्यतया विहितमिति तदतिथिप्रधानं युज्यते, कर्मणि तु नास्ति प्रीतिविधानं, अतो न देवताप्रधानं यजनमिति । बादरायणेन तु 'फलमत उपपत्ते'रिति सूत्रेण परमेश्वराराधनरूपतया सर्वं कर्म परमेश्वरप्रधानं तत्तत्कर्माराधितात्परमेश्वरादेव फलं नापूर्वव्यापारात्कर्मण इति स्वमतमुक्त्वा 'धर्मं जैमिनिरतएवे'ति सूत्रेण कर्मैव अपूर्वद्वारा फलदायकमिति जैमिनिमतं पूर्वपक्षं निर्दिश्य 'पूर्वन्तु बादरायणो हेतुव्यपदेशा'दिति सूत्रेण परमेश्वर एव सर्वकर्मफलदाता, 'स एवैनं भूतिं गमयती'त्यादिकर्मविधिवाक्यशेषेषु वाय्वादिरूपस्य परमेश्वरस्यैव फलहेतुत्वव्यपदेशात्, क्षणविनाशिनः कर्मणः फलजनने द्वाराकांक्षायां वाक्यशेषार्पितां देवताप्रीतिमपहाय द्वारान्तरकल्पनायोगादिति जैमिनिमतप्रतिक्षेपकयुक्तिप्रदर्शनेन स्वमतं निर्द्धारितम् । एवं परस्परविरुद्धार्थयोः कथमेकशास्त्र्यमुपपद्यते । उच्यते - नायं विरोधः ऐकशास्त्र्यविरोधी, अनुष्ठानविरोधाभावात्, तदविशेषे च वाक्यार्थवर्णनद्वैधीभावमात्रस्य पूर्वतंत्रेऽप्यध्याय-

भेदेनदर्शनात्।तत्रहिदर्शपूर्णमासयोः'उपस्तृणात्यभिघारयति. द्विर्हविषोवद्यति चतुरवत्तं जुहोती' ति श्रुतिवाक्यचतुष्टयमध्ये चतुरवत्तवाक्ये अवत्तहोमविधिः, ततोऽर्थप्राप्तमवदानमनूद्य व्यवदानवाक्ये हविषो द्विरवदातव्यमिति विधिः। चतुरवत्तवाक्ये तु चतुश्शब्दउपस्तरणाभिघारणद्व्यवदानवाक्यगत-प्रचयशिष्टसंख्यानुवाद इति 'संयुक्ते तु प्रक्रमात्तदङ्गं स्या' दिति पाञ्चमिकाधिकरणे निरूपितम् । द्व्यवदानवाक्ये द्वित्वविशिष्टहविरवदानविधिः, उपस्तरणाभिघारणद्व्यवदानविधिप्राप्तं चतुरवत्तमनूद्य होममात्रविधिरिति प्रकारान्तरं 'उत्पत्तितादर्थ्यात् चतुरवत्तं प्रधानस्ये'ति दाशमिकाधिकरणे निरूपितम् । तत्राधिकरणयोः परस्परविरोधमाशंक्य उभयथाऽप्यनुष्ठाने विशेषाभावान्नायं विरोधो दोष इति प्रसाधितं तन्त्ररत्ने । न च वाच्यं 'यां देवतां वषट्करिष्यन् स्यात्तां मनसा ध्याये' दिति विहितं देवताध्यानं यागदेशं समागत्य हविर्गृह्णातीति, ततः प्रसन्ना च फलदात्रीति, एवंविधार्थविषयं बादरायणमते कर्तव्यम् , जैमिनिना तु उदाहृतं देवताध्यान-विधानं तत्तद्देवतावाचिशब्दध्यानविषयमिति निरूपितं सङ्कर्षे , अत-स्तन्मतयोरप्यनुष्ठानेऽपि विरोधोऽस्तीति, यतो वृत्तिकारेण 'संहितमेतज्जैमिनीयेन षोडशलक्षणेने' ति कर्मविचारार्थया द्वादशलक्षण्या देवताविचारार्थया चतुर्लक्षण्या चैकतन्त्र्यं प्रतिपादितमित्युदाहृतं भाष्ये, तत्र कर्मविचारभागे द्वादशानां लक्षणानां धर्मप्रमाणतद्भेदतच्छेषशेषि-भावाद्यर्थभेदस्सुलभसिद्धः । देवताविचारभागे चतुर्णां लक्षणानामर्थभेद-मित्थमाहुः, 'स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकं । फलञ्च देवताकाण्डे देवतानांतु कथ्यत' इति ॥ कर्मदेवतोपासनयोश्च विद्यासहकारित्वेन निश्श्रेयसार्थतया ब्रह्मविचारेण सहैकफलत्वात्, व्याख्येयवेदरूपविषयैक्याच्च, मीमांसापूर्वोत्तरभागयोरैकशास्त्र्यं सिद्धं । अतएव 'पुराणन्यायमीमांसाधर्म-शास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्यच चतुर्दश ॥ अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रञ्च विद्याह्येताश्चतुर्दश'

स्यादिस्मृतिषु विद्यास्थानपरिगणने मीमांसैकविद्यास्थानत्वेन परिगणिता पूर्वोत्तरमीमांसा, भेदेतु संख्याऽतिरेकस्स्यादित्यलं प्रपञ्चेन ॥

सङ्ग्रहकारिकाः ॥

सिद्धं ब्रह्म न वेदान्ताः प्रतिपादयितुं क्षमाः ।
कार्यएव हि शब्दानां लोके व्युत्पत्तिरादिमा ॥
तस्माद्वेदाक्षरप्रायान् वेदांतानवलंब्य वा ।
ब्रह्ममीमांसनं व्यर्थमिति प्राप्तेऽभिधीयते ॥
अंगुल्या निर्दिशन्तोऽर्थान् वृद्धाश्शब्दान् प्रयुंजते ।
व्युत्पद्यन्ते ततोबालास्ते शब्दास्तत्परा इति ॥
इत्थं सिद्धेऽपि बालानां लोकानुभवसम्मते ।
व्युत्पत्तिग्रहणे कस्मात् कार्ये शक्तिर्नियम्यते ॥
उक्तरूपांगुळेश्चेष्टा शक्तिं ग्राहयितुं कृता ।
इति बोधे तु बालानां गतिः प्राग्जन्मवासना ॥
तिर्यञ्चोऽपि हि लोके पुंध्वनिचेष्टाविशेषाणां ।
तत्तत्कार्यार्थत्वं विजानते पूर्वजन्मवासनया ॥
अथवाऽङ्गुळिनिर्देशतत्तच्छब्दप्रयोगयोः ।
साहचर्यात्तु तद्वीक्षाजातसंस्कारदार्ढ्यतः ॥
तत्तच्छब्दश्रुतौ तत्तदर्थबुद्ध्युदये सति ।
तत्तच्छब्दार्थयोगात्मा शक्तिर्लोकैः प्रतीयते ॥

इति जिज्ञासाऽधिकरणम् ॥१॥

---

एवं व्युत्पत्त्यभावमूलानारम्भशङ्कानिराकरणे सिद्धे प्रतिपत्तिदौस्थ्यमूलानारम्भशङ्कां तत्प्रतिपत्त्यर्थलक्षणसमर्थनेन निराचिकीर्षुः किं पुनस्तद्विचार्यं ब्रह्मेत्याकांक्षायां तल्लक्षणमाह—

## जन्माद्यस्य यतः ॥२॥

'भृगुर्वैवारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्मे'त्यारभ्य

'यतोवा इमानि भूतानि जायन्ते येन जातानि जीवंति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे'ति श्रूयते। किमेतद्वाक्यं ब्रह्म लक्षणतः प्रतिपादयितुं शक्नोति उत नेति सृष्ट्यादीनां त्रयाणां विशेषणत्वेन उपलक्षणत्वेन च लक्षणत्वासम्भवसम्भवाभ्यां संशये पूर्वपक्षः। विशेषणत्वपक्षे ब्रह्मैक्यं न सिध्यति, विशेषणभेदेन विशेष्यभेदापत्तेः, भेदकं हि विशेषणं, भेद्यं विशेष्यम्, अतो 'खण्डो मुण्डः पूर्णशृङ्गो गौरश्वो महिष' इत्यादिष्विव अनिवार्यो विशेष्यभेदः। 'श्यामो युवा लोहिताक्षो देवदत्त' इत्यत्र तु देवदत्तैक्यस्य प्रमाणान्तरसिद्धत्वात् न तत्र विशेष्यानेकत्वं, प्रमाणान्तरासिद्ध्यभावे तु तत्रापि विशेषणभेदेन तद्भेदस्स्यादेव। अतोऽत्रानेनैव लक्षणेन लिलक्षयिषितस्य ब्रह्मणः प्रमाणान्तरेण ऐक्यानवगतेः विशेषणभेदाद्बहुत्वमवर्जनीयम्। एतेन 'एकमेवाद्वितीय' मित्यादिभिरपि तदैक्यसिद्धिर्निरस्ता। तत्राप्येकत्वादिविशेषणभेदेन विशेष्यबहुत्वप्रतीतेः तदनुसारेण एकमित्यादिना एको व्रीहिरितिवत् साजात्यविषयतोपपत्तेः। नवात्रैव 'तद्ब्रह्मे'त्येकवचनात्तदैक्यसिद्धिः, गोस्स्वरूपं जिज्ञासमानं प्रति 'खण्डो मुण्डः पूर्णशृङ्गो गौ'रित्यत्र वाक्ये गोशब्दगतैकवचनस्येव जातिविषयत्वोपपत्तेः। नह्येकएव गौः खण्डो मुण्डः पूर्णशृङ्गश्च भवति, खण्डत्वादीनां परस्परविरुद्धत्वात्, तत्रैकवचनं जातिविषयञ्चेत्, इहापि स्रष्टृत्वादीनां भेदकस्वभावानां विरुद्धत्वादेकवचनं जात्येकविषयं वाच्यमिति तुल्यम्। अपि च स्रष्टृत्वसंरक्षकत्वयोस्संहर्तृत्वेन अन्यथाऽस्ति विरोधः, न हि पुत्रमुत्पाद्य यत्नेन तत्संरक्षकः पिता तस्य संहर्ताऽपि भवति। एतेन उपलक्षणत्वपक्षोऽपि निरस्तः, विरुद्धधर्माणामेकोपलक्षणत्वासम्भवात्। किञ्च आकारांतराप्रतिपत्तेरपि उपलक्षणत्वं न सम्भवति। उपलक्षणेन लक्ष्यप्रतिपत्तौ हि उपलक्षणं उपलक्ष्याकारः उपलक्ष्यस्य प्रतिपन्नाकारश्चेति आकारत्रयमपेक्षितं, यथा 'यत्रायं शरारिः पक्षिविशेषस्समित्रकेदार' इत्यत्र हि शरारिसम्बन्धउपलक्षणं, मित्रस्वामिकत्वं उपलक्ष्यं, केदारत्वं पूर्वप्रतिपन्नाकारः। 'शाखाग्रञ्चन्द्र' इत्यत्र शाखाग्रमुपलक्षणं, कालविशेषे शाखाग्रो-

ध्र्वदेशसंबन्ध उपलक्ष्याकारः, चन्द्रस्वरूपं पूर्वप्रतिपन्नाकारः । अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति पूर्वप्रतिपत्तिसाध्यायां बुभुत्सायामेव शाखाग्रश्चन्द्र इति उत्तरावतरणात् प्रत्यक्षप्रतीतः प्रकृष्टप्रकाशादिर्वा पूर्वप्रतिपन्नाकारः । ननु च अत्रापि सत्यज्ञानादिवाक्यतः प्रतिपन्नं पूर्वप्रतिपन्नोपलक्ष्याकारोऽस्तीति चेन्न । तत्रापि सत्यज्ञानादीनां विशेषणानां भेदेन विशेष्यभेदापत्त्या विशेषणत्वासंभवात्, आकारान्तराप्रतिपत्त्या उपलक्षणपक्षस्याप्यसम्भवात्, 'यतोवा इमानी' त्यादिवाक्यप्रतिपन्नाकारान्तरसमाश्रयणे परस्पराश्रयापत्तेः, अतो विशेषणोपलक्षणपक्षद्वयस्याप्यसम्भवात् न ब्रह्म लक्षणेन प्रतिपत्तुं शक्यमिति । एवं प्राप्ते सिद्धान्तः– लक्षणमुखेन ब्रह्म प्रतिपत्तुं शक्यमेव । न च अभेदेऽपि विशेषणभेदायत्तविशेष्यभेदप्रतीतिस्तत्प्रतिपत्तिबाधिका, 'श्यामो दीर्घ' इत्यादाविव विशेषणभेदेऽपि विशेष्याभेदोपपत्तेः । ननु विशेषणभेदे विशेष्यभेद औत्सर्गिकः, 'खण्डो मुण्ड' इत्यादौ दर्शनात्, 'श्यामो दीर्घ'इत्यादौ मानान्तरसिद्धविशेष्यैक्यप्रतीतिस्तद्बाधिकेत्युक्तमिति चेत् सत्यमुक्तम् । दुरुक्तन्तु तत्, विशेषणभेदेऽपि विशेष्यैक्यमौत्सर्गिकं, 'खण्डो मुण्ड' इत्यादौ विशेषणानां विरोधस्तद्बाधकइत्येव उत्सर्गापवादव्यवस्थाकल्पनौचित्यात् । किमत्र विनिगमकमिति चेत्, ऐक्यस्य औत्सर्गिकत्वकल्पने लाघवं, भेदस्य औत्सर्गिकत्वकल्पने गौरवमित्येतद्विनिगमकं, 'श्यामो दीर्घ'इत्यादौ श्यामत्वादीनां गौरादिभेदकत्वेन विशेषणत्वमुपपद्यते, एवं 'तद्ब्रह्मे' त्येकवचनावगतविशेष्यैक्यमपि विशेषणभेदायत्तविशेष्यभेदबाधकं, एकवचनस्य हि व्यक्त्यैक्यविषयत्वमौत्सर्गिकम् । 'खण्डो मुण्ड 'इत्यादौ तु विशेषणानां विरोधात्तत्त्यागः, तत्रापि विशेषणानां विशेष्यभेदकत्वं 'खण्डो मुण्ड' इत्यादावौत्सर्गिकं 'श्यामो युवाऽय' मित्यादौ मानान्तरतो विशेष्यैक्यावगत्या तत्त्याग इति, विपरीतोत्सर्गापवादव्यवस्थाकल्पनप्रतिक्षेपे व्यक्त्यैक्यविषयतौत्सर्गिकत्वकल्पने लाघवं अन्यथा गौरवमित्येव विनिगमकमनुसन्धेयम् । एवं लोकसाधारणमिदं विनिगमकं, विशिष्य चात्र, 'यतोवे' त्यादिवाक्यस्य यच्छब्द-

योगेन 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठा' इति श्रुत्यन्तरसिद्धसृष्ट्यादिकारणानुवादकत्वप्रतिपत्तेः श्रुत्यन्तरसिद्धसर्वविज्ञानप्रतिज्ञानुरोधात् एककारणविषयत्वावश्यम्भावेन पुरोवादप्रतिपन्नैककारणविषयत्वं वाच्यमिति अन्यद्विनिगमकं। तथा च यथा 'यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्सामा शुक्राग्रा' निति ज्योतिष्टोमप्रकरणाम्नातरथन्तरसामत्वबृहत्सामत्वविशेषणयोः तत्प्रकरणाम्नातगायत्राऽमहीयवादिसामान्तरव्यावर्तकत्वं नास्ति, एवमिहापि सृष्टिकारणत्वस्य पुरोवादप्रतिपन्नस्थितिलयकारणत्वव्यावर्तकत्वं नास्तीति युक्तमुत्पश्यामः। न च उत्पाद्य संरक्षितवतस्संहर्तृत्वं विरुद्धमिति शङ्कनीयं, उत्पादनसंरक्षणयोरिव संहारस्यापि कालभेदेनाविरोधात्। स्वयमुत्पाद्य संरक्षितानां सस्यानां कालान्तरे लवनदर्शनात्, तत्तत्सृज्यकर्मानुसारिण ईश्वरस्य तत्तत्संहारे वैषम्यनैर्घृण्यदोषानापत्तेर्वक्ष्यमाणत्वाच्च। एवञ्च उपलक्षणपक्षेऽपि न दोषः। यथा दृष्टान्ते शरारिरुपलक्षणं, मित्रकेदारत्वमुपलक्ष्याकारः, केदारत्वसामान्यं पूर्वप्रतिपन्नाकारः, एवमिहापि जगज्जन्मस्थितिलयकारणत्वमुपलक्षणं, तदुपलक्ष्याकारो लक्ष्मीपतित्वं, उपलक्षणस्य जन्मादिकारणत्वस्य अनूद्यमानस्य पुरुषसूक्तरूपपुरोवादानुसारेण 'ह्रीश्चते लक्ष्मीश्च पत्न्या' विति तत्रत्यमन्त्रप्रतिपन्ने लक्ष्मीपतौ पर्यवसानात्। न हि 'सन्मूला' इति छन्दोगश्रुतिरेव पुरोवादः, विनिगमनाविरहेण कारणवस्तुसमर्पकाणां पुरुषसूक्तादीनामपि पुरोवादत्वानिवारणात्। ब्रह्मत्वं पूर्वप्रतिपन्नाकारः। तद्धि केदारत्वं प्रत्यक्षतोऽनेककेदारसाधारण्येनेव बृहतेर्धातोरर्थानुगमेन 'यस्माद्बृहति ब्रह्मयति तस्मादुच्यते परंब्रह्मे'ति श्रुत्या 'बृहत्त्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयत' इति स्मृत्या च भगवति पुरुषोत्तमेऽवगम्यमानं मंत्रार्थवादावगतनानाविधमहिमशालिब्रह्माद्यनेकदेवतासाधारण्येन प्रतिपन्नं, एवं लक्षणमुखेन पुरुषोत्तम एव ब्रह्मत्वपर्यवसानात् 'नारायणपरंब्रह्मे'त्यादिश्रुतिः। ननु बृहतिधातोर्मनिन्प्रत्ययान्तस्य बृहत्त्वमात्रमर्थः, कथं ब्रह्मणत्वमपि तदर्थेऽत्र्मनि वर्ण्यते। उच्यते—

ब्रह्मणत्वं हि स्वसङ्कल्पेन चेतनाचेतनस्थूलपरिणामहेतुत्वं, तदपि स्वरूपतो गुणतो विभूतितश्च बृहत्त्ववाचिना ब्रह्मशब्देन क्रोडीकृतमेव । ननु लक्षणस्य विशेषणोपलक्षणत्वपक्षद्वयं परस्परविरुद्धं कथं परिगृहीतं, ज्ञाप्यान्वयिव्यावर्तकं विशेषणं, तदनन्वयिव्यावर्तकमुपलक्षणमिति भेदमाहुः ॥ सत्यं । इहापि उपासनाभेदेन जन्मादिकारणत्वस्य अन्वयानन्वयाभ्यां पक्षद्वयोपपत्तिः, यथा शांडिल्यविद्यायां– 'सर्वं खल्विदं ब्रह्म तज्जला' नित्युपास्यकोटावन्वितं तद्विशेषणं, व्याहृतिशरीरकाक्ष्यादित्यमण्डलस्थपुरुषोपासनायां उपास्यब्रह्मस्वरूपप्रदर्शकतयोपलक्षणम् ॥ यदि 'कारणन्तु ध्येय' इत्यथर्वशिखावचनं सर्वेषु उपासनेषु कारणत्वस्य उपास्यत्वसमर्पणार्थमिष्यते, तदानीमनन्तकल्याणगुणाकरस्य ब्रह्मणस्सर्वोपासनानुगता गुणा विशेषणानि, केषुचिदेवोपासनेषु व्यवस्थिता गुणाः ते तदन्योपासनेषु उपलक्षणानीति शिष्यशिक्षार्थं जन्मादिकारणत्वे स्थित्वा पक्षद्वयं भाष्यकारैर्दर्शितं । यद्यपि जन्मकारणत्वादिकमेकैकमप्यनतिव्याप्तं लक्षणं भवितुमर्हति, तथाऽपि ब्रह्मविष्णुरुद्राः कारणपुरुषाः परस्परभिन्नाः प्रत्येकं जन्मादिषु कारणानीत्यनादिप्रवादप्राप्तशङ्काव्यावृत्त्यर्थं समुदितलक्षणाश्रयणमिति सर्वमनवद्यं । सत्यज्ञानादिवाक्योक्तब्रह्मलक्षणान्तरस्योपयोगः तदर्थश्च 'आनन्दादयः प्रधानस्ये'त्यधिकरणे दर्शयिष्यते ॥

सङ्ग्रहकारिकाः ॥

जन्माद्यस्येति यतस्तद्ब्रह्मेति न लक्षणं युक्तं ।
तच्चेद्विशेषणतया लक्ष्म ब्रह्मापि भिद्येत ॥
औत्सर्गिकं विशेषणमखिलान्यविशेषधर्मजातस्य ।
व्यावर्तकमिति हेतोस्तद्भेदे तद्विशेष्यभिदा ॥
उपलक्षणता नभवत्युपलक्ष्याकारवैधुर्यात् ।
अवगताकिञ्चिद्रूपे रूपान्तरबोधकं खलु तत् ॥
केदारतया दृष्टे धर्मिणि तद्बोद्धृवाक्येन ।
पक्षी यथा शरारिः स्वमित्रकेदारतागमकः ॥

तस्माल्लक्ष्ममुखेन ज्ञातुं न ब्रह्म शक्यमुद्दिष्टम् ।
इति शंकाऽपाक्रियते पक्षद्वयमप्युरीकृत्य ॥
श्यामो युवा लोहिताक्षो देवदत्त इतीरिते ।
विशेषणानां भेदेऽपि विशेष्ये नहि भेदधीः ॥
खण्डो मुण्डः पूर्णशृङ्गो गौरित्यत्रतु भेदधीः ।
खण्डत्वादिविरोधेन नत्वत्रास्ति विरोधिता ॥
उपलक्षणता वाऽस्तु प्रतिपन्ने बृहत्तया ।
मन्त्रार्थवादादिवशात्प्रतिपन्नाहि तत्र सा ॥
बहुषु प्रतिपन्ने तैर्बृहत्त्वं द्रुहिणादिषु ।
तेषु ब्रह्म विनिश्चेतुं लक्षणोक्तिरियं श्रुतौ ॥
यथा साधारणेनैव केदारत्वेन निश्चिते ।
मित्रकेदारताबुद्धिर्व्यक्तिभेदे शरारिणा ॥
एवं ब्रह्मादिसामान्यबृहत्त्वेन विनिश्चिते ।
श्रीपतौ कारणत्वेन निराघाटा बृहत्त्वधीः ॥
सर्वकारणवाक्यानां वैशेषिकवचोबलात् ।
पशुच्छागनयस्थित्या तस्मिन्नेव हि विश्रमः ॥
इति जन्माद्यधिकरणम् ॥२॥

---

अथ ब्रह्मणो मानान्तरसिद्धिमूलशास्त्रानारम्भशङ्कानिराकरणार्थं तृतीयमधिकरणं—

## शास्त्रयोनित्वात् ॥३॥

यतोवेत्यादिवाक्यं तत्पुरोवादसहितं जगत्कारणं ब्रह्म प्रतिपादयतीत्युक्तमनुपपन्नम् । ब्रह्मणोऽनुमानगम्यत्वेन तत्र शास्त्रस्य प्रामाण्यासंभवात् इत्याक्षेपिकी अवान्तरसङ्गतिः । ब्रह्मणि शास्त्रस्य प्रामाण्यं सम्भवति न वेति, तस्यानुमानगम्यत्वतदगम्यत्वाभ्यां संशये पूर्वपक्षः । न सम्भवति तत्र प्रामाण्यं, महीमहीधरादिकं सकर्तृकं कार्यत्वात् घटवदिति सावयवत्वानु-

मितकार्यत्वलिङ्गकस्य नैयायिकोक्तस्य तदनुमानस्य जागरूकत्वात् । कार्यत्वलिङ्गं सावयवत्वं न सांशत्वमात्रं, येन कालवियदादिसांशत्ववादिनां तेषु व्यभिचारस्स्यात् । यदवयवाः ततः परस्माच्च पुरुषयत्नेन वियोजनार्हाः तत्सावयवमिति विवक्षितं, अतोनक्कापि व्यभिचारशङ्का । एवं मानांतरप्राप्तेऽर्थे शास्त्रस्य प्रामाण्यं न सम्भवति । ननु निमित्तमात्रेश्वरसाधकेनानुमानेन अभिन्ननिमित्तोपादानत्वरूपस्य शास्त्रार्थस्य प्राप्तिर्नास्तीतिचेत्—न । अनुमानविरोधेन तस्मिन्नर्थे शास्त्रस्याप्रामाण्यात् । ननु बलवत्प्रमाणेन शास्त्रेण विरोधात् अनुमानमेवाप्रमाणमितिचेन्न । ईश्वरानुमानमनपेक्ष्य शास्त्रप्रामाण्यस्यैव निर्वोढुमशक्यत्वात् 'मन्त्रायुर्वेदवत्तत्प्रामाण्यमाप्तप्रामाण्या' दिति न्यायसूत्रकृता शास्त्रस्य प्रामाण्यमीश्वरनिर्मितत्वेनैव प्रसाधितं, तत्प्रसाधनं शास्त्रप्रामाण्यसिद्धेः प्रागेव अनुमानेनेश्वरसिद्धिमपेक्षत इति उपजीव्यविरोधात्, उपादानत्वांशे उपजीव्यतः प्राप्तार्थत्वात् निमित्तत्वांशेच शास्त्रमप्रमाणम् । न च ईश्वरनिर्मितत्वमनपेक्ष्य महाजनपरिग्रहादेव शास्त्रस्य प्रामाण्यमुपपद्यत इति वाच्यं । अन्धपरम्पराशङ्कानिराकरणाय महाजनपरिग्रहे गुणवद्वक्तृकत्वरूपमूलदार्ढ्यापेक्षणात् । एवं शास्त्रस्य अनुमानापेक्षप्रवृत्तिकत्वादेव 'तत्तेजोसृजत' त्यादिवाक्यैः यदीक्षापूर्वकस्रष्टृत्वरूपं कर्तृत्वमुक्तं, तदनुमानमूलमिति व्यञ्जयितुमेव 'अन्नेन शुङ्गेनापोमूलमन्विच्छ अद्भिस्सोम्यशुङ्गेन तेजोमूलमन्विच्छ तेजसासोम्यशुङ्गेन सन्मूलमन्विच्छे'ति कारणानुमानं प्रदर्श्य 'सन्मूलास्सोम्येमाः प्रजा' इत्याद्युक्तं । ननु ईश्वरस्य कर्तृत्वांशमनूद्य उपादानत्वांशार्थप्रतिपादनार्थं शास्त्रमस्तु, बहुभवनसङ्कल्पेन कर्तृत्ववदुपादानत्वस्यापि प्रतीतेः, नहि ईश्वरानुमानमुपादानत्वप्रतिक्षेपकं, येनोपजीव्यविरोधस्स्यात्, किंतु कर्तृमात्रविषयमिति चेन्न । घटादिषु कुलालादेः यादृशं कर्तृत्वं दृष्टं, तादृशकर्तृत्वाधिकरणत्वेनैव हि ईश्वरोऽनुमानेन साधनीयः । कुलालादिषु मृत्पिण्डादिसकलाचेतनदृष्टकारणाधिष्ठातृत्वरूपमेव कर्तृत्वन्दृष्टमिति, दृष्टानुरोधात् तथाभूतकर्तृत्वेनेश्वरानुमानं निमित्तोपादानभेदगर्भं कथमुपादानत्वांशे शास्त्रप्रामाण्यप्रतिक्षेपकं

न स्यात् । तस्माल्लक्षणोक्तिमात्रेण चारितार्थ्याभावात् लक्ष्ये तस्य लक्षणवैशिष्ट्ये च प्रामाण्यस्य वक्तव्यत्वात् । इह च अभिन्ननिमित्तोपादानत्वरूपे लक्षणे वेदान्तानां प्रामाण्यासम्भवात् वेदांतमुखेन कर्तव्यतयाऽभिमतो ब्रह्मविचारो न कर्तव्य इति तदर्थमिदं शास्त्रन्नारम्भणीयमिति । एवं प्राप्ते सिद्धान्तः– महीमहीधरमहार्णवादीनामेकेन कर्त्रा युगपत्कृतत्वेनैव सकर्तृकत्वं निर्वाह्यमित्यत्र प्रमाणन्नास्ति । महतो देवालयस्य प्रासादमण्डपगोपुरप्राकारादीनामिव तेषां क्रमेण बहुभिः कृतत्वेनापि सकर्तृकत्वोपपत्तेः । प्रत्युत महीमहीधरादिकमनेककर्तृकं, यावत्संप्रतिपन्नैककर्तृकघटादिभ्यो महाकार्यत्वात्, गोपुरप्राकारवदिति बहुकर्तृकत्वस्यैव अनुमातुं शक्यत्वाच्च । न च लाघवात्कर्त्रैक्यसिद्धिः, नहि प्रसिद्धसंसारिविलक्षणा बहवः कर्तारः कल्प्यन्ते, किंतु तेष्वेव केचित्कर्मोपासनाविशेषैरुपचितपुण्यविशेषाः क्षित्यादिषु कस्यचित्कस्यचित्कालविशेषेषु कर्तारः कल्प्यन्ते । प्रसिद्धं हि अगस्त्यविश्वामित्रादीनां विन्ध्यस्तंभनमहार्णवचुळकीकरणस्वर्गान्तरसृष्ट्यादिकं सामर्थ्यं, अद्यतनेष्वंकुरादिष्वपि सूक्ष्मव्यवहितविप्रकृष्टार्थज्ञानादिमन्तस्तत्र सन्तो योगिनः कर्तारस्सम्भवन्ति । अतः क्षित्यादिसकलोपादानगोचरापरोक्षज्ञानचिकीर्षादिमतः संसारिविलक्षणस्य कस्यचित्कर्तुः कल्पन एव धर्मिकल्पनागौरवम् । एवं च घटादिदृष्टान्तेन क्षित्यंकुरादीनां शरीरजन्यत्वसिद्धिरप्यनिवारिता भवति । किं च लाघवादेकः कर्ता सिध्यन् प्रसिद्धसंसारिविलक्षणः सिद्ध्यतीति कोऽर्थः । किं वस्तुतः एकः कर्ता सिद्ध्यतीति, उत एकत्वविशिष्टस्सिद्ध्यतीति । नाद्यः । एकत्वाविषयत्वे वस्तुत एकः कर्ता विषय इति निर्णेतुमशक्यत्वात् । न द्वितीयः । एकत्वस्य संख्यारूपत्वे प्रत्येकन्तद्वैशिष्ट्यसत्त्वेन तत्सिद्धेः बहुकर्तृकत्वाविरोधित्वात् अनेककर्तृकत्वाभावविशिष्टं सकर्तृकत्वं साध्यमिति चेन्न । गोपुरादिषु व्यभिचारात्, लघुविषयोपनायकतया त्वदभिमतस्य लाघवस्य बहुविषयोपनायकत्वापत्तेश्च । नह्येवं संप्रतिपन्नं प्रमाणानुग्राहकमस्ति, यदग्रे वस्तुलाघवसिद्ध्यर्थं स्वानुग्राह्यप्रमाणस्य विषयगौरवमापादयेत्, तथासति इष्ट-

पुरोवर्तिज्ञानस्य प्रवृत्तिकारणतां गृह्णतः प्रमाणस्य अनुग्राहको लाघवतर्कः, भ्रमस्थले व्यधिकरणप्रकारकज्ञानस्य अकल्पनया अग्रे वस्तुलाघवसिद्ध्यर्थं भेदाग्रहमेव कारणतावच्छेदकत्वेनोपनयेत्, न तु ज्ञानविचि वेद्यतयोपस्थितं वैशिष्ट्यम्, अतो लाघवात्कर्त्रैक्यसिद्धिरित्ययुक्तमेव। एतेन साध्यमानस्य कर्तुः कर्तृतोपयुक्तानां अपरोक्षज्ञानचिकीर्षाकृतीनां लाघवात्प्रत्येकमेकत्वासिद्धौ तदाश्रयकर्त्रैक्यसिद्धिरित्यपि निरस्तम्। कर्त्रैक्यसिद्धिपक्षोक्तविकल्पमुखदूषणानामत्रापि सत्वात्, कस्यचिज्ज्ञानं कस्यचिच्चिकीर्षा कस्यचित्कृतिरित्येवमाश्रयभेदासिद्धिनिवारणाय पुनस्तदाश्रयैक्यस्यापि साधनीयत्वापत्तेः। न हि ईश्वरज्ञानादीनां त्वन्मते नित्यानां जन्यजनकभावोऽस्ति, येन समानाधिकरणानामेव तेषां जन्यजनकभावदर्शनात् तदाश्रयैक्यं सिध्येत्, एवं च तेषामेकैकत्वहेतुकनित्यत्वासिद्धेः, एवं च योगिनामपरोक्षज्ञानादिभिरपि सिद्धसाधनमनिवार्यम्। न च क्षित्यंकुरादिजननपूर्वक्षणे तत्र तत्र तेषां सन्निधानमक्लृप्तमिति वाच्यम्। 'धर्मिकल्पनातो वरं धर्मकल्पने' ति न्यायेन योगशास्त्रादिप्रमाणकानां तेषां सन्निधानमात्रस्य कल्पनौचित्यात्। ननु अनुमानेन कर्तृमात्रसिद्धौ 'द्यावाभूमी जनयन् देव एक' इत्यादिश्रुतितस्तदैक्यसिद्धिरस्त्विति चेत्, तर्हि अनुमानेन अप्रत्याख्यातानां भगवतो निरतिशयानन्दाद्यनन्तकल्याणगुणानां नित्यविग्रहस्य 'तदैक्षते' त्यादिश्रुतिसिद्धतत्तत्सृष्ट्यादिसङ्कल्पाद्यनित्यत्वस्य च ततस्सिद्धिर्ननिवार्येति, न नित्यानुवर्तमानशरीररहितनित्यापरोक्षज्ञानादिविशेषगुणत्रययुक्तनैयायिकाभिमतेश्वरसिद्धिरिति, न तदनुमानसिद्धेश्वरानुवादकत्वादिना शास्त्रस्याप्रामाण्यप्रसक्तिरिति, प्रमाणभूतेन शास्त्रेण जगत्कारणत्वसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणाधारपुरुषोत्तमाभिधपरब्रह्मसिद्धिरप्रत्यूहेति सिद्धम्॥

सङ्ग्रहकारिके॥

जगतः कारणं ब्रह्म सिध्यत्येवानुमानतः।
अतो विचार्या वेदान्ता न तत्सिद्धानुवादिनः॥

नैतत्साध्वनुमानाद्धि कर्त्रैक्यादि न सिध्यति ।
अतस्तत्कारणं ब्रह्म वेदान्तैकप्रमाणकम् ॥
इति शास्त्रयोनित्वाधिकरणम् ॥३॥

---

एवं मानान्तरसिद्धिमूलाप्रामाण्यशङ्कानिमित्तकशास्त्रानारंभशङ्कानिवारिता— अथ अफलत्वनिबंधनतदनारंभशङ्कानिराकरणार्थं चतुर्थमधिकरणम्——

## तत्तुसमन्वयात् ॥४॥

वेदान्तानां सिद्धरूपे ब्रह्मणि मानान्तराप्रवृत्तावपि प्रामाण्यं न सम्भवति, सिद्धरूपब्रह्मपरवाक्यस्य प्रवृत्तिनिवृत्तिपरवाक्यस्येव पुरुषार्थपर्यवसायित्वासम्भवेन श्रोतॄणां तत्र बुभुत्सा नोदेतीत्यबुभुत्सिते श्रोतॄणां प्रमित्यनुदयेन तेषां प्रामाण्योक्तेर्निरालम्बनत्वात् । न च यथा केनापि हेतुना रथ्यायां पतितस्य किरातैस्संवर्धितस्य किरातपुत्रोऽहमित्यभिमन्यमानस्य राजकुमारस्य 'न त्वं किरातपुत्रः, किं तु राजकुमारः, तव पिता महाराजस्तरुणो निरतिशयभोगशाली राज्यं परिपालयन्नास्त' इति सिद्धार्थवाक्यश्रवणेन हर्षो जायते, एवमिहापि 'तव अन्येषां च पितृस्थानीयो निखिलहेयप्रत्यनीकसर्वज्ञत्वसत्यसङ्कल्पदयादाक्षिण्यमहोदारत्वाद्यनन्तकल्याणगुणशाली भगवानास्त' इति वाक्यश्रोतुर्महान् हर्षोजायते, 'स च तत्प्राप्त्युपायमन्विष्य तं प्राप्नोति' त्येवं सिद्धार्थवाक्यस्यापि हर्षहेतुत्वेन पुरुषार्थपर्यवसानमुपपद्यत इति वाच्यं । तस्य हर्षस्य राजकुमारहर्षस्येव तात्कालिकत्वेन मुक्तेः स्थिरपुरुषार्थत्वाभावापत्तेः । न च तं प्राप्तस्य तदीयनिरतिशयानन्दानुभवस्सदा वर्तमानोभवति, सस्स्थिरपुरुषार्थस्स्यादिति वाच्यम् । परकीयानन्दज्ञानस्य परं प्रत्यपुरुषार्थत्वादिति पूर्वपक्षः । सिद्धान्तस्तु—तात्कालिकहर्षस्तावदस्त्येव । ब्रह्मनिरतिशयानंदसाक्षात्कारश्च ब्रह्मणा सह भोगसाम्यसहितः स्थायी पुरुषार्थः, नतु तत्र स्वकीयत्वमपेक्षितं, साक्षात्कारत्वाविशेषणे अतीतस्वकीयसुखादिस्मरण-

स्यापि सुखसाक्षात्कारवत्पुरुषार्थत्वप्रसङ्गात्, तद्विशेषणे ततएवातिप्रसङ्ग-
निवारणेन स्वकीयत्वविशेषणानपेक्षणादिति–

संग्रहकारिके ।

तथाऽपि सिद्धरूपेऽस्मिन् वेदान्तानां नमानता ।
प्रवृत्त्यादिपरत्वस्याभावादफलशालिनां ॥
मैवं स्वमन्दिरान्तस्थनिधिबोधकवाक्यवत् ।
तादृग्ब्रह्मावबोधित्वात्ते स्वतःफलशालिनः ॥

इति समन्वयाधिकरणम् ॥४॥

---

एवं शास्त्रानारम्भहेतुशंकाचतुष्टयनिराकरणक्रमेऽध्यायक्रमोहेतुः, तत्र सिद्धरूपे ब्रह्मणि व्युत्पत्तिसमर्थनं समन्वयाध्यायोपयोगि, विशेषणानामविरोधसमर्थनमविरोधाध्यायोपयोगि, अनुमानतस्सिद्धिनिराकरणं साधनाध्यायोपयोगि, अनुमानतस्सिद्धौ हि अनुमानसिद्धज्ञानादित्रयवत्तया संख्यादिपञ्चकवत्तया च ब्रह्मोपासना सिद्ध्येत्, नत्वानन्दादिगुणवत्तया । पुरुषार्थपर्यवसानवर्णनन्तु फलाध्यायोपयोगीति स्पष्टमेव । एवं उपोद्घाताधिकरणचतुष्टयेन शास्त्रारम्भे समर्थिते सति ईक्षत्यधिकरणमारभ्य शास्त्रं प्रतायते ॥

**ईक्षतेर्नाशब्दं ॥५॥**

**गौणश्चेन्नात्मशब्दात् ॥६॥**

**तन्निष्ठस्य मोक्षोपदेशात् ॥७॥**

**हेयत्वावचनाच्च ॥८॥**

**प्रतिज्ञाविरोधात् ॥९॥**

**स्वाप्ययात् ॥१०॥**

**गतिसामान्यात् ॥११॥**

## श्रुतत्वाच्च ॥१२॥

शास्त्रकाण्डद्विकाध्यायपादसंगतयस्स्फुटाः। पेटिकासंगतिर्वाच्या तथाऽवान्तरसङ्गतिः॥ वेदार्थविचारत्वात् शास्त्रसङ्गतिः, वेदान्तविचारत्वाद्ब्रह्मकाण्डसङ्गतिः, कारणविषयत्वात् द्विकसंगतिः, कारणवाक्यसमन्वयविषयत्वादध्यायसंगतिः, स्पष्टतरप्रधानजीवलिंगवाक्यविषयत्वात्पादसंगतिरिति पञ्चसङ्गतयस्स्फुटाः। पेटिकासङ्गतिरवान्तरसङ्गतिश्च वक्तव्योच्यते– ब्रह्म जगतः कारणमेव नभवति, किन्तु प्रधानजीवाकाशादिकमिति शङ्कानिरासेन ब्रह्मकारणत्वायोगव्यवच्छेदः, उपोद्धाताधिकरणचतुष्टयानन्तरप्रथमपादशेषरूपपेटिकार्थ इति पेटिकासङ्गतिः। कारणत्वाक्षिप्ताः ब्रह्मणस्सर्वज्ञत्वसत्यसङ्कल्पत्वादिगुणास्तत्क्रतुन्यायेन मुक्तप्राप्या गुणाः, तस्य महाभोगशालित्वगुणः 'निरञ्जनः परमं साम्यमुपैति'। 'भोगमात्रसाम्यलिंगाच्चे' ति श्रुतिस्मृत्यनुसारेणापि मुक्तप्राप्योगुणः, ब्रह्मणोनिरतिशयानन्दस्तु मुक्तस्य स्वयमप्राप्योऽपि सदाऽऽस्वाद्य इत्यनन्तकल्याणगुणाकरस्य निरतिशयमहानन्दशालिनः परब्रह्मणः प्रतिपादनं पुरुषार्थपर्यवसायि भवत्येवेति हि समन्वयाधिकरणे विवक्षितं, तदयुक्तं, सर्वेषां कारणवाक्यानां प्रधानविषयत्वादित्याक्षेपिकी अवान्तरसङ्गतिः। छान्दोग्ये श्रूयमाणा 'सदेवसोम्येदमग्र आसी' दित्यादिरूपा सद्विद्या खलु कारणवाक्येषु सारभूता, सा तावन्न ब्रह्मप्रतिपादिनी। किंतु सांख्यानुमानसिद्धप्रधानानुवादिनी, 'सदेवसोम्येदमग्रआसी' दिति प्रतिज्ञानिर्देशेन यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादिति दृष्टांतोपादानेन च अनुमानसिद्धार्थानुवादकत्वस्य स्वयमेव श्रुत्या स्फुटीकरणात्। नच अचेतनस्य प्रधानस्य ईक्षणं नसम्भवतीति 'तदैक्षते' ति श्रवणमनुपपन्नं स्यादिति वाच्यम्। 'वृष्टिप्रतीक्षाश्शालयः। वृष्ट्वा मोदमानाश्शाळयः कन्दळन्ती' त्यादिव्यवहारेषु अचेतनानामपि चेतनवदुपचारदर्शनात्, 'कूलंपिपतिषती' त्यत्र कूलस्य पतनकार्योन्मुख्ये गौणे

व्यवहारवत् सतः तेजस्सृष्टिकार्यौन्मुख्ये गौणेक्षणव्यवहारोपपत्तेः, 'तत्तेज ऐक्षत। ता आप ऐक्षन्ते' ति गौणेक्षणप्रायपाठेन सदीक्षणस्यापि गौणत्वनिर्णयाच्चेति पूर्वपक्षः। सिद्धान्तस्तु– प्रतिज्ञातावत् प्रत्यक्षाद्यवगतार्थबोधनसाधारणी, दृष्टान्तनिर्देशोऽपि प्रतिज्ञातार्थस्य बुद्ध्यारोहार्थतया अन्यथासिद्धः, तत्साधारण एव। अन्यथा 'येनाश्रुतं श्रुतं भवती' ति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा बुद्ध्यारूढा नस्यात्, हेतुवचनमात्रमनुमानासाधारणन्तदिह न श्रूयते। ननु 'अन्नेन शुङ्गेनापोमूलमन्विच्छ अद्भिस्सोम्यशुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छे' ति वाक्येषु अन्नादिकार्यरूपलिङ्गेन कारणानुमानमुपन्यस्तं दृश्यते– सत्यं– 'उपक्रमोपसंहारावभ्यासोऽपूर्वताफलं। अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णय' इति श्रुतितात्पर्यनिर्णायकलिङ्गेषु परिगणितमुपपत्तिरूपमिदं लिङ्गं, नत्वत्र प्रधानसाधकत्वेन सांख्याऽभिमतस्य कस्यचिल्लिंगस्य निर्देशोऽस्ति, सर्वं कार्यं सुखदुःखमोहात्मकद्रव्यप्रकृतिकं, तत्समन्वितत्वात्, सामान्यव्याप्तौ घटादिवदित्यादिकं हि सांख्यानां प्रधानसाधकमनुमानमभिमतं, नतदिहश्रुत्या कटाक्षेणापि वीक्षितमस्ति। गौणेक्षणप्रायपाठस्तु नसदीक्षणस्य गौणत्वापादकः, सन्निध्याम्नानलक्षणप्रायपाठरूपपञ्चमप्रमाणस्य ईक्षणश्रुतितद्वाच्येक्षणलिंगबाधकत्वायोगात्। किञ्च 'ऐतदात्म्यमिदं सर्वं तत्सत्यं सआत्मे' ति सर्वस्य प्रपञ्चस्य सदात्मकत्वोक्तिः तदुद्देशेन सतआत्मत्वोक्तिश्च अचेतने प्रधाने नघटते। एवञ्च सर्वस्य प्रपञ्चस्य आत्मभूतं तेजःप्रभृतिशरीरकं सदेव 'तत्तेज ऐक्षते' त्यादिषु ईक्षितृत्वेन विवक्षितमिति नगौणेक्षणप्रायपाठशङ्काऽपि। अपि च मुमुक्षोः श्वेतकेतोः 'तत्वमसी' ति सदात्मकत्वानुसन्धानमुपदिश्य 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथसंपत्स्य' इति तत्फलतया शरीरपातानन्तरं मोक्षउपदिश्यते। न च प्रधाननिष्ठस्य मोक्ष इति सांख्यानामप्यभिमतं, तेषामपि मुमुक्षूणां हेयमेव हि तदभिमतं, अतोहेयत्वावचनादपि न सत्प्रधानं। सर्वविज्ञानप्रतिज्ञाविरोधादपि नसत्प्रधानं, नहि प्रधानज्ञानेन तत्कार्यतया तदभिन्नस्य महदा-

दिकार्यवर्गस्य ज्ञातत्वसम्भवेऽपि चेतनवर्गस्य ज्ञातत्वमुपपद्यते। अपिच सुप्तपुरुषस्य 'सता सोम्य तदा सम्पन्नोभवती'ति सत्सम्पात्तिमुपदिश्य 'स्वमपीतोभवती' ति तस्याः स्वाप्ययरूपत्वं सङ्कीर्तितमिदं सद्ब्रह्मेति पक्षे घटते, पुरुषः सुषुप्तेः प्राक् ज्ञानविकासादिरूपस्थूलाकारविशिष्टजीवशरीरकः कार्यरूपः परमात्मा सुषुप्तौ तमाकारं परित्यज्य ज्ञानसङ्कोचरूपसूक्ष्माकारविशिष्टजीवशरीरके स्वस्मिन् कारणरूपे लीनो भवतीति। अपिपूर्वकस्य इण्धातोर्लयार्थत्वात् 'सर्वस्य प्रभवाप्ययौ हि भूताना' मित्यादिश्रुत्यंतरेषु 'भवाप्ययौ हि भूताना' मित्यादिगीतावचनेषु च तस्य तादर्थ्यदर्शनात्, सच्छब्दस्य च अत्र कारणवस्तुपरस्य सूक्ष्मचिदचिद्वस्तुशरीरकपरमात्मपरतायालक्षणसूत्रे दर्शितत्वात्। सत्प्रधानमिति पक्षेतु स्वाप्ययसङ्कीर्तनं नघटते, प्रधाने स्वशब्दस्य स्वीयपरतयोपपत्तावपि जीवं तच्छरीरकपरमात्मानञ्च प्रति अकारणे तस्मिन् तयोर्लयासम्भवात्। किञ्च 'आत्मावा इदमेकएवाग्रआसीत्'। 'आत्मन आकाशस्संभूत' इत्यादिश्रुत्यन्तराणां परमात्मनएव सर्गाद्यकाले अवस्थानं आकाशादिस्रष्टृत्वञ्च प्रतिपादयन्तीनां या गतिः प्रवृत्तिः तत्सामान्यं सद्विद्यायामप्यस्ति 'सदेवसोम्येदमग्रआसी'दिति। ततोऽपि नसत्प्रधानं, श्वेताश्वतरोपनिषदि 'सहस्रशीर्षा पुरुषः पुरुषएवेदं सर्व' मिति पुरुषसूक्तमन्त्राभ्यां तत्प्रतिपाद्यं भगवंतं प्रस्तुत्य 'सकारणं करणाधिपाधिपोनचास्य कश्चिज्जनिता नचाधिप' इति तस्य साक्षादेव जगत्कारणत्वप्रतिपादनेन सद्विद्यायास्तदैकार्थ्यावश्यम्भावादिति सत् भगवान् पुरुषोत्तमः परंब्रह्मैवेति ॥

सङ्ग्रहकारिकाः ॥

सद्विद्यायां कारणं सत्पदोक्तम्,
सांख्यैरुक्तं लिङ्गगम्यं प्रधानं।
हेत्वाद्यंपाद्वर्णिताभ्यां प्रतिज्ञा-
दृष्टान्ताभ्यां न्यायवाक्यांशकाभ्यां ॥

मैवं सर्वेषु मानेषु प्रतिज्ञा न निवार्यते ।
बुध्यारोहेऽपि दृष्टान्तस्तद्धेत्वाक्षेपकौ न तौ ॥
तस्मादीक्षतिलिङ्गादात्मश्रुतितो मुमुक्षुवेद्यत्वात् ।
गतिसामान्यादिभिरपि सच्छब्दं कारणं ब्रह्म ॥
इति ईक्षत्यधिकरणम् ॥५॥

---

**आनन्दमयोऽभ्यासात् ॥१३॥**
**विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥१४॥**
**तद्धेतुव्यपदेशाच्च ॥ १५ ॥**
**मान्त्रवर्णिकमेव च गीयते ॥१६॥**
**नेतरोऽनुपपत्तेः ॥१७॥**
**भेदव्यपदेशाच्च ॥१८॥**
**कामाच्च नानुमानापेक्षा ॥१९॥**
**अस्मिन्नस्य च तद्योगं शास्ति ॥२०॥**

यदिसतो मुख्यमीक्षणं वाच्यं, तर्हि चेतनत्वान्मुख्येक्षणार्हो जीवएव जगत्कारणमस्त्विति पूर्वपक्षोत्थानादनन्तरसङ्गतिः, तैत्तिरीयाः आनन्दवल्ल्यां 'ब्रह्मविदाप्नोतिपर' मित्युपक्रम्य किन्तद्ब्रह्म कीदृशन्तद्वेदनं कीदृशंतद्वेदनफलमित्याकांक्षायां 'सत्यं ज्ञानमनन्तं ब्रह्म । योवेद निहितं गुहायां परमेव्योमन् । सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिता' । इति मन्त्रेण ब्रह्मणस्स्वरूपं तद्वेदनप्रकारं तत्प्राप्य फलस्वरूपञ्चोपवर्ण्य 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूत' इत्यादिना तस्मादेव ब्रह्मणआकाशादिसकलजगदुत्पत्तिमुक्त्वा तस्य सुखप्रतिपत्त्यर्थं स्थूलारुन्धतीन्यायेन अन्नप्राणमनोबुद्धिषु क्रमेण तद्बुद्धिमवतार्य 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तर आत्माऽऽनन्दमय' इति आनन्दमयमुपक्रम्य तस्मिन्नेव प्रस्तुतजगत्कारणब्रह्म-

बुद्धिस्समापिता, तदनन्तरं 'तस्माद्वा एतस्मादानंदमयादन्योऽन्तर आत्मे'ति आत्मान्तरोपदेशाभावात्। स किमानन्दमयो जीवः, उत परमात्मेति संशये पूर्वपक्षः—जीव एवायं, 'एष एव शारीर आत्मे' ति शारीरत्वश्रवणात्, 'तस्य प्रियमेव शिरः। मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः आनन्द आत्मा। ब्रह्मपुच्छं प्रतिष्ठे'ति प्रियमोदप्रमोदानन्दशब्दितेष्टवस्तुदर्शनतल्लाभतदुपयोगजन्यसुखतदनन्तरानुवर्तमानतृप्तिसुखसम्बन्धलिंगात्, यत्नसम्पादनीयभोग्यस्य जीवस्येव नित्यावाप्तसमस्तकामस्य ईश्वरस्य इष्टवस्तुलाभजन्यसुखविशेषाणामाशङ्काऽनास्पदत्वात्, 'तस्माद्वा एतस्मादात्मनआकाशस्संभूत' इत्यत्र तस्मादित्यनेन परामृष्टस्य प्रकृतस्य ब्रह्मणो जीवरूपत्वप्रतिपत्त्यर्थं 'एतस्मा' दिति निर्देशेन इदानीमनुभूयमानतायाः 'आत्मन' इति निर्देशेन लोकवेदप्रसिद्धात्मशब्दवाच्यतायाश्च स्फुटीकरणात्, तदनन्तरं लौकिकानामहंबुद्धिगोचरत्वेन आत्मशब्दवाच्यत्वशङ्कास्पदेषु अन्नप्राणमनोबुद्धिषु स्थूलारुन्धतीन्यायेन तद्बुद्ध्यवतारणाच्च, अन्नप्राणादिषु लौकिकानां ब्रह्मबुद्ध्यभावेन तेषु ब्रह्मविषयस्थूलारुन्धतीन्यायानवतारणात्। नच जीवस्य सर्गाद्यकाले स्वशरीरसृष्टेः प्राक् शरीराभावेन तत्साध्यसृष्टिसङ्कल्पानुपपत्तेः स्वशरीरसृष्ट्ययोगात् तन्मूलसृज्यान्तरसृष्ट्यसम्भवश्शङ्कनीयः, तदानीमप्यनादिलिङ्गशरीरसत्त्वेन ततएव सृष्टिसङ्कल्पस्य तन्मूलसृज्यवर्गस्य चोपपत्तेः, 'अभावं बादरिराह ह्येव' मित्यधिकरणे मुक्तानां शरीराभावदशायां सङ्कल्पजपित्रादिस्रष्टृत्वस्य ततएव उपपादयिष्यमाणत्वात्। ननु आनन्दमयोक्त्यनन्तरं 'ब्रह्म पुच्छं प्रतिष्ठे' ति ततोऽन्यदेव ब्रह्म श्रूयत इति चेन्न। 'प्रियमेव शिर' इत्यादिना जीवानन्दावयवानां मुक्त्यनन्तरं तदीयाखण्डानन्दस्य संसारदशायामावृतस्य तत्र ब्रह्मशब्देनाभिधानात्, तस्यैव च अखण्डानन्दस्य मुक्तिदशायामभिव्यक्तिः तद्वेदनफलत्वेन 'ब्रह्मणा विपश्चिते' ति ब्रह्मशब्देन प्रदर्शिता, तत्र हि भोग्यसाहित्ये तृतीया, न भोक्तृसाहित्ये, भोक्तृकर्तृकभोगस्य आनन्दमयोपासनाफलकोटौ निर्देशायोगात्। नच पुच्छब्रह्मणोजीवान्यत्वाभावे 'असन्नेव

सभवति अस्ति ब्रह्मेति चेद्वेद सन्तमेनन्ततो विदु ' रिति ब्रह्मसत्त्वासत्त्व-वेदनोक्तिर्नयुज्यते, जीवसत्त्वस्य सुप्रसिद्धत्वेन तस्यासत्त्वशङ्कानर्हत्वादि-ति वाच्यम् । अन्नमयादिश्लोकानां पुच्छवद्विषयत्वेन आनन्दमयपर्याय-श्लोकस्यापि पुच्छवदानन्दमयविषयतायाएव युक्तत्वात्, आनन्दमयस्य प्रि-यमोदादिमत्तया प्रसिद्धावपि ब्रह्मशब्दोक्ताखण्डानन्दवत्तया प्रसिध्यभा-वेन सत्त्वासत्त्ववेदनयोस्तद्विषयतोपपत्तेः। तस्मादानन्दवल्ल्यां जीवएव ज-गत्कारणत्वेन प्रतिपाद्यते, न तु तदतिरिक्तं ब्रह्म, एवंच तदनुसारेण कार-णवाक्यान्तराण्यपि जीव एव पर्यवस्यन्ति । अतएव सद्विद्यायां सच्छब्दे-न उपक्रान्तं जगत्कारणं वस्तु 'तत्त्वमसी' ति जीवरूपतयोपसंहृतमिति। एवं प्राप्ते सिद्धांतः–' यतोवाचोनिवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणोविद्वान्नबिभेतिकुतश्चने ' ति निरतिशयदशाशिरस्कत्वेन अभ्यस्य-मानो महानन्दो जीवेऽल्पसुखभागिनि असम्भाव्यमानः तदितरमीश्वरमा-श्रयमासाद्यैव निर्वृणोति। एवंभूतमहानन्दभागानन्दमय ईश्वर एव, न जी-वः, जीवस्याप्येवंभूत आनन्दोभ्युपेयत इत्युक्तमितिचेत्, सत्यमुक्तं दुरुक्तं तु तत्। 'युवास्यात्साधु युवाध्यायकः आशिष्ठो द्रढिष्ठोबलिष्ठः ' तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुषआनन्द' इत्युक्तलक्षणमा-नुषानन्दप्रभृतिप्राजापत्यानन्दान्तसकलप्राणिवर्गानन्दजातादधिकतमतया'ते ये शतं प्रजापतेरानन्दाः । सएकोब्रह्मणआनन्द' इति कीर्तितस्य आनंद-मयानन्दस्य पूर्ववाक्येषु तदपेक्षया अतिक्षुद्रानन्दभाक्त्वेन कीर्तिते जीववर्गे संभावनानर्हत्वात् । किञ्च 'तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरआत्मा-नंदमय' इति विज्ञानमयशब्दिताज्जीवादन्यत्वेनोपक्रांतस्य आनंदमयस्य कथं जीवत्वाशङ्का । न च विज्ञानमयशब्दोबुद्धिपरश्शङ्कनीयः, 'योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति' रित्यादिश्रुत्यन्तरेषु जीव एव प्रयोगात्, विज्ञानमयपर्याये 'विज्ञानं देवास्सर्वे ब्रह्मज्येष्ठमुपासत' इति केवलविज्ञान-शब्दोऽपि श्रूयत इति चेत्–तस्यापि 'योविज्ञाने तिष्ठ' न्नित्यादिश्रुत्यन्तरे-ष्विव जीवपरत्वात्, विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपिचे' ति तस्य यज्ञा-

दिषु कर्तृत्वश्रवणात्, बुद्धेस्तेषु करणत्वेन कर्तृत्वाभावात् । अपि च जीवमानंदमयं वदता तत्र मयडर्थः कइति वक्तव्यं, न विकारः, 'मयड्वैतयोर्भाषायामभक्ष्याच्छादनयो' रिति सूत्रेण भाषायामेव विकारावयवार्थयोर्मयड्विधानात्, कथन्तर्हि 'यस्य पर्णमयीजुहूर्भवती'त्यादिवैदिकप्रयोगः, 'द्व्यचश्छन्दसी'ति विधानांतरात् । इदं हि छन्दसिमयटोऽप्राप्तस्य च प्राप्त्यर्थं विधानं, कथंतर्हि वैदिको विज्ञानमयशब्दः, नात्रविकारार्थोमयट्प्रत्ययः, किन्तु विज्ञानशब्दोक्तबुद्धिवृत्तिप्राचुर्यार्थः, तस्माद्विकारार्थत्वासंभवात् आनंदमयेऽपि मयट्प्राचुर्यार्थएव वाच्यः । प्राचुर्यार्थत्वञ्च प्रागुदाहृतानंदमीमांसावाक्यशेषोपदर्शितप्रकारेण मानुषादिप्राजापत्यांतसकलजीववर्गसुखापेक्षया आधिक्यरूपमिति न कस्यापि जीवस्य आनन्दमयत्वशङ्कावकाशः । एतेन आनंदप्राचुर्यार्थकआनंदमयशब्दो जीवेऽप्युपपद्यते, सांसारिकदुःखलवभाजि मुक्त्यभिव्यंग्यमहानन्दवति जीवे समानाधिकरणदुःखाल्पत्वापेक्षाऽऽनन्दाधिक्यरूपप्राचुर्यार्थसंभवात् । प्राचुर्यार्थशब्दस्य उत्तरत्वे समानाधिकरणविजातीयाल्पत्वापेक्षमेव हि प्राचुर्यमर्थः, न तु 'प्रचुरब्राह्मणो ग्राम' इत्यत्रेव व्यधिकरणसजातीयाल्पत्वापेक्षं, तथैव व्युत्पत्तेरिति निरस्तम् । वाक्यशेषे व्यधिकरणसजातीयाल्पत्वापेक्ष एव प्राचुर्ये कीर्त्यमाने विधान्तरेण प्राचुर्यग्रहणायोगात् । अव्यवस्थितपौर्वापर्यस्य प्रचुरशब्दरूपस्य नामपदस्य उत्तरत्वे तथा व्युत्पत्तावपि 'तत्प्रकृतवचने मयडि' ति सूत्रविहितस्य नियतोत्तरभावस्य मयट्प्रत्ययस्य उत्तरत्वे तथा व्युत्पत्तिकल्पकाभावाच्च । तस्मादानन्दमयोब्रह्मैव । अत एव तस्योपक्रमे जीवोपास्यत्वनिर्देशः, 'योवेद निहितं गुहाया' मिति जीवासंभावितविविधद्रष्टृत्वरूपसार्वज्ञ्यनिर्देशः, 'सह ब्रह्मणा विपश्चिते' ति वाक्यशेषे च 'कोह्येवान्यात् कः प्राण्यात्–यदेषआकाशआनंदोनस्यात्–एषह्येवानन्दयाती' ति जीवानन्दयितृभावव्यपदेशः, 'सोकामयत बहुस्यां प्रजायेये' ति हिरण्यगर्भादिजीवासंभावितप्रधानानपेक्षस्वतन्त्रसृष्टिकामनाव्यपदेशः, 'रसोवैसः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती 'ति जीवास्वादनी-

यत्वव्यपदेशश्च। एतैरप्युपक्रमोपसंहारगतहेतुभिरानन्दमयो न जीवः, किंतु ब्रह्मैवेति प्रधानस्येव जीवस्यापि न सद्विद्यानंदवल्ल्यादिकारणवाक्यप्रतिपाद्यत्वमिति सिद्धम् ॥

संग्रहकारिकाः ॥

आनन्दमयस्तावज्जीवश्शारीरताश्रवणात् ।
स्रष्टाऽऽकाशादीनामात्मा यः प्रागुपक्रांतः ॥
आतस्सदपि सएव स्यादीक्षत्यादिसंभवात्तत्र ।
अतएव हि तत्वमसीत्युक्ता जीवात्मता तस्य ॥
मैवमभ्यस्यमानोहि जीवे शतगुणोत्तरः ।
आनन्दो नैव घटते परमात्मैव तेन सः ॥
विज्ञानमयपदोक्ताज्जीवादन्यत्ववचनाच्च ।
तद्भेदकधर्माणामाम्नानाद्वाक्यशेषेच ॥
शारीरव्यपदेशस्तत्वमसीति च विनिर्देशः ।
लभते सर्वशरीरे परमात्मन्यपि समञ्जसताम् ॥

इत्यानन्दमयाधिकरणम् ॥६॥

---

## अन्तस्तद्धर्मोपदेशात् ॥२१॥

## भेदव्यपदेशाच्चान्यः ॥२२॥

जगत्कारणं वस्तु ईक्षणश्रवणात् 'तत्वमसी' त्युपसंहाराच्च माभूत्प्रधानं माभूच्चजीवसामान्यं ततोभेदकनिर्देशात्, तथाप्युपचितपुण्यविशेषाणां ब्रह्मेन्द्रचन्द्रसूर्यादीनां विश्वामित्रादीनामृषीणाञ्च मध्ये यः कश्चिज्जीवविशेषः कल्पभेदेन स्यात्, तत्रानन्दवल्ल्युक्तजीवसामान्यव्यावर्तकसकलमहिमोपपत्तेरिति प्रत्यवस्थानात्सङ्गतिः । तत्र स्थालीपुलाकन्यायेन किञ्चिद्देवताविषयं वाक्यमुदाह्रियते—छान्दोग्ये—'अथ यएषोऽन्तरादित्ये हिरण्मयः पुरुषोदृश्यते हिरण्यश्मश्रुर्हिरण्यकेशआप्रणखात्सर्वएव सुवर्णः तस्य यथा

कप्यासं पुण्डरीकमेवमक्षिणी तस्योदितिनाम सएषसर्वेभ्यः पाप्मभ्यउदितः उदेति ह वै स सर्वेभ्यः पाप्मभ्योयएवं वेद तस्य ऋक्च सामच गेष्णा। वित्यादिना आदित्यमण्डलस्यांतरुपास्यः पुरुषोऽभिहितः, 'अथ य एषोऽन्तराक्षिणि पुरुषोदृश्यते सैव ऋक् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्यरूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नामेत्यादिना अक्ष्यन्तरुपास्यःपुरुषोऽभिहितः । अस्मिन् विद्याद्वये उपास्यः पुरुषः पुण्यविशेषेण आदित्यमण्डलाधिष्ठातृदेवतापदं प्राप्तोजीवविशेषइति सएव आनन्दवल्ल्युक्तसकलमहिमशाली समस्तकारणवाक्यविषयस्स्यात्, उत ततोऽन्यः परमात्मेति सएव कारणवाक्यानां विषयइति संशयः । आनंदवल्ल्यां 'भीषास्माद्वातः पवतेभीषोदेति सूर्यः' इति सूर्यभयहेतुत्वेन ततोभिन्नआनन्दमयः प्रदर्शितः, इह कथं सएवानन्दमयइति पूर्वपक्षस्यावकाशः । उच्यते- स्थालीपुलाकन्यायेन इह आदित्यजीवउदाहरणमित्युक्तं । ब्रह्मेन्द्रादयोऽपि वस्तुतइहोदाहरणानीति कल्पभेदेन यत्तेषां जगत्कारणत्वं पूर्वपक्ष्यभिमतं, तदासाद्य सूर्यभयहेतुत्वसमाम्नानञ्चरितार्थं स्यात् । इन्द्रादिभयहेतुत्वसमाम्नानस्यापि उपपत्तिरेवमेवानुसंधेया । अधिकरणव्युत्पाद्यन्यायस्य ब्रह्मेन्द्रादिसाधारण्येऽपि सिद्धांते मण्डलाभिमानिजीवातिरिक्तं ब्रह्म जगत्कारणं सिध्यत्, पुण्डरीकाक्षत्वलिङ्गेन भगवान् पुरुषोत्तम एवेत्यपि, एकयत्नेन सिध्यत्वित्यभिसन्धाय सूत्रकृता अन्तश्शब्देन अन्तरादित्यविद्याऽन्तराक्षिविद्याद्वयमिहोदाहरणमिति सूत्रितं । पूर्वपक्षस्तु— मण्डलाभिमानी जीव एवायं, नतु ततोऽन्यत्सिद्धान्त्यभिमतं ब्रह्म, शरीरश्रवणात्, कर्मनिमित्तंहिशरीरं, कथं कर्मरहितत्वेन सिद्धांताभ्युपगतस्य ब्रह्मणस्तदुपपद्यते । नच 'सएषसर्वेभ्यः पाप्मभ्यउदित' इति सर्वपापरहितत्वेन श्रुतस्य कथं कर्मनिमित्तं शरीरं स्यादिति शंकनीयं, त्रिविधं हि शरीरं, केवलपुण्यारब्धं सुखैकायतनं देवानां, केवलपापारब्धं दुःखैकायतनं स्थावरादीनां, पुण्यपापोभयारब्धं सुखदुःखोभयायतनं मनुष्यादीनां, एवं च 'न हवै देवात् पापं गच्छती' ति श्रुतेः देवानां अपापत्वेऽपि पु-

ण्यमात्रारब्धशरीरे न काचिदनुपपत्तिः । ननु सिद्धांत्यभिमतस्य ब्रह्मणो-ऽप्यन्तर्यामिभावेन जीवकर्मनिमित्तशरीरेषु हृदयदेशे अवस्थानलक्षणं शारीरत्वमुपपद्यत इति चेत्, उपपद्यतान्नाम, तद्यथाकथञ्चित्, इह न तथाभूतं शारीरत्वमुच्यते किंतु अतिरमणीयतया शरीरिणः स्पृहणीयं तस्य दिव्यभोगायतनं तेनाऽऽकेशमानखाग्रमनुप्रविष्टं यच्छरीरं तेन शरीरेण शरीरवत्वमुच्यते । अत्र 'हिरण्मयः पुरुष' इत्यादि 'एवमक्षिणी' इत्यन्तं तस्यातिरामणीयकं वर्णयदुदाहृतश्रुतिवचनमेव साक्षि, तस्मादत्यन्तोपाचितपुण्यविशेषलभ्यमिदं शरीरं जीवस्यैव संभवतीत्येवंरूपशरीरश्रवणादयं जीवएव, न तदतिरिक्ते ब्रह्मणि प्रमाणमस्तीति सएवानंदमयः । अतएव आनन्दवल्ल्यां श्रूयते 'सयश्चायं पुरुषे यश्चासावादित्ये सएक'इति । सिद्धांतस्तु-नेह श्रूयमाणं शरीरं कर्मनिमित्तं, शरीरिणस्सर्वपापोदयश्रवणात् सर्वेभ्यः पाप्मभ्य उदितत्वं । उदितत्वं हि नीडादुद्गतस्य शकुन्तस्य सर्वथा नीडसंबन्धराहित्यवत् सर्वपाप्मसंबंधराहित्यरूपं गौणं, मुख्यस्य पाप्मापादानकोद्गमनस्यासंभवात्, नच सर्वपापात्यन्ताभाववतः कर्मनिमित्तं शरीरं संभवति, नच पापाभावेऽपि पुण्यनिमित्तं शरीरं स्यादिति वाच्यं, इह पाप्मशब्दस्य पुण्यपापोभयसाधारणत्वात् । 'नैनं सेतुमहोरात्रे तरतः न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानो अतो निवर्तंत' इति ब्रह्मप्रकरणे पाप्मशब्दस्य सुकृतसाधारण्यश्रवणात्, मुमुक्षुं प्रति दुष्कृतवत् सुकृतस्यापि 'एते वै निरयास्तात स्थानस्य परमात्मन' इति भगवत्पराशरोक्तरीत्या अनिष्टफलत्वेन तस्यापि पाप्मशब्देन ग्रहणौचित्यात्, अलौकिकानिष्टफलसाधनत्वस्यैव पाप्मशब्दप्रवृत्तिनिमित्तत्वेन मुमुक्षुं प्रति तस्यापि पाप्मशब्दार्थत्वानिवारणाच्च । अथापि स्यात्–वेदांतेषु न पाप्मशब्दस्य जरामृत्युशोकसुकृतदुष्कृतसाधारण्यनियमोऽस्ति, 'न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतोनिवर्तंत' इत्येवं सङ्कीर्तनवत्येव दहरविद्याप्रकरणे 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोक' इति पाप्माभावमुक्त्वाऽपि पृथक् जरामृत्युशोकाभाव-

प्रतिपादनादिति, तथाऽपि 'स एष सर्वेभ्यः पाप्मभ्य उदित' इत्यत्र पाप्मशब्दस्सुकृतसाधारण एव वाच्यः, 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदे' ति सर्वपापोदयस्य तत्क्रतुन्यायानुसारिविद्याफलत्वश्रवणात्, सुकृतनिवृत्तेरपि विद्याफलत्वस्य चतुर्थाध्याये वक्ष्यमाणत्वात्। तस्मादिह श्रूयमाणं शरीरं न कर्मनिमित्तमिति, अकर्मनिमित्तातिरमणीयदिव्यमङ्गलविग्रहवत्त्वेन जीवे क्वचिदपि असम्भावितेन अयं मण्डले श्रूयमाणः पुरुषो जीवादन्यद्ब्रह्मैव, तच्च ब्रह्म पुण्डरीकाक्षत्वलिङ्गेन भगवान् पुरुषोत्तम एव। यद्यपि यास्केन वाक्यकारेण च 'तस्य यथा कप्यासं पुण्डरीकमेव मक्षिणी' इत्यस्य यथा कप्यासं सूर्यमण्डलं हृदयपुण्डरीकं च तस्योपासनास्थानं, एवमाक्षिणी अपि तस्योपासनास्थानमिति पुण्डरीकाक्षत्वलिंगास्पर्श्यपि अर्थान्तरमुक्तं, तथापि वैभवार्थं तत्क्लिष्टार्थान्तरवर्णनं। 'यएषएतस्मिन्मण्डले पुरुषः यश्चायन्दक्षिणेक्ष' न्निति बृहदारण्यके दक्षिणस्यैवाक्ष्णस्तदुपासनास्थानत्वप्रसिद्धेः पुण्डरीकाक्षत्वलिंगस्पर्श्येवार्थस्तस्याप्यभिमतः, तत्र तस्मिन्नर्थे च 'कप्यास'मित्यस्य तेन त्रेधार्थो वर्णितः। कं उदकं। स्वरंध्रैः पिबतीति कपिः– नाळः। तत्रास्त इति कप्यासम्। अभग्नक्रिमिकीटाद्यदष्टनाळमित्येकोर्थः। कपाइति सोमपाशब्दवत् प्रक्रियायां कपीति सप्तम्यन्तं भिन्नं वा पदम्। के जले प्यास्त इति' जलादनुद्धृतमित्यन्योर्थः। आसधातोः अपिपूर्वत्वे 'वष्टिवागुरिरल्लोपमवाप्योरुपसर्गयो' रित्यकारलोपे च सति प्यास्तइति रूपम्। कं उदकं रश्मिभिः पिबतीति कपिस्सूर्यः, तस्यासं विकास्यं, रविकरविकसितमित्यपरोर्थइति। अमुं त्रिविधमप्यर्थं गृहीत्वा वेदार्थसंग्रहे भाष्यकारैरस्यवाक्यस्यार्थोवर्णितः, 'गंभीरांभस्समुद्भूतसुमृष्टनाळरविकरविकसितपुण्डरीकदळामलायतेक्षण' इति। ननुएवंभूतोविग्रहः कथं अकर्मनिमित्तइत्यभ्युपगन्तव्यं, शरीराणां कर्मजन्यत्वनियमस्य लोके दृष्टत्वादिति चेत्, उच्यते– इहैव पापात्यन्ताभाववत्त्वेनोक्तस्य पुण्यपापोभयारब्धं शरीरन्तावद्वक्तुमशक्यं, पुण्यमात्रारब्धमुच्यते चेदपि लोकदृष्टस्य पुण्यपापोभयारब्धत्वनिय-

मस्य 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत' इति श्रुत्युपबृंहितस्य उल्लङ्घनमनिवार्यं । तथासति 'न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः ।' 'न तस्य प्राकृता मूर्तिः' 'जगतामुपकाराय न सा कर्म निमित्तजे' त्याद्युपबृंहणानुसारेण भगवतो दिव्यमङ्गलविग्रहो ऽप्राकृतः अकर्मनिमित्त इत्येव न्यायविद्भिरभ्युपगन्तुं युक्तं । लोकदृष्टनियमादुपबृंहणस्य बलवत्त्वात् । ननु उक्तन्यायः अन्तरादित्यवाक्यमात्रे वक्तुं शक्यः, नतु ब्रह्मेन्द्रादिमहामहिमप्रतिपादक वाक्येष्वपि, नहि हिरण्यगर्भपुरन्दरादिलोकेष्वपि आदित्यमण्डल इव भगवद्दिव्यमङ्गलविग्रहसन्निधानं प्रसिद्धश्रुतिष्वस्ति । उच्यते– ब्रह्मादिष्वन्यतम एव एकस्मिन् कल्पे पुण्यविशेषेण एवंभूतमैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति भाष्यवाक्यं ब्रह्मेन्द्रादिमहिमप्रतिपादकविषयवाक्यान्तरेष्वपि जीवपूर्वपक्षतदतिरिक्तब्रह्मगोचरसिद्धान्तौ प्रवर्तनीयावित्याशयेन प्रवृत्तं न भवति, किंतु यथाऽस्मिन्विषयवाक्ये आदित्यदेवतापदं प्राप्तो जीवः प्रतिपाद्य इति पूर्वपक्षः, एवमस्मिन्नेव विषयवाक्ये शक्रः प्रतिपाद्यः, हिरण्यगर्भः प्रतिपाद्य इत्येवं रूपेण पूर्वपक्षान्तरमपि प्रवर्तनीयमित्याशयेन, तद्वा कथं सङ्गच्छते, इत्थं–' यदद्य कच्चवृत्रहन्नुदगा अभिसूर्य । सर्वं तदिन्द्र ते वश ' इति मन्त्रवर्णात् आदित्यमण्डलाधिष्ठाता शक्र इति प्रतीयते । ' असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवतां । तद्यद्रजतं सेयं पृथिवी यत्सुवर्णं सा द्यौर्यज्जरायु ते पर्वताः यदुल्बं स मेघो नीहारो याधमनयस्ता नद्यो यद्वास्तेयमुदकं स समुद्रः । अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन् सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयनं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणिच भूतानि सर्वे च कामा'इति छान्दोग्यवाक्यसन्दर्भादादित्यं जीवो हिरण्यगर्भ इत्यपि प्रतीयत इति । अपिच ' येचामुष्मात्पराञ्चो लोका-

स्तेषां चेष्टे देवकामानां च यैचैतदस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानाञ्चे' ति सकललोकेश्वरत्वसकलदेवमनुष्याभीप्सितत्वफलप्रदानशक्तत्वश्रवणादपि नायमक्ष्यादित्यान्तर्वर्त्तिपुरुषोजीवः, यद्यपि देवलोककामेश्वरत्वमनुष्यलोककामेश्वरत्वञ्च अक्ष्यादित्यस्थानभेदेन विभज्य श्रुतं, तथापि स्थानद्वयमेकएव पुरुषोऽधितिष्ठतीति तत्प्राप्नुवत् द्विविधलोककामेश्वरत्वं सर्वलोककामेश्वरत्वरूपतया पर्यवस्यति एवं ऋक्सामगेष्णत्वश्रवणादपि नायं जीवः, गेष्णशब्दोगानवाची, गानं द्विविधं, शब्दकर्मकमेकं यथा पद्यं गायतीति अर्थकर्मकमेकं यथा राजानं गायतीति, इहार्थकर्मकगानरूपत्वमृक्सामयोर्विवक्षितं, तच्चात्र सामरूपगीतिक्रियाभिव्यंग्यं ऋक्साध्यगुणिनिष्ठगुणाभिधानरूपस्तुत्युपायत्वमृक्सामसाधारणं, एवञ्च आदित्यपुरुषस्य स्तुतौ ऋक्साक्षात्साधनं, साम ऋगभिव्यक्तिद्वारा, 'साम्नास्तुवीते' ति साम्नोपि स्तुतिसाधनत्वश्रवणात् इत्युभयोरपि क्रमिकस्तुतिसाधनतया गानत्वमित्यादित्यपुरुषस्य ऋक्सामसाध्यस्तुति विषयाग्नीन्द्रसोमादिरूपतया सार्वात्म्यसिद्धिः । यद्यपि प्रस्तावादिसामभक्त्यवयवरूपे सामगानां पर्वेत्येव प्रसिद्धे साम्नामपच्छेदे गेष्णाख्या तेषां प्रसिद्धा, और्त्थिक्याख्ये सामपर्वलक्षणग्रंथेपि तथैव व्यवहारः, तथापि क्रमिकस्तोत्रसाधनत्वसादृश्यात् ऋक्सामयोर्गेष्णद्वयतोपचारः, तस्मादृक्सामगेष्णत्वप्रतीतसार्वात्म्यासंभवात्, 'य आदित्ये तिष्ठ' न्नित्याद्यन्तर्यामिब्राह्मणे भेदव्यपदेशाच्च, नादित्यपुरुषोजीवः, किंतु तदतिरिक्तं ब्रह्मेत्यभ्युपगन्तव्यमिति ॥

संग्रहकारिकाः ॥

अन्तर्मार्त्ताण्डवर्त्ती तनुमाधिवसति श्मश्रुकेशादियुक्तां
तादृक्कर्मानुबन्धात्खलु भवति तनुस्तेन तावत्स जीवः ।
एवं चानन्दवल्ली परिपठितजगत्कारणं जीव एव
स्यात्तस्यामेव तेन स्फुटतरमभिदा तस्य यत्प्रत्यपादि ॥
न खलु सुकृतपापान्युत्तरे त्कोऽपि जीवो
विधुतसकलपापो यद्यपि स्यादमर्त्यः ।

उपनिषदुपगीतः पाप्मशब्दोऽभिधत्ते
सुकृतमपि निमित्ता भेदतः पापतुल्यम् ॥
तत्सर्वपाप्मोदयलिङ्गदर्शनाद्देवोन्तरादित्यगतः परः पुमान् ।
अप्राकृतं रूपममुष्य विश्रुतं व्यूहावतार प्रमुखाश्च तादृशाः ॥
इति अन्तराधिकरणम् ॥

---

एवं सद्विद्यानन्दवल्लीप्रतिपाद्यं जगत्कारणं वस्तु जीव इति तल्लिङ्गावलम्बनपूर्वपक्षावान्तरपेटिका वृत्ता, अथ तज्जगत्कारणं वस्तु आकाशादिकमेव, न ततोऽन्यज्जगत्कारणं ब्रह्मनामास्तीति श्रुत्यवलम्बनपूर्वपक्षमवान्तरपेटिकान्तरं प्रस्तूयते ॥

## आकाशस्तल्लिङ्गात् ॥२३॥

पूर्वमादित्यपुरुषस्य वैशेषिकलिङ्गात् वेदान्तवेद्यजगत्कारणत्वमुक्तम् । तदयुक्तम् । लिङ्गतः प्रबलया श्रुत्या भूताकाशस्यैव जगत्कारणत्वादित्याक्षेपेणोत्थानादवान्तरसङ्गतिः । छांदोग्ये — 'अस्य लोकस्य कागति' रिति पृष्टवन्तं दाल्भ्यं प्रति 'आकाश इति होवाचे' ति जैवलेरुत्तरमुपक्रम्य श्रूयते 'सर्वाणि ह वा इमानि भूतान्याकाशादेवसमुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायण'मिति । किमयमाकाशोभूताकाशः, उत तदरिक्तः परमात्मेति भूताकाशस्य श्रूयमाणसर्वभूतोत्पत्तिस्थितिलयकारणत्वयोग्यत्वायोग्यत्वाभ्यां संशयः । तत्र पूर्वः पक्षः । भूताकाशएवायं, आकाशश्रुतेस्तत्ररूढत्वात्, अतो 'यतोवा इमानि भूतानि जायन्त'इत्यादिलक्षणलक्षितजगत्कारणं ब्रह्म भूताकाशएव, सर्वभूतोत्पत्तिस्थितिलयकारणत्वस्य तत्रोक्तलक्षणस्यैव अत्र 'सर्वाणि ह वा इमानि भूतानी' त्यादिना भूताकाशपर्यवसानवर्णनात्, तस्य क्वचिद्विशेषे पर्यवसानसाकांक्षत्वाच्च । ननु भृगुवल्यामेव 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिनाऽऽनन्दरूपे विशेषे पर्यवसानमुक्तम् । मै-

वं-तत्रहि 'को ह्येवान्यात्कः प्राण्यात् । यदेष आकाशआनन्दोनस्या' दित्यानन्दशब्द आकाशशब्दसमानाधिकरणश्श्रुतः, ततश्च विरुद्धार्थयो स्तयोरुभयोरपि मुख्यतया सामानाधिकरण्यायोगात् । कि मानन्दशब्दो गौणः उत आकाशशब्दइत्यत्र विनिगमनाश्रवणात् । तत्र जगत्कारणत्वस्य लक्षणस्य कविशेषे पर्यवसानमिति नास्ति निर्णयइत्याशङ्कय आकाशश्रुत्या भूताकाशएव जगत्कारणमिति निश्चिते तत्र आनन्दशब्दो गौणइतीहैव निर्णयः । ननु अचेतनस्य भूताकाशस्य जगत्कारणत्वं कथमिहाशङ्कयते, सद्विद्यानन्दवल्लीश्रुतचेतनलिङ्गबलादानन्दमयशब्दोक्तं जगत्कारणं वस्तु चेतनविशेषएवेति हि प्राक् स्थितं, सत्यम् । सदानन्दशब्दौ चेतनेऽपि योजयितुं शक्यौ, लिङ्गानुसारेण तथा योजितौ, इह तु भूताकाशे रूढाकाशश्रुतिः लिङ्गानुसारेण योजयितुं न युक्ता । ईक्षितृत्वादिलिङ्गमेव 'कूलं पिपतिषती'त्यादिन्यायेन भूताकाशे योज्यमित्याक्षेपः । ननु 'आत्मन आकाशस्सम्भूत' इत्युत्पत्तिमत्वेन श्रुतस्य भूताकाशस्य कथं सर्वभूतस्थितिलय कारणत्वरूपलक्षणसम्बन्धोपपत्तिः, इत्थं- तत्र 'आत्मन' इति स्वस्मादेव शब्दतन्मात्ररूप सूक्ष्मावस्थात् स्थूलावस्थोभूताकाशस्सम्भूतइति तदर्थः । आत्मशब्दस्य शरीरप्रतिसंबंधिनि चेतनइव 'मृदात्मकोघटइत्यादिषु स्वरूपेऽपि प्रयोगात्, आत्मा जीवे धृतौ देहे स्वभावे परमात्मनी' त्यादिकोशेषु तस्य नानार्थत्वानुशासनात् । तस्मात् भूताकाशस्यैव जगत्कारणत्वरूप ब्रह्मलक्षणपर्यवसाननिर्णये यत् सद्विद्यानन्दवल्ली भृगुवल्लीषु जगत्कारणवस्तुपरं ब्रह्मपदं श्रुतम्, तत्सर्वंभूताकाशपरमेव । अतएव 'आकाशोहवै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे' ति वाक्यान्तरे तस्मिन् ब्रह्मपदंश्रूयतइति । एवं प्राप्ते सिद्धांतः- अयमाकाशोभूताकाशादन्यः परमात्मैव, भूताकाशासंभावितसर्वभूतकारणत्वश्रवणात्, तद्धिसर्वप्राणिवर्गकारणत्वं, 'यतोवा इमानि भूतानिजायंते येन जातानि जीवन्ती'ति लक्षणवाक्यार्थैकरूप्यात् । न च भूताकाशस्य अचेतनवर्गकारणत्वसंभवेपि चेतनकारणत्वमुपपद्यते ॥ न च परायणत्वं चेतनानां परमप्राप्यत्वमचेतन-

स्य अपुरुषार्थस्य हेयस्य भूताकाशस्य घटते । न वा सर्वतोज्यायस्त्वं, तद्विकल्याणगुणैस्सर्वेभ्योनिरतिशयोत्कृष्टत्वं, न च जगत्कारणविशेषाकांक्षायामाकाशशब्देन विशेषसमर्पणात् इदं सर्वं भूताकाशएव यथाकथञ्चिद्वक्तव्यमिति वाच्यं । 'सर्वाणि ह वे'ति वाक्येन ह्यत्र कारणत्वं न विधीयते, हवैशब्देन प्रसिद्ध्यर्थकेन वाक्यांतरप्रसिद्धार्थानुवादत्वद्योतनात्, अतः पुरोवादाकांक्षायां 'सन्मूलास्सोम्येमास्सर्वाः प्रजा' इत्यादिवाक्यमेव पुरोवादत्त्वेनावतिष्ठतइति तत्रेक्षितृत्वादिभिश्चेतनत्वेन सिद्धं सच्छब्दाभिधेयं कारणं वस्विह आकाशशब्देन परामृश्यतइति वक्तव्यत्वात्, 'आत्मनआकाशस्संभूत' इत्यत्र आत्मशब्दस्य शरीरप्रतिसंबंधिनि चेतने प्रसिद्धिप्राचुर्येण 'तस्यैषएव शारीरआत्मे' ति शारीरत्वश्रवणेन च चेतनपरत्वावश्यंभावात्, स्वस्मादेव आकाशउत्पन्नइत्यर्थानुपपत्त्या भूताकाशस्य सर्वभूतकारणत्वान्वयायोग्यत्वाच्च, न भूताकाशोयं, किंतु तदतिरिक्तं ब्रह्मैवेति तस्मिन्नेव आकाशशब्दस्य आसमन्तात्काशत इत्यादिरूपेण योगवृत्तिरास्थेया, पुरोवादानुसारेण अनुवादे रूढिभङ्गस्य अदोषत्वात्, योग्यार्थश्रुतिमूललिङ्गात् अयोग्यार्थपदरूढिभङ्गस्य गङ्गाघोषादौ दृष्टत्वाच्चेति ॥

सङ्ग्रहकारिकाः ॥

अव्यक्तं जीवो वा माभूज्जगतोऽस्य कारणमथापि ।
आकाशस्स्यादेव छान्दोग्ये स हि तथाऽऽम्नातः ॥
आत्मन आकाश इति स्वात्मन एवेत्यनन्यजनितोक्ता ।
प्रथमश्रुत्यनुसारात्तत्रानन्दश्रुतिर्गौणी ।
मैवं छान्दोग्यश्रुतिरनुवादः खलु ह वै शब्दात् ।
सतु सत्कारणमेव प्रतिपन्नं सेवते पुरोवादात् ॥

इति आकाशाधिकरणम् ॥८॥

---

## अत एव प्राणः ॥२४॥

छान्दोग्ये कस्यचिद्राज्ञः क्रतौ समागतस्य उषस्तेः प्रस्तावभक्तिदेवताप्रश्ने तामजानानेन प्रस्तोत्रा 'कतमा सा देवते' ति पृष्टस्य उषस्तेः 'प्राणइति होवाचे' ति उत्तरमुपक्रम्य श्रूयते 'सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशंति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ते' ति अतिदेशाधिकरणस्यास्य पूर्वाधिकरणवत् पूर्वोत्तरपक्षौ। प्राणश्रुतेः प्राणवायुरेव सर्वभूतलयोत्पत्तिकारणमिति प्राप्ते। ह वै शब्देन तदनुवाद्यत्वद्योतनात् पुरोवादानुसारेण योग्यतानुसारेण च प्राणवाय्वतिरिक्तः परमात्मैव सर्वभूतलयोत्पत्तिकारणभूतः प्राणइति। अतिदेशस्य तु सर्वस्य भूतजातस्य प्राणाधीन स्थितिप्रवृत्त्यादिदर्शनात् प्रसिद्धएव वायुः सर्वभूतलयोत्पत्तिकारणतामर्हति, साक्षाच्च बृहदारण्यके 'यदा वै पुरुषस्स्वपिति प्राणन्तर्हिं वागप्येति प्राणञ्चक्षुः प्राणं श्रोत्रं प्राणं मनः सयदा प्रबुध्यते प्राणादेवाऽथ पुनर्जायत' इति स्वापप्रबोधयोः प्राणवायुस्सर्वभूतलयोत्पत्तिस्थानामिति श्रवणाच्चेत्यधिकाऽऽशङ्कानिरासः प्रयोजनम्। तन्निरासस्तु चेतनवर्गं प्रति प्राणवायोः कारणत्वाऽयोगात्, आनंदवल्ल्यां चेतनविशेषोत्पन्नादाकाशादुत्पन्नत्वेन श्रुतस्य तस्य सर्वाचेतनकारणत्वायोगाच्च, न तस्य सर्वभूतलयोत्पत्तिस्थानत्वनिर्देशार्हता। अत एव बृहदारण्यकोक्तप्राणोऽपि परमात्मैवेति॥

सङ्ग्रहकारिका॥

एवं तस्यां प्राणवाक्यादनूक्तेः प्राणेपिस्यान्नैवतत्कारणत्वं।
प्राणाधीनं दृश्यतां देहमात्रं नैवं भूतं जीववर्गादिदृष्टम्॥

इति प्राणाधिकरणम्॥९॥

---

एवं केवलश्रुत्यवलम्बनपूर्वपक्षावान्तरपेटिकावृत्ता— अथ कारणत्वाक्षेपकलिङ्गानुगृहीतश्रुत्यवलम्बनमवान्तरपेटिकान्तरं प्रस्तूयते॥

## ज्योतिश्चरणाभिधानात्॥२५॥

**छन्दोभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम् ॥२६॥**

**भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥२७॥**

**उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥२८॥**

छन्दोगास्समामनन्ति । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वावतद्यदिदमस्मिन्नन्तःपुरुषे ज्योति' रिति । अत्र आकाशप्राणवाक्ययोः स वाय्वाकाश-सर्वभूतकारणत्वश्रवणवत् इह सज्योतिष्कसर्वकार्यकारणत्वाश्रवणेन विरोधाभावात्, विरोधभावे श्रुत्यवलंबनायोगात्, प्रसिद्धमादित्याद्येव ज्योतिरस्त्विति आक्षेपेणोत्थानादवान्तरसङ्गतिः । ननु यदीहप्रसिद्धमादित्याद्येव ज्योतिरिति पूर्वपक्षः क्रियते, कस्तेन सिद्धान्तस्योपमर्दश्शङ्कितो भवति । न हि ज्योतिरिह जगत्कारणं श्रूयते, येनादित्याद्येव जगत्कारणं न ततोऽन्यज्जगत्कारणं ब्रह्मास्तीति सिद्धान्तोपमर्दश्शङ्कितस्स्यात् । अथोच्येत–निरतिशयदीप्तियोग इह श्रूयमाणः कारणत्वाक्षेपकं लिङ्गं, 'न तत्र सूर्यो भाति' 'तस्य भासा सर्वमिदं विभाती'ति प्रकरणे 'तथाक्षरात्संभवतीह विश्व'मिति निरतिशयदीप्तियुक्तवस्तुनः कारणत्वश्रवणादिति। यदि सूर्यचन्द्राद्यभिभावकं प्राकृततेजोरूपं मुण्डके श्रुतं, जगत्कारणं वस्त्विह निरतिशयदीप्तियुक्तज्योतिः ज्योतिश्शब्दार्थः पूर्वपक्षिणा गृह्यते, कथन्तर्हि आदित्यादिकमिह ज्योतिरिति पूर्वपक्षः क्रियते, नह्यादित्यादिरेव आदित्याद्यभिभावकज्योतिरित्येतद्घटते । उच्यते– 'न तत्र सूर्यो भाती' ति मन्त्रेण सूर्याद्यभिभावकत्वन्नोच्यते, किंतु सूर्याद्यभास्यत्वं, 'नतद्भासयते सूर्यो न शशांको न पावक' इति गीतावचनेनैव सूर्याद्यभास्यत्वञ्च सूर्यादेरपि संभवतीति पूर्वपक्ष्याशयः । इह ज्योतिः किमादित्यादि उत तदतिरिक्तं ब्रह्मेति प्रसिद्धिभूतचरणत्वाभ्यां संशये पूर्वपक्षः । आदित्याद्येव ज्योतिः, प्रसिद्ध्यतिलङ्घनायोगात्, 'इदं वा व तद्यदिदमस्मिन्नन्तः पुरुषे ज्योति'

रिति जाठरैक्योपदेशाच्च । प्राकृतज्योतिष्ष्वेवहि तत्साजात्याभिप्रायेण तदैक्योपदेशोघटते । नच 'विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषु लोकेष्वि' ति श्रुतसर्वोत्तरात्युत्तमलोकप्रसृमरदीप्तिमत्वमादित्यादेर्न घटत इति वाच्यं । विश्वतः पृथिवीलोकात् सर्वतोन्तरिक्षलोकाच्च उपरितनेष्वत्युत्तमेषु द्युलोकेष्वादित्यस्यापि रश्मिप्रसृतिसद्भावात्, तस्मान्निरतिशयदीप्तिरूपलिङ्गाक्षिप्तं जगत्कारणत्वमादित्यादिज्योतिष एवेति न ततोन्यज्जगत्कारणं ब्रह्म नामास्तीत्येवं प्राप्तेसिद्धांतः– ज्योतिरिह प्रसिद्धज्योतिरतिरिक्तं ब्रह्मैव, पूर्वत्र 'पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतंदिवी' ति सर्वभूतपादत्वाभिधानात् तस्य च प्रसिद्धज्योतिष्यसंभवात्, पूर्वत्र यस्य सर्वभूतपादत्वमभिहितं तदेवेह ज्योतिश्शब्देन परामृश्यतइति द्युसंबन्धप्रत्यभिज्ञानेनावगमात् । जाठरैक्योपदेशस्तु फलाय तदात्मकत्वानुसन्धानविधानार्थः । 'तदेतद्दृष्टञ्च श्रुतञ्चेत्युपासीत चक्षुष्यश्श्रुतो भवती' त्यग्रे तथा विधानदर्शनादिति न तेन तस्य प्राकृतज्योतिष्ट्वसिद्धिः । ननु पूर्वत्र 'गायत्री वा इदं सर्वं' मित्युपक्रम्य 'सैषा चतुष्पदे' ति तस्याश्चतुष्पदत्वमभिधाय 'तदेतदृचाभ्यनूक्तं तावानस्य महिमा– ततोज्यायांश्च पूरुषः पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतन्दिवी' त्युक्तार्थे प्रमाणत्वेन अस्य मन्त्रस्योदाहृतत्वात् गायत्रीविषयोऽयं मन्त्रः, अतो नैतद्गतेन सर्वभूतपादत्वाभिधानेन तथाभूतपरमात्मसिद्धिरिति चेत् । मैवं– न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते, छन्दसस्सर्वभूतपादत्वासंभवात्, अपितु ब्रह्मणि गायत्रीसादृश्यानुसन्धानमिहफलायोपदिश्यते, अस्तिच 'पादोस्य सर्वाभूतानि त्रिपादस्यामृतंदिवी'ति चतुष्पादत्वेनाम्नातस्य ब्रह्मणश्चतुष्पदया गायत्र्या सादृश्शं, अस्ति हि चतुष्पदापि गायत्री । 'इन्द्रश्शचीपतिः । वलेन पीडितः । दुश्च्यवनो वृषा । समित्सु सासहि'रिति तथा ह्यन्यत्रापि गायत्रीसादृश्यात् छन्दोऽभिधायि शब्दः अर्थान्तरे प्रयुज्यमानो दृश्यते । यथा संवर्गविद्यायां 'ते वा एते पञ्चान्ये पञ्चान्ये दश सन्त' इत्यारभ्य 'सैषा विराडि' त्युक्तं, अत्र हि वायुस्सूर्यश्चन्द्रोऽग्निराप इत्येते पञ्च, प्राणो वाक्चक्षुश्श्रोत्रं मन

इत्येते पञ्च, इत्येतेषु दशसु संख्यासाम्यात् विराट् छन्दोरूपत्वमुक्तं, दशाक्षरं हि विराट्छन्दः । किञ्च भूतपृथिवीशरीरहृदयानि निर्दिश्य 'सैषा चतुष्पदे' ति भूतादिचतुष्टयपादत्वव्यपदेशादपि गायत्रीशब्दोक्तः परमात्मैव । छंदसस्तथात्वानुपपत्तेः । ननु अस्तु यत्किञ्चित्सर्वभूतपादं वस्तु-पूर्वत्राभिहितं, तथापि न तस्येह प्रत्यभिज्ञानं, 'दिवि' 'दिव' इति निर्देशभेदादिति चेन्न । निर्देशभेदेऽपि अर्थविरोधाभावात्, वृक्षाग्रस्थिते श्येने वृक्षात्परश्श्येनइत्यपि व्यपदेशदर्शनात्, तस्मात् 'तावानस्य महिमे' ति मंत्रप्रत्यभिज्ञापितपुरुषसूक्तप्रतिपाद्यं 'आदित्यवर्णं तमसस्तु पार' इति निरतिशयदीप्तियुक्तदिव्यमङ्गळविग्रहवत्वेन तत्र प्रतिपन्नं यत्परमपुरुषाख्यं परं ब्रह्म तदेवात्र निरतिशयदीप्तियुक्तं ज्योतिरिति निर्दिश्यते । ननु, पुरुषसूक्तेनैव सकलचेतनाचेतनप्रपञ्चविलक्षणः तस्य सर्वस्यापि कारणभूतः परमपुरुषः परंब्रह्मेति सिद्ध्यतीति किमर्थोयमयोगव्यवच्छेदार्थः पादः । उच्यते- बहुषु श्रुत्यन्तरेषु प्राणाकाशज्योतिरिन्द्रादिशब्दैः कारणवस्तुनिर्देशे जाग्रति पुरुषसूक्तमात्रेण तत्प्रतिपाद्यं परमपुरुषो जगत्कारणं ब्रह्मेत्येतत् न दृढीभवतीति तद्दृढीकरणार्थ एवायमयोगव्यवच्छेदार्थो विचारः ॥

संग्रहकारिका ॥

परं ज्योतिस्साम्निश्रुतमुदरवह्न्यात्मकतया
परं ज्योतिष्टं च प्रथितमिह नः कारणगतम् ।
अतो भानुर्लिङ्गाद्भवतु जगतां कारणमिति
प्रवास्या शङ्केयं पुरुषचरणोक्त्या विशदया ॥

इति ज्योतिरधिकरणम् ॥१०॥

---

## प्राणस्तथानुगमात् ॥२९॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा-ह्यस्मिन् ॥३०॥

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥३१॥
## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥

कौषीतकिनामुपनिषदि 'प्रतर्दनो हवै दैवोदासिरिन्द्रस्य प्रियं धामोपजगामे'त्युपक्रम्य 'वरं वृणीष्वे'त्युक्तवति इन्द्रे 'त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस' इति मनुष्याय मह्यं हिततमं वरं त्वमेव जानासि; अतस्तादृशं वरं त्वमेव विचिंत्य मह्यन्देहीति प्रतर्दनेन प्रार्थितस्येन्द्रस्य वचनं श्रूयते– 'सहोवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे'ति । तत्र संशयः– किमिह हिततमोपासनकर्मभूतइन्द्रप्राणशब्दानिर्दिष्टः प्रसिद्धेन्द्रजीवः, उत तदतिरिक्तः परमात्मेति । तत्र पूर्वः पक्षः– 'प्राणाकाशवाक्ययोस्तत्तद्वाक्यएव प्राणाकाशश्रुतिविरोधिसर्वभूतकारणत्वश्रवणवत् ज्योतिर्वाक्ये प्राक् ज्योतिःश्रुतिविरोधिसर्वभूतपादत्वश्रवणवच्च नेह स्ववाक्ये ततः पूर्वं वा इन्द्रश्रुतिविरोधिश्रवणमस्ति, प्रत्युत इन्द्रवाक्योपक्रमएव इंद्रस्य हिततमशब्दोक्तामृतत्वप्राप्त्युपायोपासनाकर्मत्वश्रवणमस्ति, तथाभूतोपासनाकर्मत्वञ्च जगत्कारणत्वव्याप्तं लिंगमिति 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ संपत्स्य' इति सद्विद्यावाक्यावगतं, तस्मादिन्द्राख्यो जीवविशेषएव जगत्कारणं, न तदतिरिक्तः परमात्माऽस्ती'ति । एवं प्राप्ते सिद्धांतः– अयमिन्द्रप्राणशब्दानिर्दिष्टो न जीवमात्रं, अपितु जीवादर्थान्तरभूतं ब्रह्म 'सएष प्राणएव प्रज्ञाऽऽत्माऽऽनंदोऽजरोऽमृत'इति इन्द्रप्राणशब्दाभ्यां प्रस्तुतस्य सकलजीवासंभावितधर्मनिर्देशात् । ननु उपक्रमे 'मामेव विजानीही'ति इन्द्रस्सावधारणं स्वात्मानमेव उपास्यमुपदिदेश, तदुपपत्त्यर्थं 'त्वाष्ट्रमहनं अरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छं बह्वीस्सन्धाअतिक्रम्य दिवि प्राह्लादीनतृणहं अन्तरिक्षे पौलोमान् पृथिव्यां कालकञ्जान् तस्य मे न लोमच मीयत'इति त्वाष्ट्रवधादिभिरकृत्यैः स्वस्य लोमाऽपि नहिंस्यत इति महामहिमवत्त्वेन स्वात्मानं तुष्टाव । तस्मादुपक्रमे जीवविशेष उपास्य इति निर्णये सति तदनुसारेण औपसंहारिकं आनन्दाजरामृतत्वश्रवणं स्तावकतया

नेतव्यमितिचेत् मैवं । सकलजीवासंभाविताध्यात्मसंबन्धभूयस्त्वं हि अस्मिन् प्रकरणे दृश्यते । तथाहि– प्रथमं 'त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस' इति पृष्टवन्तं प्रति 'मामेव विजानीहि एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीया' दिति परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं इन्द्रप्राणशब्दनिर्दिष्टस्योच्यते, तदुपपादकञ्च पुष्करपलाशवाक्यप्रतिपन्नं सर्वपापाश्लेषफलमुपवर्ण्यते 'सयोमां विजानीयात् नास्य केन च कर्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यये' ति । अथापि स्यात् इन्द्रस्यैव एवंभूतफलप्रदानसामर्थ्यमस्त्विति हि पूर्वपक्षः क्रियते– 'इन्द्रोराजा जगतोय ईशे इन्द्रोराजा जगतश्चर्षणीनां । इन्द्रोयातोवसितस्य राजा न त्वावामन्यो दिव्यो नपार्थिवो नजातोनजनिष्यत' इत्यादिषु महामहिमत्वञ्च तस्य श्रूयते, का तस्यामृतत्वसाधनोपासनाकर्मत्वानुपपत्तिरिति । तथाऽपि 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरावर्पिताएवमेवैताभूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राःप्राणेऽर्पिता' इति भूतमात्राशब्दोदितानामचेतनानां प्रज्ञामात्राशब्दोदितेषु चेतनेषु प्रतिष्ठितत्वमभिधाय यत्तेषामपि प्राणे प्रतिष्ठितत्वमभिधीयते तत् 'प्राणोऽस्मी'त्यादेः प्रसिद्धेन्द्रातिरिक्तपरमात्मविषयतामन्तरेण नोपपद्यते । न हि देवताऽधिकरणन्यायेन मुक्त्यर्थीन्द्रः कश्चिदुपासनेन अप्रसाद्य स्वयं मुक्तिं लभेत, अतः प्रसिद्धेन्द्रातिरिक्तपरमात्मोपासनमेव इन्द्रेण 'मामुपास्वे'त्युपदिष्टं, तेन स्वक्रियमाणमुक्त्यर्थोपासनावान्तरफलभूतः सर्वपापाश्लेषः 'त्रिशीर्षाण' मित्यादिनोपन्यस्त इत्येव श्लिष्टतरं । एवञ्च 'सन साधुना कर्मणा भूयान्नोएवासाधुना कनीयान् एषह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष उएवासाधु कर्म कारयति तं यमधो निनीषते एषलोकाधिपतिरेष लोकपाल एष लोकेश' इति मध्यगतान्यपि सकलजीवासंभावितसाध्वसाधुकर्मप्रयुक्त भूयस्त्वकनीयस्त्वराहित्यादिवचनानि सङ्गच्छंते । तस्मान्मामुपास्वेति उपासनकर्मतया उपदिष्टः इन्द्रजीवातिरिक्तः परमात्मैव । कथन्तर्हीन्द्रेण मामुपास्वेत्युपदिष्टं 'एष सर्वभूतान्तरात्मा अपह-

तपाप्मा दिव्यो देव एको नारायण' इत्यादिशास्त्रदृष्ट्या स्वान्तर्यामिण उपास्यत्वाभिप्रायेण, यथाऽहमादिपदानां तत्तच्छरीरकपरमात्मपर्यंतत्वं जानता वामदेवेन स्वांतर्यामिणः स्वात्म्याभिप्रायेण अहं मनुसूर्यादिसर्वात्मभाव उपदिष्टः। तथाहि श्रूयते— 'तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे' त्यादि। ननु कथमिह अध्यात्मसंबन्धभूयस्त्वं, 'न वाचं विजिज्ञासीत वक्तारं विद्यात्, त्रिशीर्षाणं त्वाष्ट्रमहनं, यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायु' रित्यादिजीवमुख्यप्राणलिंगानामत्र सत्त्वादिति चेत् उच्यते— परमात्मन एव त्रिविधमिहोपासनं विवक्षितं। तत्र 'आनंदोऽजरोऽमृत' इति स्वरूपेणोपासनं, जीवलिंगवाक्यैः चिद्विशिष्टतयोपासनं, मुख्यप्राणलिंगैरचिद्विशिष्टतयोपासनञ्चेति। अन्यत्रापि त्रिविधमुपासनं दृश्यते, यथा आनन्दवल्ल्यां— 'सत्यं ज्ञानमनंतं ब्रह्मे' त्यादौ स्वरूपेणोपासनं 'तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्चत्यच्चाभवत् निरुक्तञ्चानिरुक्तञ्च निलयनञ्चानिलयनञ्च विज्ञानञ्चाविज्ञानञ्चे' त्यादिषु चेतनविशिष्टत्वेन अचेतनविशिष्टत्वेन चोपासनं, एवमिहापि परमात्मनस्त्रिविधोपासनसमाश्रयणमुपपद्यत इति सर्वमनवद्यम्।

संग्रहकारिका।

स्यादिंद्रस्त्विहकारणं हिततमोपासैककर्मत्वतो
नैतत्साध्वजरामृताद्यनुगमादग्रे तदुक्त्यात्मकात्।
इन्द्रस्य स्वशरीरकेश्वरदृशा मामित्युपास्यास्पदे
निर्देशो घटते ततोऽस्य चिदचिद्भिन्नं परं कारणम्॥

इति इन्द्रप्राणाधिकरणम्॥११॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे प्रथमस्याध्यायस्य

प्रथमः पादः॥

---

प्रथमे पादे समस्तचिदचिद्विलक्षणश्रीपुरुषोत्तमाख्यवेदान्तवेद्यजगत्कारणास्तित्वं प्रसाधितं, तथाऽपि कानिचिद्वेदान्तवाक्यानि चिदचिदन्तर्भूतवस्तुविशेषप्रतिपादकानि दृश्यंत इत्याशङ्कानिरासः क्रियते । किञ्च जन्मादिसूत्रे ब्रह्म कारणमेव ब्रह्मैव कारणमिति अयोगान्ययोगव्यवच्छेदौ लक्षणस्य असम्भवातिव्याप्तिपरिहाराय विवक्षितौ, तत्र अयोगव्यवच्छेदः प्रथमपादेन सिद्धः, अन्ययोगव्यवच्छेदार्थस्त्रिपाद्यारम्भइति च विभागः । तत्र स्पष्टतरजीवलिङ्गकानि वाक्यानि प्रथमे पादे विचारितानि, अस्पष्टजीवलिंगकानि द्वितीये विचार्यन्ते, स्पष्टजीवलिङ्गकानि तृतीये, प्रधानादिप्रतिपादनच्छायानुसारीणि चतुर्थ इति प्रायिकोऽयं पादार्थविभागः ॥

**सर्वत्र प्रसिद्धोपदेशात् ॥१॥**

**विवक्षितगुणोपपत्तेश्च ॥२॥**

**अनुपपत्तेस्तु न शारीरः ॥३॥**

**कर्मकर्तृव्यपदेशाच्च ॥४॥**

**शब्दविशेषात् ॥५॥**

**स्मृतेश्च ॥६॥**

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥७॥**

**संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥८॥**

छन्दोगास्समामनंति– 'सर्वं खल्विदं ब्रह्म तज्जलानिति शांतउपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति सक्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प' इत्यादि । अत्र 'सर्वं खल्विदं ब्रह्म तज्जलानिति शांतउपासीते' त्यनेन सर्वात्मकं ब्रह्म शांतस्सन्नुपासीतेति विधीयते, 'सक्रतुं कुर्वीते' ति तस्यैवोपासनस्य मनोमयत्वाद्यग्रिमगुणविधानार्थोऽनुवादः । ननु उत्पत्तिशिष्टसार्वा-

त्म्यगुणावरुद्धे कथं मनोमयत्वादिगुणांतरविधानं घटते । अथोच्येत–'सर्वं खल्विदं ब्रह्म तज्जलानि' त्यंतं भिन्नं वाक्यं, सर्वशब्दयोगेन 'सर्वं खल्वि' त्यस्य 'शान्तउपासीते' त्येतदेकवाक्यत्वनिवारणादिति । नैतद्युक्तं । तथाऽपि 'शान्तउपासीते'त्यत्र अन्यार्थसन्निहितस्य ब्रह्मण उपास्यत्वेनेव तथाभूतस्य सार्वात्म्यस्यापि उपास्यगुणत्वेन अन्वयानिवारणात् , शतपथे अग्निरहस्यब्राह्मणे 'सत्यं ब्रह्मेत्युपासीते' ति शाण्डिल्यविद्याविधौ उपास्यब्रह्मणः सत्यत्वविशेषणश्रवणेन अत्रापि तदैकार्थ्येन तादात्म्यगुणविधानौचित्याच्च ॥

उभयोरैकार्थ्यञ्च 'सच्चत्यच्चाभव' दिति श्रुत्यनुसारेण सत्यशब्दस्य परोक्षापरोक्षात्मकसकलवस्त्वात्मकत्वपरतया सूपपादं । एवञ्च कथं सार्वात्म्यगुणावरुद्धे मनोमयत्वादिगुणान्तरविधानमिति चेत् उच्यते–उत्पत्तिशिष्टो गुणः स्वविरोधिनमेवोत्पन्नशिष्टं न सहते, न तु गुणांतरमात्रं । न हि सोमद्रव्यमुत्पत्तिशिष्टमिति द्रव्यांतरमिव देवतादिगुणांतरमपि प्रतिक्षिपति । ननु तथाऽपि उपास्यब्रह्मगुणतया मनोमयत्वादिविधानमित्येतन्न युज्यते, 'सक्रतुं कुर्वीत मनोमयः प्राणशरीर' इत्यादिसामानाधिकरण्येन मनोमयत्वादीनामुपासकविशेषणत्वप्रतीतेरितिचेत् , उच्यते—अग्निरहस्ये समानप्रकरणे मनोमयत्वादिकमुपास्यविशेषणमाम्नायते । तत्रहि 'सर्वं खल्विदं ब्रह्म तज्जलानिति शांतउपासीते' तिस्थाने सत्यत्वविशिष्टब्रह्मोपासनां विधाय 'अथ खलु क्रतुमयोऽयं पुरुषः सयावक्रतुरयं अस्माल्लोकात्प्रैति एवंक्रतुरिहामुं लोकं प्रेत्याभिसंभवती' ति तत्क्रतुन्यायप्रदर्शनपूर्वकं 'सआत्मानमुपासीत मनोमयं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं, सर्वरसं सर्वाअनुदिशः प्रभूतं सर्वमिदमभ्यात्तमवाकमनादर' मिति मनोमयत्वादीनामुपास्यविशेषणत्वं स्पष्टमाम्नातं । ननु तदनुसारेणाप्यत्र प्रथमांतानां मनोमयादिपदानां 'क्रतुं कुर्वीते' त्यत्र कथमुपास्यगुणसमर्पकतया अन्वय उपपादनीयः, प्रथमांतानां षष्ठ्यन्तततया विपरिणामेनोपपादनीयः । यद्वा 'क्रतुं कुर्वीते' त्यनूदितसर्वात्मब्रह्मोपासनां प्रति प्रकारसमर्पको 'मनोमयः प्राणशरीर' इत्यादिः

'एतमितः प्रेत्याभिसम्भविताऽस्मी'त्यन्तः, तदनंतरामितिकरणबलात्। अनेन प्रकारेण क्रतुं कुर्वीतेत्यन्वयप्रतीतेः, तथाऽन्वये सत्येव 'एषमआत्माऽन्तर्हृदय' इति वाक्यसामञ्जस्याच्च। तस्योपासनाप्रकाराभिनयपरत्वं विना स्वतंत्रश्रुतिवाक्यत्वे 'म' इत्यस्यान्वयसामञ्जस्याभावात्, तथासत्येवच 'एषमआत्माऽन्तर्हृदय' इति वाक्यानां त्रिःपाठस्य 'सर्वकर्मा सर्वकाम' इत्यादीनां द्विःपाठस्यचोपपत्तेः। तथासति हि 'प्रायणीयं प्रथममहः चतुर्विंशं द्वितीयं चत्वारोऽभिप्लवाष्षडहाः एकः पृष्ठ्यष्षडहः समासः सद्वितीयः सतृतीयः सचतुर्थः सपंचमः त्रयोऽभिप्लवाष्षडहाएकः पृष्ठ्यष्षडह' इत्यादौ गवामयनसत्रगताहःक्लृप्तिवाक्ये अभिप्लवषडहादिशब्दानां असकृत्पाठस्य तत्रतत्रस्थाने षडहाद्यनुष्ठानाभ्यासार्थत्वेनेव तत्रतत्रस्थाने हृदयांतर्वर्तित्वानुसन्धानाभ्यासार्थत्वेन असकृत्पाठः साफल्यमश्नुते, तेषां वाक्यानामुपास्ये तत्तद्धर्मसद्भावमात्रबोधकश्रुतिवाक्यत्वे तद्वैफल्यं स्यात्। एवंच विहितोपासनानुवादेन मनोमयत्वाद्यनेकगुणविधाने वाक्यभेद इत्यपि शङ्का निरस्ता भवति। तेषामितिकरणोक्तेन प्रकारभावेनैकेन रूपेण विधेयत्वात्, विधेयताऽवच्छेदकरूपैक्ये विधेयपदार्थभूतरूपांतरभेदेन वाक्यभेदाप्रसङ्गात्। अतएव 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहियवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणे' ति ज्योतिष्टोमदक्षिणाविधिवाक्ये गवादीनां रूपभेदे सत्यपि तेषां दक्षिणात्वेनैकेन रूपेण विधेयत्वान्नवाक्यभेदइति गवात्मकैकदक्षिणाविधानाङ्गीकारेण वाक्यभेदः परिहृतः। यद्वा श्रुताविति शब्दः क्रमरूपं मनोमयत्वादीनां प्रकारमाचष्टे—मनोमयत्वाद्यनुसन्धानक्रमेण क्रतुं कुर्वीतेति। तथा च विततिरूप एकः क्रम एवात्र विधेय इति न वाक्यभेदः, मनोमयत्वादीनामुपास्यगुणानां विधानं तु तत्क्रमविधानादाक्षेपतो लभ्यते, यथा 'विश्वजित्सर्वपृष्ठोऽतिरात्र' इत्यत्र पृष्ठगतसर्वताविधानात् पृष्ठसाम्नां रथन्तरादीनामित्यलं प्रपञ्चेन। एवं 'उपासीते'त्यन्ते वाक्ये सर्वात्मकब्रह्मोपासनाविधिः, क्रतुवाक्ये मनोमयत्वाद्युपास्यगुणविधिरिति स्थिते संशयः। किमिह ब्रह्मशब्देन उपास्य-

तया निर्दिष्टो जीवः, उत परंब्रह्मेति, तत्र जीव इति पूर्वपक्षः । तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः, सर्वपदनिर्दिष्टं हि ब्रह्मादिस्तंबपर्यंतं जगत्, ब्रह्मादिभावश्च जीवस्यैव अनादिकर्मप्रवाहविपाकानुसारिणा जन्मभेदेनोपपद्यते, परस्य तु ब्रह्मणः समस्तमङ्गळगुणाकरस्य निरस्तसमस्तहेयसम्बन्धस्य अतिहेयसर्वभावो नोपपद्यते । न च परिच्छिन्ने जीवे ब्रह्मशब्दायोगः, इदं ब्रह्मागच्छतीति श्रुत्यन्तरे तत्रापि तत्प्रयोगात्, तद्व्यावर्तनार्थं परमात्मनि परंब्रह्मेति तत्र तत्र सविशेषनिर्देशदर्शनाच्च । जीवस्य च निर्मुक्तसंसारोपाधेः मुक्तिदशायां धर्मज्ञानविकासेन बृहत्त्वञ्चास्तीति तदीयकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां 'तज्जलानि'ति हेतुनिर्देशोऽप्युपपद्यते । तस्माज्जीव एव अत्र उपास्यतया निर्दिष्टं ब्रह्मेति । एवं प्राप्ते सिद्धांतः— 'सर्वं खल्विद'मिति निर्दिष्टे सर्वस्मिन् जगति तदात्मतया विधीयमानं ब्रह्म परमेव ब्रह्म । न जीवः । जगज्जन्मादिहेतुकतादात्म्यस्य प्रसिद्धत्वेनोपदेशात् । ब्रह्मणो जातत्वात् ब्रह्मणि लयवत्त्वात् ब्रह्माधीनजीवनत्वाच्च हेतोः ब्रह्मात्मकं खलु सर्वमिदं जगदित्युक्ते हि यस्माज्जगज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धाः तदत्र ब्रह्मेति प्रतीयते । तच्च परमेव ब्रह्म, 'यतोवा इमानि भूतानि जायन्त' इत्यादिश्रुतेः । ततश्च ब्रह्माधीनजन्मजीवनलयस्य स्थूलचिदचिद्वस्तुरूपस्य सर्वस्य जगतः तदपृथक्सिध्या तच्छरीरत्वेन तदात्मभूतत्वलक्षणं तत्तादात्म्यं तस्य सकलहेयप्रत्यनीककल्याणगुणाकरत्वेन न विरुध्यते, प्रकारभूतशरीरगतदोषाणां प्रकारिण्यात्मन्यप्रसङ्गात् । जीवस्य तु सर्वतादात्म्यनिर्देशो नोपपद्यते । तस्य प्रतिशरीरं भिन्नस्य अन्योन्यतादात्म्यासम्भवात् । तस्मादिह ब्रह्मशब्देन निर्दिष्टं परमेव ब्रह्म । नन्वेवं सति कथं 'मनोमयः प्राणशरीर' इत्यनयोरुपास्यगुणतया ब्रह्मण्यन्वयः, मनःप्राणयोरुपकरणोपकरणिभावेन जीवसम्बन्धस्यैव सुप्रसिद्धत्वादितिचेत् उच्यते-सांसारिकमनःप्राणसम्बन्धोऽत्र नार्थत्वेन ग्रहीतुं योग्यः, तस्य हेयस्य मुक्तिदशायां त्यक्तव्यस्य अनुपदोक्ततत्क्रतुन्यायविरोधेन उपास्यगुणत्वायोगात् । तस्मान्मुक्तिदशाविकसितधर्मज्ञानरूपविशुद्धमनोग्राह्यत्वं मनोमयत्वं, सर्वप्रा-

णिप्राणधारकत्वं प्राणशरीरत्वं, निरतिशयदीप्तियुक्तदिव्यमङ्गळविग्रहवत्त्वं भारूपत्वमित्यादिर्भाष्योक्तएव तेषामर्थो ग्राह्यः । एवं च एवंरूपा मनोमयत्वादयो जीव एव नोपपद्यन्ते । तथा 'एतमितःप्रेत्य अभिसम्भविताऽस्मी'ति प्रकृतस्य ब्रह्मणः उपासकप्राप्यतया निर्देशः, 'एषम आत्माऽन्तर्हृदय'इति षष्ठीनिर्दिष्टादुपासकात् प्रथमान्तेन तस्य व्यतिरेकानिर्देशश्च, 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'त्यादिस्मृतिश्च, हृदयदेशस्थितमुपास्यं ब्रह्म जीव इति पक्षे नोपपद्यते । ननु ब्रह्मेति पक्षेऽपि 'एषम आत्माऽन्तर्हृदये ऽणीयान् व्रीहेर्वा यवाद्वे'ति अल्पौकस्त्वाणीयस्त्वव्यपदेशो नोपपद्यते । नैवं, ध्यानार्थमणीयस्त्वमुपदिश्यते, न पुनरणीयस्त्वमेवास्य स्वरूपमिति । व्योमवच्चैष व्यपदेशो द्रष्टव्यः । अतएव 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्य'इति तस्य स्वाभाविकं महत्त्वमपि श्रूयते । एवं च यस्योपाध्यनुक्त्या स्वाभाविकं महत्त्वमवगतम्, तस्योपाध्युक्तिपूर्वकमुच्यमानं परिच्छिन्नत्वमेवौपाधिकमिति एवमौचित्यात् । इह अल्पत्वोपाधेः हृदयायतनत्वस्यैव ज्यायस्त्वोपाधेरश्रवणात् उपासनार्थमौपाधिकमणीयस्त्वं स्वाभाविकं ज्यायस्त्वञ्च विवक्षितमिति न कश्चिद्विरोधः । एवं तर्हि जीवस्येव परस्यापि शरीरान्तर्वर्तिचेतनत्वाविशेषात तत्प्रयुक्तसुखदुःखभोगः प्राप्नुयादिति चेन्न । हेतुविशेषात्, न हि शरीरान्तर्वर्तिचेतनत्वमात्रं सुखदुःखभोगहेतुः, अपि तु कर्मपारवश्यमपि, तत्त्वपहतपाप्मनः परमात्मनो न शक्यशङ्कं, तस्मादिहोपास्यं ब्रह्म परमेव ब्रह्मेति सिद्धम् ॥

सङ्ग्रहकारिकाः ॥

सर्वं खल्वित्यत्र सार्वात्म्यमुक्तं हेयं यस्य ब्रह्म तज्जीव एव ।
पर्यायेणानादिसंसारभाजस्तस्यह्येतद्युज्यते नो परस्य ॥
मैवं खलुप्रयोगाद्धि प्रसिद्धवदनूद्यते ।
सार्वात्म्यं कारणत्वोत्थं तच्च ब्रह्मणि विश्रुतम् ॥

येऽन्ये मनोमयत्वाद्या वाक्यशेषश्रुता गुणाः ।
ब्रह्मण्येव च ते सर्वे युज्यन्ते न तु भोक्तरि ॥
इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥१॥

---

**अत्ता चराचरग्रहणात् ॥९॥**

**प्रकरणाच्च ॥१०॥**

**गुहांप्रविष्टावात्मानौ हि तद्दर्शनात् ॥११॥**

**विशेषणाच्च ॥१२॥**

कठवल्लीषु श्रूयते— 'यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्थावेद यत्र स' इति। अस्य यस्मिन् प्रकारे स्थितः यत्प्रकारविशिष्टः तं प्रकारं को वेदेत्यर्थः । अत्र ओदनोपसेचनसम्बन्धात् यस्येति षष्ठीनिर्दिष्टः तयोरत्ता प्रतीयते, स किं जीवः, उत परमात्मेति अत्तृत्वस्य कर्मफलभोक्तृत्वजगदुपसंहर्तृत्वान्यतररूपत्वानिर्द्धारणात् संशये पूर्वपक्षः— ओदनोपसेचनसम्बन्धात् अत्ता भोक्तैव । न च मृत्योरुपसंहारकारिणः उपसेचनत्वरूपणात् अत्ता संहर्ता प्रतीयत इति वाच्यम् । जीवस्य नित्यत्वेन मृत्युवश्यत्वाभावात् मृत्युर्जीवस्य विधेयप्राय इत्याशयेन मृत्यूपसेचनवादोपपत्तेरिति । सिद्धान्तस्तु— मृत्यूपसेचनवादो मृत्योरबाधकत्वाभिप्रायो न वक्तुं युक्तः, उपसेचनशब्दस्य गौणत्वेऽपि स्वयमद्यमानत्वे सत्यन्यादनहेतुत्वेन विशेषाकारेण गौणत्वे सम्भवति अबाधकत्वरूपेण गौणत्वायोगात् । न हि 'सिंहो देवदत्त' इत्यत्र शौर्यादिविशेषाकारेणेव द्रव्यत्वादिसामान्याकारेण सिंहशब्दस्य गौणत्वमिष्यते । अत एव पूर्वतंत्रेऽपि 'उद्गातृचमसमेकस्य श्रुतिसंयोगा' दित्यधिकरणे 'प्रैतुहोतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रयजमानस्ये' ति अध्वर्युप्रैषगतस्य उद्गातृपदस्य बहुवचनानुसारेण अजहल्लक्षणया बहुषु वृत्तौ वक्तव्यायां उद्गातृगणमात्रवृत्तिर्विशेषाकारस्तन्निमित्तं, न तु षोडशर्त्विक्साधारणः सामान्याकार इति निरूपितम् । एवं च यथौदनो येन दधिपयःप्रभृतिना तद्भोजनायोपसिच्यते तस्याप्यदनीयता,

एवमोदनस्थानीयं ब्रह्मक्षत्रशब्दितं येन मृत्युनोपसिच्यमानमदनीयं प्रतीयते, तस्यापि मृत्योस्तेन सहादनीयताप्रतीतेः, मृत्युना सह जगददनस्य प्रळय एव भावात्, प्रळये च सर्वस्य चराचरस्य संहारात्, समस्तं चराचरवृन्दं ब्रह्मक्षत्रशब्दलक्षितमवसीयते। न च समस्तस्य चराचरस्य मुख्यमदनं सम्भवतीति ओदनशब्दस्य विनाश्यत्वे लक्षणाऽवसीयते, यद्यपि विनाश्यत्वं भोज्यत्वभोग्यत्वापेक्षया सामान्याकारः, तथाऽपि सर्वस्य चराचरस्य ब्रह्मक्षत्रमात्रस्य वा कञ्चित्प्रत्योदनवत् भोज्यत्वाभावात् स्त्रीभृत्यादिवत् भोग्यत्वाभावाच्च समभिव्याहृतपदान्तरसामर्थ्यप्राप्तं विनाश्यत्वरूपसाधारणाकारनिमित्तत्वं न्यायप्राप्तत्वादुररीकरणीयम्। अतएव 'इमां स्पृष्ट्वोद्गायेत् इमां हि विश्वभूतान्युपजीवन्ती' त्यत्र विश्वभूतोपजीव्यत्वसमभिव्याहारप्राप्तं भूमिपरत्वं इमामित्यस्येष्यते, न तु सन्निहितौदुंबरीपरत्वं, एवं सिद्धे सकलचराचरसंहर्तृत्वे परमात्मलिंगे तेनात्ता परमात्मैव। 'महान्तं विभुमात्मानं मत्वा धीरो न शोचती' त्यादिना प्रकृतस्य परमात्मनो 'यत्रस' इति तत्पदेन परामर्शादप्येवमवसीयते। अथ स्यात् 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायाऽऽतपौ ब्रह्मविदो वदंति पञ्चाग्नयो ये च त्रिणाचिकेता' इत्यनन्तरमन्त्रे ऋतपानशब्दितकर्मफलभोक्तृत्वाभिधानात्, तस्य च जीवलिङ्गतया पूर्वाधिकरणे समर्थितत्वात्, तयोरेकस्तावत् ऋतपानकर्ता जीवः, तस्य द्वितीयोऽपि बुद्धिप्राणयोरन्यतरः, कर्मफलभोगोपकरणत्वेन ऋतपानसम्बन्धित्वात्, अतः पूर्वप्रस्तुतोऽत्तापि तदेकप्रकरणत्वाज्जीवएवावसीयत इति चेत् उच्यते—

न प्राणजीवौ बुद्धिजीवौ वा 'गुहां प्रविष्टौ' 'ऋतंपिबन्तावि' ति चोच्यन्ते, अपितु जीवपरमात्मानौ हि तथोच्येते, तस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशदर्शनात्, 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणं। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती' ति परस्य गुहाप्रवेशव्यपदेशो दृश्यते, 'या प्राणेन संभवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठंती या भूतेभिर्व्यजायते' ति जीवस्य। अत्र क-

र्मफलान्यत्तीति यौगिकेनादितिशब्देन जीव उच्यते, नतु देवमाता पृथिवी वा, तयोरस्मदादिहृदयगुहाप्रवेशाभावात् । 'प्राणेनसंभवति' सह वर्तते । देवतामयी । देवताशब्दादिंद्रियवाचिनः स्वार्थे मयट्प्रत्यय इति इन्द्रियाधीन-भोगा । हृदयगुहांप्रविश्यतिष्ठंतीति-पृथिव्यादिभूतैः सहिता देवादिरूपेण विविधा जायत इति । एवञ्च 'ऋतंपिबंता' विति व्यपदेशः छत्रिन्यायेन अजहल्लक्षणया योज्यः । यद्वा– स्वतंत्रप्रयोजकोभयसाधारणकर्तृत्वसामान्य-परः शतृप्रत्यय इति जीवपरयोरुभयोरपि मुख्यतयैव योज्यः, बुद्धिप्राणयो-रुपकरणयोः कर्त्रर्थे प्रत्ययो हि 'चक्षूरूपग्राहक' मितिवत् कर्तृत्वोपचा-रादिति समर्थनीयं स्यात् । न च 'सुकृतस्य लोक' इत्यस्य कर्मफलभो-गार्थमुपात्तस्य परमात्मद्वितीयपक्षेऽनुपपत्तिः, भोक्तुरिव भोजयितुरपि भो-गस्थाने सन्निधानस्य वक्तव्यत्वात् । न च जीवपरयोः प्रकाशरूपत्वात् छायातपत्वनिर्देशानुपपत्तिः, अज्ञत्वसर्वज्ञत्ववैलक्षण्येन तदुपपत्तेः, 'ज्ञाज्ञौ द्वावजावीशनीशा'वित्यादिश्रुतेः, हृदयगुहां प्रविष्टौ बुद्धिजीवाविति युक्तम्, 'आत्मानं रथिनं विद्धि शरीरं रथमेवच । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च' त्यत्रैवप्रकरणे जीवस्य रथित्वेन बुद्धेः सारथित्वेन च शरीराकाररथारूढत्ववर्णनात् । जीवपराविति तु न युक्तं, 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद' मिति तयोः प्राप्तृप्राप्यभावनिर्देशात् प्राप्यस्य रथ एव प्राप्तत्वे कस्य प्राप्तये रथारोहः कल्प्यत इति चेत् । उच्यते– गुहां प्रविष्टौ जीवपराविति युक्तं, 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणं । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती' त्यादिपूर्वापरमंत्रेषु तयोरेव उपास्योपासकभावेन प्राप्यप्राप्तृभावे-नच तयोरेव विशेष्यमाणत्वात् । रथिरथसारथ्यादिरूपणन्तु उपासनोपयोगि-शरीरादिवशीकरणसिद्ध्यर्थं, 'यस्तु विज्ञानवान्भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वाइव सारथे' रित्यादिमंत्रांतराम्नानात् । न तु परमपदप्राप्त्यर्थं, तावत्पर्यन्तं प्राकृतशरीरेंद्रियविषयादिगमनाभावात् । सर्वमेतदानुमानिकाधिकरणे स्पष्टीकरिष्यते । तस्मात् गुहां प्रविष्टौ जीवपरौ-नतु बुद्धिजीवौ, अत्ताच परमात्मैवेति सिद्धम् ॥

संग्रहकारिके ॥

ओदनसम्बन्धित्वादत्ता भोक्तेति जीवएव स्यात् ।
नास्ति ब्रह्मप्रकरणमृतमन्त्रोऽग्रे हि बुद्धिजीवपरः ॥
मृत्यूपसेचननिरूपणसन्निधानात् कृत्स्नञ्चराचरमिहाद्यतया प्रतीतम् ।
तेनादनं हरणमित्युचितस्तदत्ता नाथस्सएव ऋतमंत्रगतस्स जीवः ॥

इति अत्राधिकरणम् ॥२॥

---

**अन्तर उपपत्तेः ॥१३॥**

**स्थानादिव्यपदेशाच्च ॥१४॥**

**सुखविशिष्टाभिधानादेव च ॥१५॥**

**अतएव च सब्रह्म ॥१६॥**

**श्रुतोपनिषत्कगत्यभिधानाच्च ॥१७॥**

**अनवस्थितेरसंभवाच्च नेतरः ॥१८॥**

छन्दोगाः समामनन्ति— 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेतिहोवाच एतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनीह्येव गच्छति एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयंति सर्वाण्येनं वामान्यभिसंयंति यएवंवेद एष उएव वामनीरेष हि सर्वाणि वामानि नयति एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाती' ति । अत्र, अक्ष्यन्तरः पुरुषः प्रतिबिंबः स्यात्, 'य एष' इति प्रसिद्धवन्निर्देशात् 'दृश्यत' इत्यापरोक्ष्याभिधानाच्च । जीवात्मावा, तस्यापि चक्षुषि विशेषसन्निधानात् उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवस्य शरीरे स्थितिन्निश्चिन्वन्ति । 'नेत्रस्थं जाग्रत'मिति च माण्डूक्यश्रुतेः । चक्षुःप्रतिष्ठो देवताविशेषो वा स्यात्, 'रश्मिभिरेषोऽस्मिन्प्रतिष्ठित' इति श्रौतप्रसिद्धेः । न तु परमात्मा । 'तन्दुर्दर्श'मिति दुर्दर्शत्वेनोक्तस्य तस्य 'य एष दृश्यत' इति निर्देशायोगात् । इति पूर्वःपक्षः ।
ननु कथमयं पूर्वपक्षो घटते, विषयवाक्य एव अमृतत्वाभयत्वयोरात्मब्रह्म-

श्रुत्योः संयद्वामत्ववामनीत्वभामनीत्वानाञ्च तल्लिङ्गानामाम्नानात्, 'तद्यद्यप्य-स्मि'न्निति स्थानिनिर्लेपत्वप्रयुक्तस्थाननिर्लेपत्वाम्नानात्, 'तद्यथा पुष्करप-लाशआपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यत' इति वाक्येन 'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न अर्चिषमेवाभिसम्भवन्ती'ति वाक्येन च ब्रह्मविद्याफलत्वेन प्रसिद्धयोः सकलपापाश्लेषब्रह्मप्राप्तिफलयोः प्रतिपादनात्, 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'त्युपक्रान्तब्रह्मप्रकरणानुवृत्तेश्च। एवं परमात्मपक्ष इव प्रतिबिंबादिपक्षेषु श्रुतिलिङ्गादीनामन्यतमस्याप्यभा-वात्। अक्षिस्थत्वन्तु 'यश्चक्षुषि तिष्ठन्, य एषोऽक्षिणि पुरुषो दृश्यत' इत्या-दिश्रुत्यन्तरेषु परमात्मन्यपि श्रुतं तत्साधारणमिति चेत् उच्यते— अक्ष्या-धारत्वं परमात्मव्यावृत्तं प्रतिबिंबादिपक्षोत्थापकं भवत्येव। तस्य हि स्वमहिम-प्रतिष्ठस्य मुख्यं तावदक्ष्याधारत्वं न सम्भवति, रूपविशेषावच्छेदोपाधिकं औपचारिकं सम्भवदपि तदाऽङ्गीकार्यम्, यद्यक्षिस्थस्य परमात्मत्वगमकं श्रुतिलिंगादिषु किञ्चिदिह जागृयात्। नत्वेतदस्ति। आत्मब्रह्मश्रुत्योः संय-द्वामत्वादिगुणश्रवणस्य च इतिशब्दशिरस्कत्वेन 'मनोब्रह्मेती' त्यादिवत् अतस्मिन् तद्रूपप्रत्ययपरत्वावगमात् तत्समभिव्याहृतामृतत्वादिश्रवणस्य च तन्मात्रपरत्वात् उदाहृतफलानां अब्रह्मोपासनयाऽपि वैवाहिकवरवधूदर्श-नेन अभ्युदयवत् वचनबलादुपपत्तेः। ब्रह्मप्रकरणानुवृत्तिस्त्वसिद्धा, 'प्राणो ब्रह्मे' त्यादेः 'मनो ब्रह्मे' त्यादिसारूप्येण ब्रह्मदृष्टिविधिपरत्वात्, तस्य ब्रह्मोपासनाविधिपरत्वेऽपि तदग्नीनां वाक्यं इदमाचार्यवाक्यमिति वक्तृभे-दात्, अग्निविद्याभिव्यवधानाच्च। एवं ह्युपाख्यायते— उपकोसलः सत्यकाम-माचार्यमुपसन्नः तस्य द्वादशवर्षाण्यग्नीन् परिचरन्नास्त, तस्मै ब्रह्मोपदेश-मकृत्वैव आचार्ये प्रोषिते तदाऽपि आचार्याग्निपरिचर्यायामवहितं तमवेक्ष्य गार्हपत्यादयस्त्रयोऽग्नयः सम्भूय करुणया तस्मै 'प्राणोब्रह्मे' त्यादिना ब्रह्मविद्यां 'यएषआदित्ये पुरुषोदृश्यते सोहमस्मी' त्यादिना प्रत्येकं स्व-स्वविषयविद्यांच उपदिश्य 'एषा सोम्य तेऽस्मद्विद्या चात्मविद्याचे' त्य-भिधाय 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्राप' दिति श्रुत्यनुसारेण

स्वोपदिष्टा ब्रह्मविद्या तदाचार्यकर्तृकगत्युपदेशेन साधिष्ठत्वं प्राप्नोत्विति आलोच्य 'आचार्यस्तु ते गतिं वक्ते' त्यवोचन्निति । अतोगतिमात्रस्य वक्तव्यत्वेन परिशेषितत्वात्, तस्य ब्रह्मविद्याशेषत्वेऽपि 'य एषोऽक्षणी' त्यादेस्तच्छेषत्वाभावात् तस्य प्रतिबिंबादिविषयतायां न काचिदनुपपत्तिः । यत्तु स्थानिमाहात्म्यप्रयुक्तसर्पिरुदकाद्यश्लेषवर्णनं स्थानिनः परमात्मत्वे लिंगमितितन्न, वस्तुतःसलेपेऽक्षिणस्थानिमाहात्म्यायत्तसर्पिरुदकाश्लेषवर्णनस्य स्तुतिमात्रत्वात् । तस्मात्प्रतिबिंबादीनामन्यतमएवाक्षिपुरुषइति । एवंप्राप्ते सिद्धांतः— यत्रोच्यमानस्यार्थस्याप्तवचनसंबन्धः प्रतिपाद्यः तत्र इतिशब्दो नार्थविवक्षां वारयति । यथा 'इति हस्मोपाध्यायः कथयती' ति । तस्मादिहामृतत्वादीनामाचार्यवचनसंबंधस्य प्रतिपाद्यत्वात् इतिशब्दो नार्थविवक्षावारकः । स्वाभाविकंचामृतत्वादिकं जीवस्य न संभवति प्रतिबिंबस्य तु कथमपि नसंभवतीति आत्मब्रह्मश्रुत्यमृतत्वाभयत्वसंयद्वामत्ववामनीत्वभामनीत्वलिंगैर्बहुभिरक्षिपुरुषस्य परमात्मत्वनिश्चये सति अक्ष्याधारत्वमेकमौपचारिकं नेतव्यं, उपक्रमस्थैकप्रमाणापेक्षया उपरितनानेकप्रमाणानां बलवत्त्वात् । किंच 'य एषोऽक्षिणि पुरुषो दृश्यत' इति व्यपदेशात् उपासनाकालेऽक्षिण वर्तमानत्वं विवक्षितमिति गम्यते, तत्तावत्प्रतिबिंबे न संभवति, उपासनाकालेऽक्ष्यभिमुखबिंबसान्निधापनकल्पने गौरवं, नासाग्रन्यस्तदृष्टिके तस्मिन् काले बिंबसान्निधापनकल्पनेऽपि न प्रतिबिंबोदयः संभवति, जीवस्यापि जागरे नियमेन अक्षिणस्थितिर्नसंभवति, अणुपरिमाणस्य तस्य सर्वस्मिन्नपि जागरे नेत्रमात्रवर्तित्वे शब्दादिज्ञानानुपपत्तेः । अतस्सर्वेंद्रियकंदभूते हृदिस्थितस्य तस्य धर्मभूतज्ञानप्रसरेण नेत्रपदोपलक्षितसर्वेन्द्रियाधिष्ठातृत्वं 'नेत्रस्थ' मिति श्रुत्योच्यत इत्येवाभ्युपगन्तव्यं । चक्षुरधिष्ठातृदेवताविशेषस्यापि 'रश्मिभिरेषोऽस्मिन् प्रतिष्ठित' इति श्रुतेः तत्परिग्रहेऽपि अक्ष्याधारत्वस्यऔपचारिकत्वानपायात्, तं परिगृह्य ब्रह्मश्रुत्याद्युपेक्षणमयुक्तं। किंच 'कं ब्रह्म खं ब्रह्मे' ति प्रकृतस्य सुखविशिष्टस्य परमात्मन उपासनास्थानस्य गुणांतराणांच विधानार्थं 'य एषोऽक्षिण पुरुष' इत्यभिधानाद

ण्यक्षिपुरुषः परमात्मा । ननु अग्निविद्याव्यवधानात् 'कंब्रह्मे'ति प्रकृतः परमात्मा नेह सन्निधत्ते । उच्यते— प्रवासात्पुनरागत आचार्यः प्रसन्नमुखमुपकोसलं वीक्ष्य 'ब्रह्मविद इव वै सोम्य ते मुखं भाति को नु त्वानुशशासे' ति पृष्ट्वा सहाग्निभिर्भीते तस्मिन् अग्नयोऽस्मा उपदिदिशुरिति निश्चित्य 'किन्नु सोम्य किल तेऽवोचन्नि' ति पृष्ट्वा एतावदवोचन्निति तेनोक्ते तत्र वक्तव्यविशेषोऽस्तीत्यवधार्य 'अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश' इत्यादिना स्ववक्तव्यं प्रतिज्ञाय 'ब्रवीतु मे भगवा' निति तेन प्रार्थितः ततः संयद्वामत्वादिगुणकमक्षिपुरुषं यदुपदिदेश तस्य प्रकृतस्य सुखविशिष्टब्रह्मान्यविषयत्वं कथं कल्पयितुमीश्महे । ननु 'एषा सोम्य ते अस्मद्विद्याचात्मविद्याचे' ति निरवशेषमुपदिष्टतया उपसंहृतायां परमात्मविद्यायां वक्तव्यशेषसद्भावमालोच्य आचार्यः स्वयमुपदिदेशेति कल्पनेऽपि अग्नीनामनृतवादित्वं अनभिज्ञत्वं वा प्रसज्यत इति चेन्न । 'आचार्यस्तु ते गतिं वक्ते'त्यग्नीनां वचने गतिग्रहणस्य यदाचार्येण अग्रे वक्तव्यं तस्य सर्वस्याप्युपलक्षणार्थत्वात्, अन्यथा अग्रिमाचार्यवचनानामन्वयायोगात् । ननु 'कं ब्रह्म खं ब्रह्मे' त्यत्र न ब्रह्मविद्याविधानं किं तु प्रसिद्धाकाशलौकिकसुखयोः ब्रह्मदृष्टिविधानमात्रं 'कं ब्रह्म खं ब्रह्मे' ति प्रत्येकं ब्रह्मपदयोगादितिचेत् । उच्यते— भवभयभीतस्तावदुपकोसलः सत्यकाममुपसम्पन्नः । 'व्याधिभिः प्रतिपूर्णोऽस्मी' त्याचार्यजायां प्रत्युपकोसलस्य सांसारिकेषु विषयेषु व्याधित्वमारोप्य निंदावचनात्, अध्ययनार्थमुपसन्नेषु सर्वेष्वन्येषु ब्रह्मचारिषु अध्याप्य समावर्तितेष्वपि अमुमसमावर्त्य अग्निपरिचर्यायां नियुज्य स्वयं सत्यकामः प्रोवासेत्यस्माच्च लिंगात् । एवं मुमुक्षया उपसम्पन्नंप्रति कथं तदनुपयोगिनं दृष्टिविधिमग्नय उपदिशेयुः, तस्मात् यथा 'प्राणो ब्रह्मे'त्यत्र प्राणशरीरतया ब्रह्मणि प्राणशब्दः, तथा सुखाकाशयोरपि ब्रह्मशरीरत्वाभिप्रायेण ब्रह्मणि सुखाकाशशब्दौ, उत तयोरन्योन्यव्यवच्छेदकतया निरतिशयानन्दब्रह्मस्वरूपसमर्पकत्वाभिप्रायेण वेत्यन्यतरनिर्दिधारयिषया प्रश्नः । अमुमभिप्रायं जानन्तोऽग्नयः 'यद्वाव कं तदेव खं यदेव खं

तदेव क'मित्यूचुरिति तेषां द्वितीयपक्षएवाभिमत इत्याशयः । अत एव 'कं ब्रह्म खं ब्रह्मे' ति ब्रह्मपदद्वयमप्युपपद्यते, आकाशवत् ब्रह्मानवच्छिन्नं च भवति, तदेव ब्रह्म सुखरूपंच भवतीति प्रत्याययितुं। एवं च 'यद्वाव कं तदेव खं यदेव खं तदेव क'मित्युभयथा विशेषणविशेष्यभावोक्तिः, अनवच्छिन्नसुखरूपं ब्रह्म सुखात्मकानवच्छिन्नवस्तुस्वरूपं च ब्रह्मेति उभयथा उपासनासिद्ध्यर्थमिति सर्वमनवद्यम् । श्रुतोपनिषत्कस्य अधिगतपरमपुरुषयाथात्म्यस्य श्रुत्यन्तरप्रसिद्धा या अर्चिरादिगतिः तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीं उपकोसलायाक्षिपुरुषं श्रुतवते 'अर्चिषमभिसम्भवन्ती'त्यादिना 'एष देवपथो ब्रह्मपथः एतेन प्रतिपद्यमाना इमं मानवमावर्तन्नावर्तन्त' इत्यन्तेन यदाचार्य उपदिदेश, ततोऽप्यक्षिपुरुषः परमात्मा, न तु प्रतिबिंबादिः । नहि तस्य नियमेनोपासनाकालेषु वाऽक्षिण्यवस्थानमस्ति, न वा तस्मिन्निरुपाधिकममृतत्वादिकं सम्भवतीति ॥

संग्रहकारिका ।

यएषपुरुषोऽक्षिणदृश्यत इति प्रसिद्धिगमकादुपक्रमगतात् ।
शरीरभृदिनोऽथवा प्रतिकृतिः सइत्यनुचितं बहुप्रतिहतेः ॥

इति अन्तराधिकरणम् ॥३॥

---

## अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ।१९।

## नचस्मार्तमतद्धर्माभिलापाच्छारीरश्च ॥२०॥

## उभयेऽपि हि भेदेनैनमधीयते ॥२१॥

'स्थानादिव्यपदेशाच्चे' ति सूत्रे 'यश्चक्षुषितिष्ठ' न्नित्यादिनोक्तं चक्षुषि स्थितिनियमनादिकं परमात्मधर्मइति सिद्धं कृत्वा अक्षिपुरुषस्य परमात्मत्वं साधितं, तदेवेदानीं समर्थ्यत इति सङ्गतिः । वाजसनेयिनः समामनंति— 'यः पृथिव्यांतिष्ठन् पृथिव्याअन्तरोयं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमंतरो यमयति एषतआत्मांतर्याम्यमृत'इति । एवं अप्स्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकादिष्वपि तिष्ठन्तं तदंतरभूतं तद-

वेद्यं तच्छरीरकन्तत्तद्यमयन्तमामनंति। माध्यन्दिनास्तु 'यस्सर्वेषु लोकेषु सर्वेषु वेदेषु सर्वेषु यज्ञेष्वि'ति पर्यायांतराण्यप्यामनंति। तत्र किमयमंतर्यामी जीवः परोवेति संशये जीवइति तावत्प्राप्तं, वाक्यशेषे 'द्रष्टा श्रोता मन्ता विज्ञाते'ति चक्षुरादिकरणायत्तज्ञानताश्रुतेः। न च दर्शनश्रवणमननविज्ञानशब्दाः रूपादिसाक्षात्कारवाचिनः, न चाक्षुषादिज्ञानवाचिनः, रूपादिसाक्षात्कारास्तु परस्यापि सन्ति, 'पश्यत्यचक्षुस्स शृणोत्यकर्ण' इत्यादिश्रुतेरिति वाच्यम्। तथासति 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाते'ति वाक्यश्रुतद्रष्ट्रन्तरादिनिषेधायोगात्, दर्शनादिशब्दानां चाक्षुषादिज्ञानपरत्वे हि जीवाद्न्यस्तद्वान् नास्तीति निषेधो युज्यते। रूपादिसाक्षात्कारवाचित्वे तस्य परस्मिन्नपि सत्त्वादन्यत्र तन्निषेधो न युज्यते। न च जीव इति पूर्वपक्षेऽपि 'य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरोयमयती'त्येकवचनं, 'यः पृथिव्यां तिष्ठ'न्नित्यादिपृथिव्यादिस्थितत्ववचनं, 'यं पृथिवी न वेदे'ति पृथिव्याद्यवेद्यत्ववचनं, 'यः पृथिवीमन्तरोयमयती'त्यादिपृथिव्यादिनियन्तृत्ववचनञ्च, न युज्यतइति वाच्यम्। एकवचनस्य जीवसमुदायाभिप्रायेण, स्थितिवचनस्य स्वमहिमप्रतिष्ठितत्वोक्तिरीत्या, तदन्तरत्वतन्नियन्तृत्ववचनयोरात्मेश्वरत्वोक्तिरीत्या, तदवेद्यत्वोक्तेः निष्कृष्टस्वरूपज्ञानाभावाभिप्रायेण च, योजयितुं शक्यत्वात्। तस्माज्जीवएवायमन्तर्यामीति। एवं प्राप्ते सिद्धान्तः— 'य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरोयमयति तमन्तर्यामिणं ब्रूही'ति सर्वान्तर्यामी कश्चिदेकोऽन्तर्याम्यस्ति तमन्तर्यामिणं ब्रूहीत्युद्दालकप्रश्नस्य हि 'यः पृथिव्यान्तिष्ठ'न्नित्यादि याज्ञवल्क्यस्योत्तरं, अत्रैकवचनं जात्यभिप्रायादिना योजयितुं न युक्तं, प्रथमप्रवृत्तैकविषयप्रश्नानुसारेण उत्तरवचनानां सर्वदेवलोकादिनियन्त्रैकविषयत्वस्य वक्तव्यत्वात्। तस्मात् सुबालोपनिषदि 'यस्य पृथिवीशरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद यस्यापश्शरीर' मित्यादिवाक्यसन्दर्भप्रतिनिर्देशे 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देवएको नारा-

यण' इति वाक्ये श्रुतः परब्रह्मरूपः पुरुषोत्तमएवात्रान्तर्यामी विवक्षितइति युक्तम् । तस्यैव च 'एषत आत्माऽन्तर्याम्यमृत' इति निर्दिश्यमानं जीवाव्यतिरिक्तत्वं स्वाभाविकामृतत्वञ्च सङ्गच्छते । यत्तु 'नान्योऽतोऽस्ति द्रष्टे' त्यादिकरणायत्तज्ञानवतोऽन्यस्य निषेधएव सङ्गच्छते, न तु रूपादिज्ञानवतोऽन्यस्य निषेध इति जीवपूर्वपक्षोपोद्बलकमुक्तं, तत्रेदमुत्तरं, 'नान्योऽतोऽस्ति द्रष्टे' त्यादि न द्रष्ट्रन्तरादिनिषेधमात्रपरं, किं तु तत्सदृशसर्वभूतनियन्तृरूपद्रष्ट्रन्तरादिनिषेधपरं, 'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगति' रिति शाब्दिकन्यायात्, तमेव हि न्यायमवलम्ब्य इषुनामके क्रतौ कतिपयवैशेषिकधर्माम्नानानन्तरमाम्नाते 'समानमितरच्छ्येनेने' ति वाक्ये इतरशब्दः श्येननामकक्रतुवैशेषिकधर्मानामतिदेशार्थः, न तु श्येनसाधारणानाञ्चोदकप्राप्तानां प्राकृतधर्माणामनुवादक इति निर्णीतं पूर्वतन्त्रे सप्तमाध्याये । एतेन 'न दृष्टेर्द्रष्टारं पश्येः न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारं मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीयाः आत्मा वाऽरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति मैत्रेयीब्राह्मणे श्रोतेत्यादिपदानां श्रवणमनननिदिध्यासनसाक्षात्कारकर्तृपरताया दृष्टत्वात् इहापि तत्परत्वं वक्तुमुचितमिति श्रवणमननादिकर्त्रन्तरनिषेधो जीवपक्षएव घटते न परमात्मपक्ष इति शङ्काऽपि निरस्ता । नञिवयुक्तन्यायावलम्बनेन तत्सदृशनियन्त्रन्तरनिषेधस्य 'पश्यत्यचक्षु' रित्यादिश्रुत्यन्तरप्रसिद्धार्थग्रहणानुकूलस्यैव तदर्थतया ग्राह्यत्वसमर्थनात् । यद्यपि चाक्षुषादिज्ञानवत्त्वेन सदृशस्यान्यस्यापि निषेधो जीवपक्षेऽपि घटते, तथाऽपि प्रधानवज्जीवोऽपि नान्तर्यामी भवितुमर्हति, सर्वनियन्तृत्वनिरुपाधिकामृतत्वाद्यसम्भवात् । अपिचैतं जीवं काण्वामाध्यन्दिनाश्च उभयेऽपि अन्तर्यामिणो भेदेनाधीयते । 'यो विज्ञाने तिष्ठन् विज्ञानादन्तर' इत्यादि हि काण्वा अधीयते । तत्रैव स्थाने 'य आत्मनि तिष्ठ'न्नित्यादि माध्यन्दिनाः । तस्मादन्तर्यामी परमात्मैव न जीवः ॥

संग्रहकारिका ॥

द्रष्टृश्रोत्रादिशब्दाभिहितकरणजज्ञानभेदाश्रयत्वा-
दन्तर्यामी शरीरी स्वनियमनवचोभाक्तमत्रेत्यसाधु ।

एकस्यैव ह्यधीताखिलयमयितृता ब्रह्मणोऽन्यत्र कस्मिन्
संभाव्या तत्र रूपाद्यवगतिविषयादर्शनाद्या घटन्ते ॥
इति अन्तर्याम्यधिकरणम् ॥४॥

---

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥२२॥
## विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ॥२३॥
## रूपोपन्यासाच्च ॥२४॥

आथर्वणिकास्समामनन्ति । 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रन्तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यंति धीरा' इति तदनन्तरञ्चामनंति । 'दिव्योह्यमूर्तः पुरुषस्सबाह्याभ्यंतरोह्यजः । अप्राणोह्यमनाश्शुभ्रोह्यक्षरात्परतः पर' इति । तत्र किमदृश्यत्वादिगुणकमक्षरं अक्षरात्परतः परश्च प्रकृतिपुरुषौ, उतोभयमपि परमात्मेति । प्रकृतिपुरुषाविति तावत्प्राप्तं, नह्यस्मिन्नक्षरेऽन्तर्यामिणि 'अदृष्टोद्रष्टे' त्यादौ द्रष्टृत्वादिरिव चेतनधर्मः कश्चित्समाम्नायते । 'अक्षरात्परतः पर' इत्यत्र च सर्वस्माद्विकारजातात् परं यत्प्रकृतं भूतयोन्यक्षरं तस्मात्परः क्षेत्रज्ञस्समष्टिपुरुषउच्यते । ननु इह चेतनधर्माश्रवणेऽप्यदृश्यत्वादिकं साधारणमिति कुतोऽक्षरस्य प्रधानत्वनिर्णयः । उच्यते– यथाखलु 'अबालोऽयमतरुणोऽय' मित्यादिशब्दाः पुरुषविशेषे प्रयुज्यमानाः प्रत्यासन्नावस्थांतराश्रये तस्मिन्नेव वर्तंते, एवं दृश्यत्वग्राह्यत्वरूपज्ञानेंद्रियकर्मेंद्रियविषयत्वनिषेधाः धर्मिविशेषाकांक्षायां दृश्यत्वग्राह्यत्ववदचेतनजातएव सूक्ष्मावस्थे वर्तंत इति युक्तं, तस्यैवावस्थांतरापन्नस्य धर्मित्वे संभवति धर्म्यंतरकल्पनायोगात् । ननु तर्हि 'अगोत्रमवर्णमचक्षुश्श्रोत्रमपाणिपाद' मिति जीवे प्रसिद्धानां गोत्रादीनां निषेधजातस्य धर्म्याकांक्षायां तस्यैव शरीरान्निष्कृष्टस्य सूक्ष्मावस्थस्य धर्मित्वोपपत्त्या भूतयोन्यक्षरं जीवएव स्यात्, 'अद्रेश्यमग्राह्य' मिति प्रकृतिलिंगनिषेधयोरुपक्रमगतत्वेपि गोत्रनिषेधादीनां जीवलिंगानां बहुत्वेन ततः प्राबल्यात्

'क्षरं प्रधानममृताक्षरं हर' इति जीवेप्यक्षरशब्ददर्शनात्, न क्षरति स्वरूपेण न विक्रियतइति तस्मिन्नप्यक्षरशब्दोपपत्तेः, अदृष्टद्वारा जगत्कारणे तस्मिन् भूतयोनित्वव्यपदेशोपपत्तेश्चेतिचेत्। उच्यते– भूतयोन्यक्षरसमाम्नानानन्तरं तस्य भूतयोनित्वविवरणार्थं प्रवृत्ते 'यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्संभवन्ति। यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्व' मिति मन्त्रे परिणाम्युपादानभूतोर्णनाभ्यादिदृष्टांतोपादानेन अक्षरस्य भूतयोनित्वं परिणाम्युपादानत्वरूपमवगमितं, तदनन्तरञ्च 'यथा सुदीप्तात्पावकाद्विस्फुलिंगास्सहस्रशः प्रभवन्ते सरूपाः। तथाक्षराद्विविधास्सोम्यभावाः प्रजायंते तत्रचैवापियंती' ति भूतयोन्यक्षरस्य सरूपकार्यप्रभवत्वोक्त्यापि तस्य भूतयोनित्वं परिणाम्युपादानत्वरूपमवगमितं, तस्मादुपक्रमोपसंहाराभ्यामवगमिते भूतयोन्यक्षरस्य प्रकृतित्वे 'यदगोत्र' मित्यादिजीवलिंगन्तत् तत्रैव कथञ्चिन्नेतव्यं। ननु उक्तरीत्या भूतयोन्यक्षरं प्रधानमित्यस्तु, 'अक्षरात्परतः परस्समाष्टिपुरुषइतित्वयुक्तं। उपक्रमादिविरोधात्। तथाहि परमोपक्रमे 'सब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राहे' ति ब्रह्मविद्यासमाख्या आम्नायते। ततः 'कस्मिन्नुभगवोविज्ञाते सर्वमिदं विज्ञातं भवती' ति एकविज्ञानेन सर्वविज्ञानमुच्यते अक्षरवाक्येऽपि परविद्यासमाख्या दृश्यते। अपिच सद्विद्यावाक्यानां प्रधानपरत्वनिरासाऽर्थं ईक्षत्यधिकरणदर्शितायुक्तयोऽत्रापि प्रवर्ततएव, अस्तिखल्वीक्षापूर्वकस्रष्टृत्वश्रवणं अत्रापि 'तपसा चीयते ब्रह्मे' ति, यतस्तपश्शब्दोऽत्र 'तपआलोचन' इति धातोर्निष्पन्नः स्रष्टव्यालोचनरूपज्ञानवाची, 'यस्य ज्ञानमयं तप' इत्यग्रे विवरणात्, आत्मशब्दश्चास्ति 'दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठित' इति, तन्निष्ठस्य मोक्षोपदेशोऽप्यस्ति 'यदापश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती' ति। हेयत्वञ्च तस्य नोच्यते, प्रतिज्ञाविरोधोऽप्यस्तीत्युक्तं, साक्षाच्च ब्रह्मणः कर्तृत्वमुपादानत्वं च श्रूयते– 'कर्तारमीशं पुरुषं ब्रह्मयोनि' मिति। एतानि प्रमाणानि

अक्षरात्परः पुरुषो ब्रह्मेति पूर्वपक्षश्चेत्, तत्तद्विषयतया उपपद्यन्ते । सोऽपि समष्टिपुरुषइति पूर्वपक्षे केषांचिदुपपत्तावपि का भवेदन्येषां गतिरिति चेत्, उच्यते– 'यस्सर्वज्ञस्सर्वविंत् यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायत' इति यस्सामान्यतो विशेषतश्च समस्तवेत्ता सर्ववेदान्तेषु प्रसिद्धः परमात्माऽस्ति 'तस्मादेतद्ब्रह्म, स ब्रह्मविद्या' मित्युपक्रमे ब्रह्मशब्देनोक्तं सकलक्षेत्रज्ञसमष्टिरूपं हिरण्यगर्भाख्यं ब्रह्म तज्ज्ञायत इत्युच्यते, तद्विद्यायाः परविद्यात्वं मोक्षफलकत्वाद्युपपद्यते, अपरब्रह्मविद्यायाः मोक्षफलकत्वञ्च वचनबलाद्युज्यते, समष्टिपुरुषज्ञानेन तद्व्यष्टयोऽन्येपि क्षेत्रज्ञाः विज्ञाताभवंतीति सर्वविज्ञानवचनमपि घटत इति पूर्वपक्षी मन्यते । एवं प्राप्ते सिद्धांतः—

भूतयोन्यक्षरं तावद्ब्रह्मैव, भूतयोनित्वविवरणार्थे 'यथोर्णनाभि'रिति मन्त्रे 'तथाऽक्षरात्सम्भवतीह विश्व' मिति विश्वशब्दस्य चेतनाचेतनात्मकसकलप्रपञ्चपरत्वात्, चेतनवर्गे च ब्रह्मकार्यत्ववत् प्रकृतिकार्यत्वस्याभावात्। न च ऊर्णनाभ्याद्युपादानोपन्यासानुसारेण विश्वशब्दः तत्परिणामत्वयोग्याचेतनमात्रपरः स्यादिति वाच्यम् । प्रतिज्ञावाक्यानुसारेण तदपेक्षितोपादानत्वांशमात्रे दृष्टान्तोपन्यास इत्युपपत्तेः, प्रतिज्ञातार्थानपेक्षितदृष्टान्तगतसाम्यान्तरस्य अनुपयुक्तत्वात् । तथा 'तपसा चीयते ब्रह्मे' ति तदनन्तरमन्त्रोऽपि तत इति पञ्चम्या प्रकृताक्षरगतस्य भूतयोनित्वस्य अन्नादिशब्दोक्तशब्दतन्मात्रादिकारणत्वप्रतिपादनद्वारा विवरणपर इति।तत्रत्यब्रह्मश्रुत्याऽपि अक्षरं ब्रह्मेत्यवसीयते । तथा 'यस्सर्वज्ञ' इति तदनन्तरमन्त्रे सर्वज्ञत्वादिब्रह्मलिंगप्रतिपादके यच्छब्दस्य प्रकृतपरत्वादपि तथाऽवसीयते। न च अक्षरे पुलिंगानुपपत्तिः, भूतयोन्यभिप्रायेण तदुपपत्तेः, योनिशब्दस्य द्विलिंगत्वात् । न च 'यथा सुदीप्ता' दिति मंत्रोक्तं कार्यकारणसारूप्यं अक्षरस्य प्रकृतित्वं गमयतीति वाच्यम् । तत्र 'भावा' इत्यनेन चेतनवर्गस्यैव ग्रहणेन तत्कारणत्वस्य ब्रह्मण्येव सत्त्वात् । अत्र हि 'सुदीप्ता'दिति विशेषणेन प्रकाशमानत्वं सारूप्यं विवक्षितं गम्यते, तत्तु चेतनवर्गस्यैवा-

स्ति । किञ्च इदं प्रकरणं प्रधानात्पुरुषाच्च भूतयोन्यक्षरं व्यावर्तयति सर्व-विज्ञानोक्त्यादिभिः । न च 'सर्वमिदं विज्ञात' मिति चेतनाचेतनात्मक-सकलप्रपञ्चविज्ञानत्वोक्तिः समष्टिपुरुषज्ञानेन व्यष्टिपुरुषाणां विज्ञातत्वविषयतया क्लेशेन योजनामर्हति । प्रकृतस्याक्षरस्य प्रधानात्समष्टिपुरुषाच्च भेदो व्यपदिश्यते– 'दिव्योह्यमूर्तः पुरुषः सबाह्याभ्यन्तरोह्यजः । अप्राणोह्यमनाश्शुभ्रः अक्षरात्परतः पर' इति । अक्षरादव्याकृतात् परो यः समष्टिपुरुषः तस्मादपि परोऽयं भूतयोन्यक्षररूपः पुरुषइत्यर्थः । ननु स्वकार्येभ्यः परं यत्प्रकृतमक्षरं तस्मात्पर इत्यर्थः किं न स्यात्, स एव च युक्तः, 'अक्षरात् परत' इति पञ्चम्योः सामानाधिकरण्यलाभादितिचेत्, उच्यते– 'सबाह्याभ्यन्तर' इत्यत्र स इति भिन्नं पदं पुरुषविशेषणं, यथा सुदीप्ता' दिति मन्त्रप्रकृतभूतयोन्यक्षरपरामर्शि सत् अक्षरात्परस्य पुरुषस्य तदभेदबोधनार्थं, न तु 'सबाह्याभ्यन्तर' इति एकं पदं, वैयर्थ्यात् । 'सबाह्याभ्यन्तर' इति सर्वगतत्वोक्त्यैव सकलवस्तुसंसर्गसिद्धेः । एवंभूतयोन्यक्षरस्य अक्षरात्परस्य पुरुषस्य च अभेदेन ब्रह्मरूपत्वसिद्धौ पंचम्यन्ताक्षरपदवाच्यमव्याकृतमेव पर्यवस्यति । 'अक्षरात्परतः पर' इत्यतः प्राचीने मंत्रे 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्या' मित्यक्षरपुरुषपदसामानाधिकरण्यादप्ययमर्थो निश्चीयते । अपि च 'अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवीह्येष सर्वभूतान्तरात्मे' ति मंत्रे प्रकृतं भूतयोन्यक्षररूपं पुरुषं 'अस्ये' ति सर्वनाम्ना परामृश्य त्रैलोक्यशरीरत्वोपन्यासादपि न प्रधानमक्षरं, नापि समष्टिपुरुषोऽक्षरात्परतः परः, यद्यपि पुराणादिषु हिरण्यगर्भस्यापि त्रैलोक्यात्मकं वैराजं शरीरं प्रसिद्धमस्ति, तथापि यस्मिन् चराचरात्मकं समस्तं जगत् हृदयवत्प्रतिष्ठितं तथाभूतं तत्तस्य न सम्भवति । यत्सम्भवति तदपि परमात्मात्मकमेव, 'सृष्ट्यन्तरं करिष्यामि त्वामाविश्य प्रजापत' इति वचनात् । न च 'अग्निर्मूर्द्धे' ति मंत्रोक्तं सर्वभूतान्तरात्मत्वं हिरण्यगर्भे सम्भवति । तस्मादक्षरं अक्षरात्परतः परश्च परमात्मैव ॥

संग्रहकारिके ॥

भजति खविषयाणां लाघवात्सूक्ष्मरूपं
जडजगदनुवृत्तं दृश्यतादेर्निषेधः।
तदभिहितमथर्वण्यक्षरं स्यात्प्रधानं
तदुपरि च निरुक्तस्तत्परः पंचविंशः॥
सर्वज्ञत्वादिधर्मोक्तेः परएवाद्यमक्षरम्।
अन्यदव्याकृतन्तस्माद्यत्परस्तत्परोपि सः॥
इति अदृश्यत्वादिगुणकाधिकरणम्॥ ९॥

---

**वैश्वानरस्साधारणशब्दविशेषात्॥ २५॥**

**स्मर्यमाणमनुमानं स्यादिति॥ २६॥**

**शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते॥ २७॥**

**अत एव न देवता भूतञ्च॥ २८॥**

**साक्षादप्यविरोधं जैमिनिः॥ २९॥**

**अभिव्यक्तेरित्याश्मरथ्यः॥ ३०॥**

**अनुस्मृतेर्बादरिः॥ ३१॥**

**संपत्तेरिति जैमिनिस्तथाहि दर्शयति॥३२॥**

**आमनंति चैनमस्मिन्॥ ३३॥**

त्रैलोक्यात्मकरूपोपन्यासादक्षरवद्वैश्वानरोपि परमात्मेति निर्णीयत इति सङ्गतिः। छन्दोगाः 'आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो-ब्रूही'ति ऋषिभिः पृष्टस्य केकयराजस्योत्तरेष्वामनन्ति— 'यस्त्वेतमेवं प्रादेश-मात्रमभिविमानमात्मानं वैश्वानरमुपास्त' इति। तत्र किमयं वैश्वानरः परमात्मेति शक्यनिर्णयः उताशक्यनिर्णयइति वैश्वानरशब्दस्य साधार-

ण्यात् संशये पूर्वपक्षः । वैश्वानरशब्दश्चतुर्ष्वर्थेषु दृश्यते । जाठराग्नौ तावत् 'अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैषघोषो भवति यदेतत्कर्णावपिधाय शृणोती' ति, महाभूततृतीये च 'विश्वस्माअग्निं भुवनाय देवाः वैश्वानरं केतुमह्नामकृण्व' न्निति, देवतायांच 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्री' रिति, परमात्मनिच 'सएषवैश्वानरो विश्वरूपः प्राणोग्निरुदयत' इति । ननु अयमादित्यविषयोवैश्वानरशब्दः, न तु परमात्मविषयः, तदनन्तरं 'तदेतदृचाभ्युक्त' मित्युपक्रम्य हि 'सहस्ररश्मिश्शतधावर्तमानः प्राणः प्रजानामुदयत्येषसूर्य' इति सौरमन्त्रस्य वैश्वानरविषयत्वेनोदाहरणात्, तत्र 'सएष' इति सर्वनाम्नः 'आदित्योहप्राण' इति प्रकृतादित्यपरत्वाच्चेतिचेत् उच्यते —

न केवलमादित्यपरस्तत्र वैश्वानरशब्दः, किंतु आदित्यान्तर्वर्तिपरमात्मपर्यन्तः, 'अथोत्तरेण तपसा श्रद्धया विद्ययाऽऽत्मानमन्विष्यादित्यमभिजायन्ते एतद्वै प्राणानामायतनममृतमभयं परायणमेतस्मान्न पुनरावर्तन्त' इत्यग्रे श्रवणात् । ननु 'को न आत्मा किं ब्रह्म' त्युपक्रमगतब्रह्मश्रुत्या वैश्वानरः परमात्मेति शक्यनिर्णयः । न च वाजसनेयिशाखायां 'वैश्वानरं ह वै भगवन् सम्प्रति वेद तन्नो ब्रूही' ति वैश्वानरशब्देन उपक्रमात् उपक्रमो न विनिगमक इति वाच्यम् । तस्य साधारणस्य वैश्वानरशब्दस्य छान्दोग्योपक्रमगतब्रह्मश्रुत्यनुसारेण परमात्मनि पर्यवसानोपपत्तेरितिचेत् मैवम् । 'को न आत्मा किं ब्रह्म' ति विमृष्टवतां प्राचीनशालादीनामग्रे द्युप्रभृतिषु वैश्वानरात्मदृष्टिर्वर्णितेति तदनुसारेण तदीयवचनगतयोरात्मब्रह्मश्रुत्योरात्मब्रह्मदृष्टिविषयत्वाकारेण अन्यत्र गौणतयैव प्रयोगात् । एवं ह्युपाख्यायते—औपमन्यवादयः पंच महर्षयः 'कोनआत्मा किंब्रह्म' ति मीमांसित्वा निश्चयमलभमानाः वैश्वानरोपासनापरमुद्दालकं गत्वा तेनापि तस्यामकृत्स्नवेदिना अश्वपतिः कैकयो वैश्वानरमुपास्ते तमभ्यागच्छामेत्युक्ताः उद्दालकषष्ठास्तमभिजग्मुः, स च तेषां ज्ञानं परीक्ष्य ततो वक्तव्यशेषं वक्ष्यामीत्यभिसन्धाय औपमन्यव कं त्व-

मात्मानमुपास्त' इत्यादिना तान् षडपि ऋषीन् क्रमेण पृष्ट्वा तैः 'दिव-मेव भगवोराज' न्नित्यादिभिर्यथाक्रमं द्युसूर्यानिलाकाशजलावनिषु वैश्वान-रबुद्ध्या स्वैरुपास्यमानतयोक्तेषु दिवादयो वैश्वानरं प्रति मूर्द्धचक्षुःप्राणम-ध्यस्थानपादावयवत्वेनोपास्याः, न तु वैश्वानरत्वेनेति व्यस्तोपासनाः प्रतिषिध्य समस्तोपासनाविषयस्य वैश्वानरस्य प्रागुपक्षिप्तं द्युमूर्द्धत्वादिवि-शिष्टं रूपमेकीकृत्योपादिदेश 'मूर्द्धैव सुतेजा' इत्यादिनेति । तस्माद्वैश्वा-नरः परमात्मेति न शक्यनिर्णयइति । एवं प्राप्ते सिद्धांतः- परमात्मेति शक्यनिर्णयएव, 'कोनआत्मा किं ब्रह्मे' ति जीवात्मनामात्मभूतं परमा-त्मानं जिज्ञासमानैस्तदभिज्ञइति राजानमुपसन्नैः प्राचीनशालादिभिः पृष्टेन राज्ञोपदिष्टत्वात् । न च तेषामात्मब्रह्मशब्दयोर्गौणत्वाभिमानश्शङ्कनीयः, यतः 'कोनआत्मा किं ब्रह्मे' ति विमर्शः अस्माभिरन्योन्यविरोधेन आ-त्मब्रह्मबुद्ध्योपास्यमानेषु द्युप्रभृतिषु वस्तुतः किन्तथाभूतं ब्रह्म।किमेतेषामन्य-तममन्यद्वेति वस्तुतत्वविषयः, न तु तेषु किंतथाभूतब्रह्मदृष्टिमारोप्योपास्य-मित्यारोपितरूपविशिष्टविषयः, 'अन्नंब्रह्म मनोब्रह्मे' त्यादिवत् अनेकत्र प्रतीके ब्रह्मदृष्ट्यारोपसंभवात् विरोधाभावेनास्मदुपास्यानां द्युप्रभृतीनां मध्ये किंतथाभूतब्रह्मदृष्ट्योपास्यमिति निर्द्धारणानपेक्षणात् । अतएव 'दिवमेव भगवोराज' न्नित्यादिवाक्यैः स्वस्वभ्रमएवोद्घाटितः, सम्भवति ह्यद्यापि चन्द्रसूर्यादिषु केषांचित् ब्रह्मत्वभ्रमवत् द्युप्रभृतिषु तेषां तद्भ्रमः, अतस्तत्र गौणत्वशङ्काऽनास्पदाभ्यामात्मब्रह्मश्रुतिभ्यां वैश्वानरः परमात्मेति शक्यएव निर्णेतुं। किंच 'सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती' त्यनेन सर्वत्र वर्तमानमनवधिकातिशयानन्दरूपतया भोग्यं परंब्रह्मानुभवतीत्युच्यते, न तु कर्मवश्यैरात्मभिर्यदन्नं भुज्यते तदत्तीति, तस्य मुमुक्षून् प्रति हेयत्वात् । परमानन्दानुभवफलञ्च परमात्मपक्षएव घटते । 'तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयंत' इत्युच्यमानं सर्वपापप्रदाहफलञ्च तत्पक्षएव घटते । द्युप्रभृतिपृथिव्यन्तत्रैलोक्यात्मकं शरीरमिहोपादिश्यमानं 'अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्या' विति श्रुतौ 'द्यां मूर्द्धानं यस्य विप्रा वदंति

खं वै नाभिश्चन्द्रसूर्यौ च नेत्रे । दिशश्श्रोत्रे विद्धि पादौ क्षितिञ्च सोऽचिन्त्यात्मा सर्वभूतप्रणेते' त्यादिस्मृतिषु च परमात्मनः प्रसिद्धं रूपं प्रत्यभिज्ञापयद्वैश्वानरं परमात्मानमवगमयति। स्यादेतत्, उक्तहेतुभिः वैश्वानरः परमात्मेति नशक्यनिर्णयः, शब्दादिभ्योन्तःप्रतिष्ठानाच्च जाठरइत्यपि प्रतीतेः । अग्निशब्दस्तावत् वाजसनेयके 'सएषोग्निर्वैश्वानर' इति वैश्वानरसमानाधिकरणश्श्रूयते । छांदोग्ये च 'हृदयं गार्हपत्योमनोऽन्वाहार्यपचनआस्यमाहवनीय' इति वैश्वानरस्याग्नित्रयस्थानकल्पनं क्रियते । 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं सयां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहे' त्यादिना वैश्वानरस्य प्राणाहुत्याधारत्वमाम्नायते । तस्य च पुरुषेऽन्तःप्रतिष्ठितत्वं वाजसनेयिभिराम्नायते– 'सयोहैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेदे'ति। एवमुक्तहेतुभिः वैश्वानरोजाठरइत्यपि प्रतीयत इति चेत्, नैषदोषः । त्रैलोक्यशरीरस्य वैश्वानरस्य परमात्मनोजाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात् । अग्निशब्दादिभिः न केवलो जाठरः प्रतिपाद्यते, किन्तु तद्विशिष्टः परमात्मा, केवलस्य जाठरस्य त्रैलोक्यशरीरत्वासंभवात्, 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विध' मिति गीतासु भगवतो जाठराग्निशरीरतया अशितपीतान्नादिपक्तृत्वप्रतिपादनाच्च । एतेभ्यएव हेतुभ्यः अग्निदेवतायाः तृतीयमहाभूतस्य च वैश्वानरत्वशङ्काऽपि प्रत्युक्ता । एवमिहाग्निशब्दस्य जाठराग्निशरीरकपरमात्मपरतया गतिरुक्ता । जैमिनिस्त्वाचार्योमन्यते– यथा वैश्वानरशब्दस्साधारणोपि परमात्मासाधारणधर्मदर्शनात् विश्वेषां नराणां नेता विश्वानरः स एव स्वार्थिकाण्प्रत्ययेन वैश्वानर इत्येवं परमात्माभिधायको निश्चीयते, एवमग्निशब्दोऽग्रनयनादियोगेन परमात्माभिधायक इति निश्चीयते, तस्य योगस्य ज्वलनादपि सर्वान्तरात्मनि परमात्मन्येव सुप्रतिष्ठितत्वादिति । ननु अपरिच्छिन्नस्य परमात्मनः 'यस्त्वेतमेवं प्रादेशमात्र' मिति श्रूयमाणं द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते, उपासकबुद्ध्यारोहार्थतया तथा

प्रादेशमात्रत्वप्रतिपादनं, न तु परिच्छिन्नत्वाभिप्रायेण । तत्रैव 'अभिविमान' मिति अभितो विगतमानत्वोक्तेः । तथाऽपि प्राकृतद्युमूर्द्धादिमत्त्वं अप्राकृतरूपस्य परमात्मनो न सम्भवतीति चेन्न । उपासनार्थं तथा पुरुषविधत्वकल्पनोपपत्तेः । परमात्मा वैश्वानरश्चेत् उरःप्रभृतीनां 'उरएव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्य' इत्यादिना कथं वेद्यादित्वोपदेशः, जाठरपरिग्रहे हि स उपपद्यतइति चेत्, उच्यते– तस्य वैश्वानरस्य समाराधनभूताया उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनार्थोऽयमुरःप्रभृतीनां वेद्यादित्वोपदेशः । अत एव प्राणाहुतेरग्निहोत्रत्वसम्पत्तिं परमात्मोपासनोचितफलञ्च दर्शयति श्रुतिः —'स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्त' इति । ननु परमात्मनो द्युप्रभृतिशरीरत्वमयुक्तं, उपासकस्य मूर्द्धाद्यवयवानामेव द्युप्रभृतित्वेनोपासनाविधानात्, 'तस्य हवा एतस्ये' त्यादि ह्युपासकस्य द्युमूर्द्धत्वादिप्रतिपादकं, 'उर एव वेदि' रित्यादिसमभिव्याहाराबिति चेत् सत्यं, उपासकद्युमूर्द्धत्वाद्यनुसन्धानं न परमात्मद्युमूर्द्धत्वादिविरोधि, उभयस्यापि विहितत्वात् । 'प्रादेशमात्र'मिति हि परस्य द्युमूर्द्धत्वादिकमुक्तं, तदीयमेव द्युमूर्द्धत्वादिकमुपासकस्याप्युक्तं, 'तस्य हवा एतस्यात्मनो वैश्वानरस्ये' ति तदीयत्वेन परामृष्टमेव हि द्युमूर्द्धत्वादिकमुपासके वर्णितम् । अतः परस्य मूर्द्धादिना अहं द्युमूर्द्धा परस्य चक्षुषा सूर्येण अहं सूर्यचक्षुक इत्यादिरूपेणानुसन्धानपरस्य प्राणाग्निहोत्रेणाराधनं कार्यम् । तस्मादिहोपक्रान्तो वैश्वानरः परमात्मेति सिद्धम् ॥

संग्रहकारिके ॥

वैश्वानरो न परमात्मतया नियन्तुं शक्यश्चतुर्विषयसंशयहेतुसत्त्वात् ।
साधारणं हि जठराग्नितृतीयभूततद्दैवतस्य च पदं परमात्मनश्च ॥

मैवं मुमुक्षुप्रश्नाच्च ब्रह्मशब्दश्रुतेश्च सः ।
तादृक्फलोपदेशाच्च परं ब्रह्मावधार्यते ॥
इति वैश्वानराधिकरणम् ॥६॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजि-द्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे प्रथमस्याध्यायस्य

द्वि ती यः पा दः ॥

---

**द्युभ्वाद्यायतनं स्वशब्दात् ॥१॥**

**मुक्तोपसृप्यव्यपदेशाच्च ॥२॥**

**नानुमानमतच्छब्दात्प्राणभृच्च ॥३॥**

**भेदव्यपदेशाच्च ॥४॥**

**प्रकरणात् ॥५॥**

**स्थित्यदनाभ्यां च ॥६॥**

आथर्वणिकाःसमामनंति— 'यस्मिन् द्यौः पृथीवी चांतरिक्षमोतंमनस्स-हप्राणैश्च सर्वैः तमेवैकंजानथात्मानमन्यावाचो विमुंचथ अमृतस्यैषसेतु' रिति । अत्र द्युभ्वाद्यायतनं जीवः परोवेति संशये जीवइति तावत्प्राप्तं, 'अराइव रथनाभौ संहतायत्र नाड्यः सएषोऽन्तश्चरते बहुधा जायमान' इति उत्तरमंत्रे नाड्याधारत्वशरीरांतस्संचारजन्मवत्त्वानां जीवलिंगानामा-म्नानात् , तत्र आदिमन्त्रे 'ओतं मनस्सह प्राणैश्च सर्वै'रिति 'मनःप्राणा-श्रयत्वरूपजीवलिंगाम्नानात्, 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पंचधा संविवेश । प्राणैश्चितं सर्वमोतं प्रजानां यस्मिन् विशुद्धे वि-भवत्येष आत्मे'त्यन्यत्र जीवे मनःप्राणयोरोतत्वश्रवणात् । द्युपृथिव्याद्या-यतनत्वन्तु जीवस्य अदृष्टद्वारा सङ्गमयितव्यमित्येवं प्राप्तेऽभिधीयते—

द्युभ्वाद्यायतनं परमात्मा, तदसाधारणामृतसेतुत्वश्रवणात्, अमृतसेतुत्वं ह्यमृतत्वप्रापकत्वं, सेतुर्हि नद्यादिषु कूलस्य प्रतिलम्भकः। एवं संसारार्णवपारभूतस्यामृतस्य प्रतिलम्भक इत्यर्थः। आत्मशब्दश्चात्र स्वशब्दः, सद्व्याप्नोतेर्मनूप्रत्यये बाहुळके दकारे च सति निष्पन्नः। नियंतृत्वेन सर्वत्र व्याप्तिमिति परमात्मन्येव मुख्यवृत्तिः। नाड्याधारत्वं परस्यापि सम्भवति 'सन्ततं सिराभिस्तु लम्बत्याकोशसन्निभ' मित्युपक्रम्य 'तस्याश्शिखाया-मध्ये परमात्मा व्यवस्थित' इत्याम्नानात्। बहुधा जायमानत्वमपि तस्यास्ति, 'अजायमानो बहुधा विजायते, अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायये' त्यादिश्रुतिस्मृतिदर्शनात्। किंच 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति, यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैतिदिव्य' मिति मुक्तप्राप्यत्वश्रवणादपि द्युपृथिव्याद्यायतनं परमात्मा। अपि च यथाऽस्मिन् प्रकरणे प्रधानप्रतिपादकशब्दाभावात् न प्रधानं द्युपृथिव्याद्यायतनं, एवंजीवोऽपि, तत्प्रतिपादकशब्दस्याप्यभावात्। ननु इदं दृष्टांतदार्ष्टान्तिकद्वयमप्ययुक्तं। तथाहि— प्रधानस्य तावत् 'यस्मिन् द्यौ'रित्यादिरेव तच्छब्दः, अक्षरब्राह्मणे 'यदूर्ध्वं गार्गि दिवो यदवाक्पृथिव्या' इत्यादिना प्रधानस्य द्युपृथिव्यादिसकललोकाधारत्वप्रतिपादनात् 'यस्यिन् द्यौ' रित्यस्य यच्छब्दयोगेन तदनुवादत्वप्रतीतेः। न च तस्मिन् 'अमृतस्यैषसेतु' रिति व्यपदेशानुपपत्तिः। अमृतशब्दोह्यत्र ब्रह्मपरः, नत्वमृतत्वरूपमोक्षपरः। 'यस्मिन् द्यौ' रिति मन्त्रात्पूर्वं 'तदेतत्सत्यममृत' मिति 'आनन्दरूपममृतं यद्विभाती' ति च ब्रह्मणि अमृतशब्दाम्नानेन तस्यैव अत्रामृतशब्देन प्रत्यभिज्ञानात्। अतः प्रधानं 'अमृतस्यैषसेतु' रिति व्यपदेष्टुं शक्यम्। ब्रह्माधीनत्वेन ब्रह्मसंबन्धित्वात्। 'सेतु' रित्यपि व्यपदेष्टुं शक्यम्। सेतुशब्दोहि 'षिञ्बन्धने'इति धातोः व्युत्पन्नोबन्धहेतुमाचष्टे। न च बन्ध-

हेतुमात्रं जलबन्धहेतुमात्रं वा तदर्थः, घटोदरनिस्सरज्जलबन्धहेतुमधूच्छिष्टादौ तदप्रयोगात्, किंतु पारावारमध्यवर्तित्वविशेषितं जलबन्धनहेतुत्वं तदर्थः, तस्मादिह लक्षकेण सेतुशब्देन पारवत्त्वं लक्षयितुं युक्तं, सहजत्वात् शब्दार्थैकदेशत्वाच्च । न तु प्रापकत्वं, कादाचित्कत्वात् शब्दार्थबहिर्भूतत्वाच्च । पारवत्त्वन्तु प्रधानस्यैव अस्ति, न ब्रह्मणः, 'महद्भूतमनंतमपार' मिति श्रुतेः । आत्मशब्दोऽपि देहपरतया तस्मिन्नुपपद्यते, 'आत्मा जीवे धृतौ देह' इत्यादिस्मरणात् । 'अन्यावाचो विमुंचथे' त्येतदपि प्रधानमेव देहं जानीध्वं स्थूलदेहविषयास्तु देहत्ववाचो विमुंचथ, देहविविक्तात्मज्ञानार्थं हि देहोमुमुक्षुभिर्ज्ञातव्यः, सतु न स्थूलदेहः, आगमापायिनः ततो विवेकस्य सुज्ञानत्वात् । किंतु अन्तःकरणादिरूपापन्नाव्याकृतात्मा सूक्ष्मदेह इति, तस्मात् प्रधानं द्युभ्वाद्याधार इति घटते । जीवइति पक्षोऽपि घटते, जीवोपकरणानां तेषां जीवादृष्टायत्तोत्पत्तिस्थितिकत्वेन तदाश्रितत्वव्यपदेशोपपत्तेः । यथावा अरानाभौ समर्पिताएवमस्मिन् प्राणे सर्वं समर्पितमिति भूमविद्यायां, 'एवमेताभूतमात्राः प्रज्ञामात्रास्वर्पिता' इति प्रतर्दनविद्यायांच, अचिद्वर्गस्य जीवाश्रितत्वप्रतिपादनाच्च । 'एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पंचधा संविवेशे' ति 'प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येषआत्मे' ति मुण्डकएव अग्रे मनसः प्राणानांच जीवाश्रितत्वप्रतिपादनात् । आत्मशब्दश्च तस्मिन्नुपपद्यते 'प्रणवोधनुश्शरोह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवे' दिति प्राचीनमन्त्रे तत्रैव आत्मशब्दस्य प्रयुक्तत्वात् । तमेवैकं जानथात्मान' मित्येतदपि तस्मिन्नुपपद्यते ।

'मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाती' ति जीवविज्ञानस्य ब्रह्मदर्शनहेतुत्वोक्त्या तस्याप्राधान्येन अपेक्षितत्वात् । 'अन्या वाचो विमुञ्चथे' त्येतदपि तस्मिन्नुपपद्यते । 'धनुर्गृहीत्वौपनिषदं महास्त्रं शरंह्युपासानिशितं सन्दधीत । आयम्य तद्भावगतेन चेतसा लक्ष्यन्तदेवाक्षरं सोम्य

विद्धी' ति व्यवहितपूर्वमंत्रे देहस्थौल्यादिविशिष्टतया भासमानस्य जीवस्य उपासनया देहादिविवेकदार्ढ्यापादनेन तनूकरणोक्तेः, जीवोपासनायाञ्च तदन्यविषयवाग्विमोकावश्यम्भावात् । 'अमृतस्यैष सेतु' रिति व्यपदेशस्तु प्रधाने वर्णितयैव रीत्या जीवेप्युपपद्यते । तस्मात् प्रधानजीवपक्षयोः न काचिदनुपपत्तिरिति चेत् उच्यते– 'यस्मिन् द्यौ' रित्यादेरक्षरब्राह्मणोक्ताक्षररूपाधारान्तरसापेक्षद्युपृथिव्याद्याधारप्रधानानुवादकत्वन्तावदयुक्तम् । सन्मूलास्सोम्येमास्सर्वाः प्रजा' इत्यादि छान्दोग्यश्रुत्याम्नातनिरपेक्षसर्वाधारब्रह्मानुवादकत्वे सम्भवति सापेक्षाधारानुवादकत्वकल्पनायोगात् । एवं च द्युस्वादिसर्वाधारत्वोक्तिनिर्वाहार्थं अपेक्षितत्वेन आत्मशब्दस्य व्यापकत्वरूपार्थएव ग्राह्यः, समभिव्याहृतपदान्तरैकवाक्यत्वयोग्यएव लाक्षणिकार्थो ग्राह्यइति अत्राधिकरणे व्यवस्थापितत्वात् । एवं ब्रह्मैकान्तिकद्युपृथिव्याद्याधारत्वात्मश्रुत्यनुसारेण 'निष्कळं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । अमृतस्य परं सेतुं दग्धेन्धनमिवानल' मिति श्वेताश्वतरे ब्रह्मणि अमृतसेतुत्वव्यपदेशदर्शनात्, तदनुसारेण 'अमृतस्यैषसेतु' रित्यस्य अमृतस्यस्वस्य स्वयमेव प्रापक इत्येवार्थो ग्राह्यः, तथाऽपि उत्तरमन्त्रगता शरीरान्तस्सञ्चारोक्तिर्व्यापके ब्रह्मणि न युज्यत इति चेत् न । सुबालोपनिषदि– 'यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चर' न्नित्यादिवाक्यसन्दर्भे सर्वनियन्तृतया सर्वत्र व्याप्तेस्संचारत्वेन व्यपदेशदर्शनात्, इहापि तस्यास्तथात्वेन व्यपदेशोपपत्तेः । अपि च अस्मिन् प्रकरणे 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक' इति मंत्रः श्रूयते । अस्यार्थः— समाने एकस्मिन् वृक्षे वृक्षवद्वृश्चनार्हस्वभावे शरीरे निमग्नः पांसुपुञ्जनिमग्नजलकण इव तदैक्यमापन्नः पुरुषो जीवः अनीशया प्रकृत्या मुह्यमानश्शोचति । अयं यदा स्वस्मादन्यं जुष्टं प्रीयमाणं प्रसीदन्तं सर्वस्येशं अस्यचेश्वरस्य निखिलजगन्नियमनरूपं महिमानं च पश्यति तदा वीतशोको भवतीति । अस्मिन् मंत्रे यद्यपि ब्रह्मवज्जीवोऽप्युपात्तः, तथाऽपि द्रष्टृत्वसमानाधिकरणं मुह्यमानत्वं दृश्यत्व-

समानाधिकरणमीशत्वं च व्यपदिशन्तीयं श्रुतिः 'तमेवैकं जानथे'ति ज्ञेयतया निर्दिष्टं द्युभ्वाद्याधारमीशमेव प्रत्यभिज्ञापयति । किं च प्रकरणमिदं परमात्मन इति प्रागक्षराधिकरणे दर्शितम् । अतोऽप्ययं परमात्मा । न च अक्षरप्रकरणादेव अक्षराधिकरणसिद्धात् द्युपृथिव्याद्याधारस्य परमात्मत्वसिद्धौ किमनेनाधिकरणेनेति शङ्कनीयम् । प्रकरणस्य नाडीसम्बन्धबहुधाजायमानत्वमनःप्राणाधारत्वादिभिः जीवैकांतिभिः विच्छेदशङ्कायां तत्परिहारार्थत्वात् । अपि च अस्मिन्प्रकरणे 'द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीती'ति मंत्रः श्रूयते । अत्र यद्यपि कर्मफलात्ता जीवः तदनश्नन् दीप्यमानः परमात्मा च प्रतिपाद्यते, तथाऽपि द्युभ्वाद्याधारः परमात्मैवेति युक्तं, दीप्यमानत्वोक्त्या तत्रैव प्राकरणिकसर्वज्ञत्वाद्यन्वयस्वारस्यात् । अनेन सूत्रेण सर्वविज्ञानप्रतिज्ञोपक्रमात् 'ब्रह्म वेद ब्रह्मैव भवती'त्युपसंहाराच्च जीवब्रह्माभेदे प्रकरणस्य तात्पर्यमिति शङ्कानिराकरणमपि कृतम् । 'अभि, अनश्न'न्नित्युपपत्तिसहितभेदव्यपदेशेन तयोर्भेद एव सिध्येदिति ॥

सङ्ग्रहकारिके ॥

द्युभ्वाद्यायतनं जीवो मनःप्राणान्वयश्रुतेः ।
समनन्तरमन्त्रे च नाडीयोगजनिश्रुतेः ॥
परमेश्वर एव स्यात् सर्ववस्तुविधारकः ।
अमृतप्रापयितृताप्रमुखप्रतिपादनात् ॥

इति द्युभ्वाद्यधिकरणम् ॥१॥

---

## भूमा सम्प्रसादादध्युपदेशात् ॥७॥
## धर्मोपपत्तेश्च ॥ ८ ॥

मुण्डकेपरमात्मप्रकरणाविच्छेदेन परमात्मत्वं साधितम्, तर्हि भूमविद्यायाः जीवप्रकरणाविच्छेदेन जीवपरत्वमिति शङ्कया उत्थानात्सङ्गतिः । छन्दोगास्समामनंति । 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजा-

नाति सभूमा यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्प' मिति। भूमशब्दः 'पृथ्वादिभ्य इमनिज्वे' ति पृथ्वादिगणपठितात् बहुशब्दात् भावार्थे इमनिच्प्रत्यये 'बहोर्लोपो भू च बहोरि' ति बहोः परस्य इमनिचः इकारलोपे बहुशब्दस्य भूइत्यादेशे च सति निष्पन्नो बहुत्ववाची। यद्यपि बहुत्वं वैपुल्यं संख्याविशेषश्च। तथाऽप्यत्र वैपुल्यमर्थः, 'यत्रान्यत्पश्यति तदल्प' मित्यल्पप्रतियोगित्वश्रवणात्, पूर्वत्र 'आकाशोवाव तेजसो भूया' नित्यादौ बहुत्वसंख्याहीनेऽप्याकाशादिके वैपुल्यवति बहुशब्दनिष्पन्नभूयश्शब्ददर्शनाच्च। भूमशब्दोऽयमल्पशब्दनिर्दिष्टधर्मिप्रतियोगिविषयत्वादेव धर्मिपरः, न धर्ममात्रपरः। ततश्च भूमेति विपुल इत्यर्थः। वैपुल्यविशेष्यश्चात्मा। 'तरति शोकमात्मवि' दिति प्रकृत्य भूमानमुपादिश्य 'आत्मैवेदं सर्व' मित्युपसंहारात्। तत्र किमयं भूमविशिष्टः प्रत्यगात्मा परमात्मा वेति संशये प्रत्यगात्मेति तावत्प्राप्तम्। आत्मजिज्ञासयोपसेदुषे नारदाय नामादिप्राणपर्यन्तेषु उपास्यतयोपदिष्टेषु 'अस्ति भगवो नाम्नो भूयः, अस्ति भगवो वाचो भूय' इत्यादिप्रश्नतत्प्रतिवचनवच्च 'अस्ति भगवः प्राणाद्भूय' इति प्रश्नस्य 'अदोवाव प्राणाद्भूय' इति प्रतिवचनस्यचाभावेन आत्मोपदेशस्य प्राणपर्यन्तताप्रतीतेः प्राणशब्दस्य प्राणसहचरिते प्रत्यगात्मनि वृत्त्युपपत्तेः, 'प्राणोह पिता प्राणो माता प्राणो भ्राता प्राणस्स्वसे' त्यादिचेतनवाचिपित्रादिशब्दसामानाधिकरण्याच्च पित्रादिरूपजीववाचित्वावगमात्, नत्वयमात्मोपदेशः परमात्मविषय इति युक्तम्। 'स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वा आचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वास्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसी' त्यादिना सप्राणेषु पित्रादिषु अधिक्षिप्यमाणेषु हिंसोपक्रोशवचनात्। 'अथ यद्यप्येनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषन्दहेन्नैवैनं ब्रूयुः पितृहासीति न मातृहासी' त्यादिना तेषु उत्क्रान्तप्राणेषु शूलेन सम्यक्प्रक्षेपपूर्वकं व्यत्यस्य समन्ताद्दह्यमानेष्वपि हिंसाव्यवहाराभाववर्णनाच्च। न हि परस्य हिंस्यत्वमस्ति, न वा तस्योत्क्रान्तिरस्ति। न च प्राणशब्दोक्तजीवप्रतिपा-

दनानन्तरं 'एष तु वा अतिवदति यस्सत्येनातिवदती' ति तुशब्देन तत्प्रकरणविच्छेदद्योतनात् ततःप्रभृति सत्यशब्दोक्तपरमात्मप्रकरणमिति तस्मिन् प्रकरणे प्रतिपाद्यमानो भूमा परमात्मैव स्यादिति शङ्कनीयम् । 'सवा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवती' ति प्राणवादिनो यदतिवादित्वं स्वोपास्यस्यान्यतउत्कर्षवादित्वरूपमुक्तं तस्य 'एषतुवा' इति वाक्ये प्रत्यभिज्ञानेन प्रकरणविच्छेदाभावात् । 'एष तु वा अग्निहोत्री यस्सत्यं वदती' त्युक्तौ प्रसिद्धाग्निहोत्रिण इव प्रकृतप्राणातिवादिनस्सत्यवदनमङ्गं विधीयते, सत्येव तु सत्यवचने अग्निहोत्रित्ववत् प्राणातिवादित्वं प्रतिष्ठितं भवतीत्येतदर्थतया तुशब्दसामञ्जस्यात् । तस्मात् प्रत्यगात्मैवात्र प्रतिपाद्यः । अत एव 'अहमेवाधस्तादहमुपरिष्टा' दित्यारभ्य 'अहमेवेदं सर्व' मित्युपसंहारे प्रत्यगात्मन एव वैभवमुपदिश्यते, तस्य च भूमशब्देन 'अहमेवाधस्ता' दित्यादिनाचोक्तं वैपुल्यं मुक्तौ धर्मज्ञानविकासादुपपद्यत' इति । एवं प्राप्ते सिद्धांतः—

'एषतु वा अतिवदति यस्सत्येनातिवदती' त्यत्र तुशब्दसत्यशब्दाभ्यां प्राणातिवादिनोऽन्यः सत्यातिवादी प्रतीयते । 'अपशवोवा अन्ये गोअश्वेभ्यः पशवो गोअश्वा' नित्यत्र पश्वन्तरेभ्योगोअश्ववत् प्रकृतप्राणातिवादिनः सत्यातिवादी प्रशस्त इत्यपि प्रतीयते। ततश्च तस्मादेतस्य प्राशस्त्यं तदतिवदननिमित्तात् प्राणात् एतदतिवदननिमित्तस्य सत्यस्याधिक्येनैवेति पर्यवस्यतीत्यनेन वाक्येन प्रकृताज्जीवात् अधिकत्वेन भूमोपदिश्यते। नचात्र 'एषतु वा अग्निहोत्री' ति वाक्यन्यायावतारः, तत्रहि द्रव्यदेवताऽन्तराभावेन अग्निहोत्रांतराप्रतीतेः तुशब्दस्वारस्यभङ्गः, इह प्रकृतातिवदननिमित्तप्राणव्यतिरिक्तसत्यशब्दोक्त परमात्मरूपातिवदननिमित्तान्तरप्रतीतेः किमिति तत्स्वारस्यभङ्गः कार्यः । सत्यशब्दोहि परमात्मवाचकः, छांदोग्यएव 'तस्य ब्रह्मणोनाम सत्यमिती' ति श्रवणात्। 'सत्येने' ति तृतीयाविभक्तिः करणत्ववाचिनी तस्यातिवदननिमित्तत्वमाह । अतस्तुशब्दसत्यनामकरणविभक्तिस्वारस्यभङ्गेन प्रकृतप्राणातिवादिविषयत्वक-

कल्पनाया नावकाशः। अतश्च प्रकृतात् प्राणशब्दोक्तात् जीवादधिकत्वेनो-पदेशात् सत्यशब्दोक्तोभूमा परमात्मा । नच 'महतःपरमव्यक्त' मिति श्रुतौ जीवादधिकत्वेनोपदिष्टे शरीरे व्यभिचारान्नायं हेतुरिति वाच्यम्। जीवाधि-कात्मत्वेनोपदेशे तात्पर्यात्। एवं निरतिशयानन्दत्वश्रवणादपि भूमा परमा-त्मा । ननु सत्यशब्दोक्तोभूमैव प्रकरणी परमात्मा, प्राणशब्दोक्तोजीवस्तु तदधस्तनपर्वभूत इति सिद्धांते 'अस्ति भगवोनाम्नोभूयः वाग्वावनाम्नोभूयसी' त्यादि प्रश्नप्रतिवचनवत् 'अस्ति भगवन् प्राणाद्भूय' इति 'सत्यंवावप्राणा-द्भूय'इति भाव्यं प्रश्नप्रतिवचनाभ्यां । न हि यदर्थमन्यत्प्रक्रांतं तदनुक्तिर्यु-क्तेतिचेत्, उच्यते—पूर्वपर्यायेष्वनुक्तस्यातिवादित्वस्य प्राणपर्याये प्रतिपाद-नात् उपक्रांतात्मोपदेशः प्राणएव समाप्त इति मत्वा नारदे भूयः पृच्छति सनत्कुमारः प्राणविज्ञानमप्युपक्रांतात्मविषयं नभवतीति न तेन सम्यगति-वादित्वं किंतु सत्येन परमात्मनेति सत्यविज्ञानं स्वयमेव उपचिक्षेप, ततः 'सोहं भगवस्सत्येनातिवदानी' ति पृष्टवते तस्मै विज्ञानमतिश्रद्धादिसा-धनरपरंपरया तमेव सत्यशब्दोक्तं परमात्मानं भूमानमुपदिदेश इत्येवमन्य-थोपपन्नौ प्रश्नप्रतिवचनाभावौ । ननु 'यत्रनान्य' दित्यादिविषयवाक्यस्य यस्मिन् अधिकरणे अन्यन्नपश्यतीत्याद्यर्थप्रतीतेः ब्रह्मणि दर्शनश्रवणादि-गोचरस्य सर्वस्य मिथ्यात्वेन निर्विशेषविषयन्तद्भूमवाक्यं प्रतिभाति, कथ-न्तदनन्तकल्याणगुणाकरस्य भगवतः प्रतिपादकं वर्ण्यते, कथञ्च 'नप-श्योमृत्युं पश्यति नरोगं नोत दुःखताम् । सर्वं हि पश्यः पश्यति सर्वमा-प्नोति सर्वश' इति मन्त्रेण भूमदर्शिनः सर्वदर्शित्वं वर्णयताऽपि दुःखादर्शनं प्रतिपाद्यते । उच्यते— तत्र 'यस्मि' न्नित्यत्र अनुभूयमानइत्यध्याहारः कार्यः । न हि ब्रह्मसद्भावमात्रात्तस्मिन्नन्यस्यादर्शनादिकं भवति, अस्म-दादीनामपि दृश्यदर्शनाद्यभावापत्तेः । 'यत्रे' त्यस्य च निजसकलगुण-विभूतिविशिष्टइत्यर्थः । भूमशब्दस्य ब्रह्मशब्दवत् त्रिविधपरिच्छेदराहि-त्यार्थकत्वात् तद्वैशिष्ट्येन च दर्शने सत्येव च सर्वस्य तदन्तर्गतत्वात् नि-जसकलगुणविभूतिविशिष्टात् तस्मादन्यस्य ततः पृथग्भूतस्यादर्शनादिव-

चनमुपपद्यते । यदितु विभूतिरैश्वर्यं नियमनरूपं, तदा तन्नियाम्यस्य प्रतीतिसापेक्षमिति नियाम्यरूपप्रतियोगितया सर्वस्यापि दर्शनादिकमपेक्षितं । अस्त्वेवं, तथापि कथं दुःखादर्शनमुपपादनीयं, भूमविभूत्यन्तर्गततया सकल संसारिगतदुःखानामपि दर्शनस्यानिवारणात् । ततश्च समन्वयाधिकरणोक्तरीत्या सुखसाक्षात्कारमात्रस्य पुरुषार्थत्ववत् दुःखसाक्षात्कारमात्रस्य हेयत्वं वाच्यमिति भूमानं पश्यतो मुक्तस्य संसारदशापेक्षयाऽप्यधिकदुःखानुभवत्वं स्यात् । न च ब्रह्मविभूतितया अनुभूयमानं सर्वं सुखरूपमेव स्यादितिवाच्यं । ब्रह्मणोऽन्यतया संसारिभिरनुभूयमानं दुःखरूपं परिमितसुखरूपञ्च भवत् ब्रह्मविभूतित्वेनानुभूयमानं सुखरूपं भवतीत्यस्य विरुद्धत्वात्, एकस्यसुखदुःखोभयरूपतानुपपत्तेरितिचेत्, उच्यते-कर्मवश्यैर्ब्रह्मान्यत्वेनानुभूयमानं जगत् तेषां तत्तत्कर्मानुरूपं दुःखरूपं परिमितसुखरूपञ्च भवति, कर्मरूपाविद्याविमुक्तस्य तदेव जगत् विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति, यथा पित्तोपहतेन पीयमानं पयः पित्ततारतम्येन दुःखरूपमल्पसुखञ्च भवति, तदेव पयः पित्तानुपहतेन पीयमानं सुखात्मकमेव भवति, यदा हि यदनुभूयमानं पुरुषानुकूलं भवति तदा तत्सुखं, यदातदननुकूलं तदा तदेव दुःखं । अतएव हिमातपादीनां निदाघहेमंताद्यवस्थाभेदेन सुखदुःखोभयरूपत्वमिति न काचिदनुपपत्तिः । यत्तु 'अहमेवाधस्ता' दित्यादिना सर्वात्मत्वमुपादिष्टं तत् ब्रह्मणः अहंग्रहोपासनार्थं, 'सएवाधस्ता' दित्यादि 'सएवेदं सर्व' मित्यन्तस्य स्वरूपेणोपासनार्थं, 'आत्मैवाधस्तादित्यादि 'आत्मैवेदं सर्व' मित्यन्तं विद्वदन्तर्यामित्वेनोपासनार्थं, 'तस्यह वा एतस्यैवंपश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राणआत्मतआशा आत्मतस्स्मर' इत्यादिना प्रकृतादात्मनः प्राणाद्युत्पत्तिप्रतिपादने प्रकृतस्यात्मनो विद्वांसं प्रत्यात्मत्वं विशिष्योक्तं । एवं त्रेधा तस्य सार्वात्म्योपदेशः त्रिविधोपासनासिद्ध्यर्थ इति न कस्यापि वैयर्थ्यमिति विवेक्तव्यम् ॥

संग्रहकारिकाः ॥

भूमा प्राणस्तस्मात् ऊर्ध्वन्नाम्न इव वागादेः ।

प्रश्नप्रतिवचनाभ्यां विनैव भूम्नोऽवतारणतः ॥
प्राणश्च जीवएव स्फुटमात्मोपक्रमोपसंहारात् ।
मातृत्वादिश्रवणात् हिंस्यत्वोक्तेरहंत्ववचनाच्च ॥
सत्यं प्राणो जीवः स न भूमा किंतु पुरुष एव परः ।
एष तु वा अतिवदतीत्यत्र तुशब्देन पूर्वविनिवृत्तेः ॥
निरतिशयानन्दत्वश्रवणादपि यत्र नान्यदित्यादौ ।
अहमेवाधस्तादित्यहं ग्रहो दर्शितस्तस्मिन् ॥
इति भूमाधिकरणम् ॥२॥

---

**अक्षरमम्बरान्तधृतेः ॥९॥**

**सा च प्रशासनात् ॥ १० ॥**

**अन्यभावव्यावृत्तेश्च ॥११॥**

यथा जीवादूर्ध्वमुपदेशात् भूमा न जीवः, एवं प्रधानादूर्ध्वमुपदेशात् अक्षरं न प्रधानमिति समर्थ्यतइति सङ्गतिः । वाजसनेयिनस्समामनंति– 'एतद्वै तदक्षरं गार्गि ब्राह्म"ा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छाय' मित्यादि । अत्राक्षरं प्रधानं परमात्मावेति संशये प्रधानमिति तावत्प्राप्तम् । 'अक्षरात्परतः पर' इत्यादिषु अक्षरशब्दस्य प्रधाने प्रयोगात् । तथा 'तदक्षरमधिगम्यत' इत्यादिषु परमात्मनि तस्य प्रयोगसत्त्वेऽपि प्रमाणान्तरप्रसिद्धश्रुतिप्रसिद्धयोः प्रधानपरमात्मनोर्मध्ये प्रमाणांतरप्रसिद्धस्य प्रधानस्य झटिति बुद्ध्यारोहेण प्रथमप्रतीतत्वात् अनुमानस्य प्रत्यक्षमात्रापेक्षा श्रुतेर्व्युत्पत्तिग्रहादावुभयापेक्षेति आनुमानिकस्याक्षरस्य श्रुतिप्रतिपन्नात् परमात्मनश्शीघ्रप्रतीतिकस्य श्रुतिलिंगादिषु पूर्वपूर्वस्य उत्तरोत्तरस्मादिव ततः प्रबलत्वात् अस्थूलत्वादीनां प्रधानेऽपि संभवेन भूतयोन्यक्षरइव परमात्मैकांतिकलिङ्गाभावात् । एवंप्राप्तेसिद्धांतः—

अक्षरंपरमात्मा, नाव्याकृतं प्रधानम् । 'एतस्मिन् खल्वक्षरे गार्ग्याकाशओतश्च प्रोतश्चे' त्यव्याकृताधारतयाऽक्षरस्योपदेशात् । स्यादेतत्, आकाशशब्दोऽयं भूताकाशपरोऽस्तु, प्रसिद्ध्यतिलङ्घनायोगात् । यद्युच्येत अक्षरब्राह्मणात्पूर्वं गार्गिब्राह्मणे गार्गियाज्ञवल्क्ययोः प्रश्नोत्तरपरंपरायां 'यदिदं सर्वमप्स्वोतञ्च प्रोतञ्च कस्मिन्नु खल्वापओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेति अन्तरिक्षलोकेषु गार्गी'त्यारभ्य, 'ब्रह्मलोकेषु गार्गी' त्यन्तेन सन्दर्भेण पृथिवीसलिलवाय्वन्तारिक्षलोक गन्धर्वलोकादित्यलोकचन्द्रलोकनक्षत्रलोकदेवलोकेंद्रलोकप्रजापतिलोकब्रह्मलोकानां पूर्वपूर्वस्य उत्तरोत्तरस्मिन् ओतत्वप्रोतत्ववर्णनानन्तरं 'कस्मिन्नु खलु ब्रह्मलोकाओताश्च प्रोताश्चे'ति पुनः पृष्टे याज्ञवल्क्येन 'गार्गि मातिप्राक्षीर्मा ते मूर्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि मातिप्राक्षी' रिति सक्रोधमुक्ता भीता गार्ग्युपरराम । अनेन ब्रह्मलोकांतसकललोकाधारतया वक्तव्या महती काचिद्देवतेति सूचितं । ततश्च बहुषुब्राह्मणेषु याज्ञवल्क्यविजिगीषया तेन सह जल्पकथायां पर्यायेण प्रवर्तमानेष्वनुप्रविष्टा गार्गी तदानीं भीत्योपरताऽपि स्वोपरमानन्तरमुद्दालके प्रसिद्धब्रह्मविदि सूत्रमन्तर्यामिणञ्च पृष्टवति याज्ञवल्क्येन जिते सर्वेषां ब्राह्मणानामेव पराजयोजायते, समाभूदिति मन्यमाना याज्ञवल्क्यं प्रक्ष्यामीति ब्राह्मणाननुज्ञाप्य 'अहं वै याज्ञवल्क्य यथा काश्योवा वैदेहोवा उग्रपुत्रउज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ शरौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यां उपोदस्थां तौ मे ब्रूही' ति द्वितीयप्रश्ननिवारणपरिजिहीर्षया प्रश्नद्वयानुज्ञां युगपदेव याज्ञवल्क्यं प्रति पृष्ट्वा पृच्छेति तदनुज्ञाता 'यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिन् तदोतञ्च प्रोतञ्चे' ति पृष्ट्वा 'यदूर्ध्वं गार्गि दिव' इत्यादिना 'आकाशएव तदोतञ्च प्रोतंचे' त्यन्तेनोत्तरिते 'कस्मिन्नु खल्वाकाशओतश्च प्रोतश्चे' ति द्वितीयप्रश्नस्य उत्तरतया 'एतद्वैतदक्षर' मित्यादि 'एतस्मिन् ख-

त्वक्षरे गार्ग्याकाशओतश्च प्रोतश्चे' त्यन्तं कृत्स्नमक्षरब्राह्मणं प्रवृत्तं। तत्र गार्गिब्राह्मणांते याज्ञवल्क्येन यः प्रश्नस्सक्रोधं निवारितः, सएव खलु गार्ग्या सर्वेषां ब्राह्मणानां पराजयोभविष्यतीति भीतया तस्य क्रोधमविगणय्य पुनरवतारितः। अनेन ब्रह्मलोकान्तसकललोकाधारतया प्राग्वक्तव्यतया उपाक्षिप्ता देवता सेह आकाशशब्देनोदितेति सूचितं। एवञ्च कथमयमाकाशशब्दो भूताकाशपरस्स्यादिति तर्हि प्रधानपरोपि नस्यात्, तस्यापि देवतात्वाभावात्। तस्मात् प्रधानपरत्ववादिना इत्थं समाधेयं। पूर्वं ब्रह्मलोकांतसकललोकाधारप्रश्ने यदव्यवहितोत्तरं तत्परदेवताविषयमित्याशयेन न तन्निवारणं, किंतु धृष्टैषा तस्याप्याधारं प्रक्ष्यति, सप्रश्नः परदेवताविषयोभविष्यतीति दूरदृष्ट्या तन्निवारणं कृतमिति, तस्याकाशशब्दस्य भूताकाशविषयत्वेप्येवमेव समाधातुं शक्यमिति चेत्, उच्यते—'यदूर्ध्वं गार्गि दिव' इत्यादिना 'आकाशएव तदोतश्च प्रोतश्चे' त्यन्तेन यदाकाशस्य सर्वविकाराधारत्वमुक्तं, न तत् आकाशशब्दस्य भूताकाशपरत्वे घटते, तस्यापि विकारांतर्गतत्वात्, तस्मादिहाकाशपदमव्याकृतपरमिति तस्याप्याधारतयोपदिश्यमानमक्षरं परमात्मैव। नाव्यक्तम्। यत्तु श्रुतिप्रसिद्धात् प्रमाणांतरप्रसिद्धं प्रथमं प्रतीयत इति तन्न। अक्षरशब्दस्य अश्नोति व्याप्नोतीति अवयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात् व्युत्पत्तिदशायामर्थस्वरूपं येन प्रमाणेनावगतं तस्य प्रतिपादनदशायामनुपयोगात्। उक्तं हि वार्तिके—'अर्थबोधेनपेक्षत्वान्मानांतरमनादृतं। व्युत्पत्त्युपायभूतं यत् तच्च तन्मात्रएव त्वि' ति। किंच गोशब्दादिसम्बन्धग्रहविषयसास्नावद्व्यक्त्यादिष्विव प्रधाने प्रत्यक्षं न प्रवर्तते, अनुमानमपि सांख्याद्यभिमतं तत्र न प्रवर्ततइति सांख्याधिकरणे वक्ष्यते, ततश्च ब्रह्मवत् प्रधानमपि श्रुत्येकगम्यमिति न प्रसिध्यप्रसिद्धिकृतोऽपि तयोर्विशेषः, तस्मात् सर्वविकाराधारत्वलिंगेन आकाशशब्दोदितमव्याकृतमित्यवगमात्, अक्षरशब्दोदित मव्याकृतमित्यत्र हेत्वसिद्धेश्च, आकाशशब्दोदितस्य अव्याकृतस्याधारतयोच्यमानमक्षरं परमात्मैव। 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं

श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ' इति द्रष्टृत्वाद्युपदेशादप्यक्षरं परमात्मा, नत्वव्याकृतं। ननु तर्ह्यक्षरं जीवोस्तु, तत्र दर्शनाद्यविषयत्वस्य दर्शनादिमत्त्वस्य चोपपत्तेः। 'यथा वा अरानाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पित' मिति श्रवणेन तस्य सकलाचिद्वर्गाधारत्वोपपत्तेश्चेतिचेत् मैवं–'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत' इत्यादिना प्रशासनाधीनधारकत्वश्रवणात्। यद्यपि पर्यायेण देवमनुष्यादिजन्मवति जीवेपि द्यावापृथिव्यादिशासितृत्वं तत्तदधिकारोपयुक्तजन्मप्राप्त्या कथंचित्समर्थयितुं शक्यं, तथापि निरपेक्षशासितृत्वरूपं प्रकृष्टशासितृत्वं तत्पूर्वकचन्द्रसूर्यादिधारकत्वञ्चास्मिन्नसम्भवत्येव। किंच सर्वैरदृष्टस्य सतस्सर्वद्रष्टृत्वादिकं 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ' इत्यादिना क्रियमाणं द्रष्ट्रन्तरनिषेधादिकञ्च जीवे नोपपद्यते, किंतु अन्तर्याम्यधिकरणोक्तरीत्या परमात्मन्येवोपपद्यते। तस्मादक्षरं परमात्मैव॥

संग्रहकारिकाः॥

अक्षरमनुमितिगम्या प्रकृतिर्नागमनिरूपितं ब्रह्म।
अनुमानमक्षरमात्रापेक्षं सहि तद्द्वयापेक्षः॥
मैवमव्याकृतधृतेः श्रौतं ब्रह्म तदक्षरं।
श्रुतेरपेक्षा व्युत्पत्तौ न त्वर्थप्रतिपादने॥
द्रष्टृत्वश्रोतृत्वप्रमुखा नाव्याकृतं हि पश्यंति।
न च जीवोऽक्षरमेतत् प्रशासितृत्वादिवैधर्म्यात्॥

इति अक्षराधिकरणम्॥ ३॥

---

## ईक्षतिकर्मव्यपदेशात्सः॥ १२॥

प्रश्नोपनिषदि– 'सयोह वै तद्भगवन्मनुष्येषु प्रायणांतमोंकारमभिध्यायीत कतमं वाव स तेन लोकं जयती' ति पिप्पलादं प्रति सत्यकाम-

प्रश्ने 'एतद्वै सत्यकाम परञ्चापरञ्च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेन एकतरमन्वेती'ति तत्प्रतिवचनमुपक्रम्य 'स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवत्यथ यो द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तत' इत्येकमात्रमोङ्कारमुपासीनस्य तत्प्रथममात्रात्मकऋक्प्रापणीयमनुष्यलोकप्राप्तिफलं द्विमात्रं तमुपासीनस्य तद्द्वितीयमात्रात्मकयजुःप्रापणीयांतरिक्षलोकप्राप्तिफलञ्चाभिधाय इदमाम्नायते— 'यः पुनरेतं त्रिमात्रेण ओमित्यनेनैवाक्षरेण परंपुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत'इति । अत्र ध्यातव्यः परमपुरुषएवेक्षणीयः । फलफलिनोरीक्षणध्यानयोरेकविषयत्वनियमात्, 'परं पुरुष' मित्यत्र परत्वावधित्वेन विवक्षितस्यापि केभ्यश्चित् परत्वसम्भवेन 'परात्परं पुरिशयं पुरुष' मिति निर्देशस्य ततो भेदावहत्वाभावादिति स्थिते ध्यातव्य ईक्षणीयश्च पुरुषः किं जीवसमष्टिरूपश्चतुर्मुखः, उत सर्वेश्वर इति संशये चतुर्मुख इति तावत्प्राप्तम् । ब्रह्मलोकशब्दोदितचतुर्मुखलोकगतेनेक्ष्यमाणत्वात् । न च ब्रह्मलोकशब्दो भगवल्लोकपर इति वाच्यम् । मनुष्यलोकान्तरिक्षलोकप्रायपाठेन तस्यापि प्राकृतचतुर्मुखलोकपरत्वात् । न च जीवघनशब्दो जीवसमष्टिरूपचतुर्मुखवाचीति तस्मात्परः पुरुषस्सर्वेश्वर एव स्यादिति वाच्यम् । तस्य व्यष्टिजीवसंघातवाचित्वोपपत्तेः । 'घनाः कठिनसंघातमेघकाठिन्यमुद्गरा' इति संघातेऽपि घनशब्दस्मरणात् । न च तथाऽपि व्यष्टिजीवसंघातात् परस्समष्टिजीव इति तस्मात्परः पुरुषस्सर्वेश्वर एव स्यादिति वाच्यम् । देहेन्द्रियादिभ्यः पराद्व्यष्टिजीवसंघातात् चतुर्मुखस्य परत्वोपपत्तेः । परजीवघनशब्दयोस्सामानाधिकरण्यसम्भवे वैयधिकरण्यकल्पनायोगात् । न च 'ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते तमोङ्कारेणान्वेति विद्वान् यत्तच्छांत

मजरममृतमभयं परञ्चे' ति तदनन्तरश्लोकोक्तममृतत्वादिकं सर्वेश्वर एवा-न्वेतीति तदनुसारेण परः पुरुषस्सर्वेश्वरस्स्यात् ध्यातव्यस्यैव प्राप्यत्वादिति वाच्यम् । उपक्रमानुसारेण औपसंहारिकामृतत्वादेश्चतुर्मुखएवापेक्षिकामृत-त्वादिरूपतया अन्वयोपपत्तेरिति । एवं प्राप्ते सिद्धान्तः—

ईक्षतिकर्म परमात्मा । उत्तरमन्त्रगतात् अमृतत्वादिव्यपदेशात्, एतस्माज्जीवघनात्परात्पर' मिति व्यपदेशाच्च जीवत्वाविशेषेण हिरण्यगर्भ-स्यापि जीवघनकोटिनिविष्टत्वात् । ब्रह्मलोकशब्दश्च भगवल्लोकपरः । सर्व पापविनिर्मुक्तप्राप्यत्वात् । 'यत्तत्कवयो वेदयन्त' इत्यत्र 'तद्विष्णोः परमं पदं सदा पश्यंति सूरय' इत्यादिश्रुत्यन्तरसिद्धकविशब्दोक्तसूरिदृश्यत्वालि-ङ्गात् 'एतद्वै सत्यकामे'त्यादिना उपक्रान्तपरोपासनाप्रकरणाच्च लिंगप्रकरणैः प्रायपाठस्य बाधेन तस्य अकिञ्चित्करत्वात् । ननु उपक्रमे परोपासनावत् अपरोपासनस्यापि श्रवणात् तदपि निरूपणीयमिति चेत् सत्यम् । पूर्व-मेव तन्निरूपितम् । पूर्वं हि तदुपासनं ऐहिकामुष्मिकत्वेन द्विधा विभज्य एकमात्रप्रणवेन तदुपासनस्य मनुष्यलोकावाप्तिं, द्विमात्रप्रणवेन तदुपा-सनस्य स्वर्गावाप्तिञ्च उपन्यस्य हि त्रिमात्रप्रणवेन परमपुरुषोपासनं प्रक्रा-न्तम् । तस्मात् ध्यानेक्षणविषयभूतः परः पुरुषः सर्वेश्वर इति सिद्धम् ॥

संग्रहकारिके ॥

आदिष्टस्सत्यकामं प्रति हि पुरिशयः पूरुषो ह्येष वेधाः
पुंसा लोकं तदीयं समधिगतवता वीक्ष्यमाणत्वलिङ्गात् ।
उक्तोऽत्र ब्रह्मलोको न भवति हि परब्रह्मलोकस्तदा हि
स्यादुक्तैकद्विमात्रप्रणवविदि फलप्रायपाठस्य बाधः ॥
विष्णुरेष विजरामृततोक्तेः सर्वजीवपरताव्यपदेशात् ।
ब्रह्मलोकमिति तत्पदमुक्तं लिंगतो भवतु सन्निधिबाधः ॥

इति ईक्षतिकर्माधिकरणम् ॥४॥

दहर उत्तरेभ्यः ॥१३॥

गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गञ्च ॥१४॥

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥१५॥

प्रसिद्धेश्च ॥ १६ ॥

इतरपरामर्शात्स इति चेन्नासम्भवात् ॥१७॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥१८॥

अन्यार्थश्च परामर्शः ॥१९॥

अल्पश्रुतेरितिचेत्तदुक्तम् ॥२०॥

अनुकृतेस्तस्य च ॥२१॥

अपि स्मर्यते ॥२२॥

पूर्वाधिकरणे 'परात्परं पुरिशयं पुरुषमीक्षत' इत्युक्तस्य पुरिशयस्य परमात्मत्वं समर्थितम् । इहापि तथैव पुरिशयस्य परमात्मत्वं समर्थ्यत इति सङ्गतिः । छान्दोग्ये– 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य' मिति ब्रह्मपुरशब्दोक्तशरीरान्तर्वर्तिहृदयपुण्डरीकमध्यवर्तित्वेन श्रुतो दहराकाशो भूताकाशः । 'तस्मिन्यदन्त' रिति दहराकाशेऽन्तरन्वेष्टव्यतया श्रुतः परमात्मा । अथवा दहराकाशः परमात्मा । 'तस्मिन् यदन्त'रिति श्रुतः तदीयोऽपहतपाप्मत्वादिगुणनिवह इति संशये भूताकाश इति तावत्प्राप्तं, अत्र रूढेः । 'तस्मिन् यदन्त'रिति श्रुतस्तु परमात्मा, न तु तदीयगुणनिवहः । 'तदन्वेष्टव्य' मित्यस्य 'तस्मिन्यदन्त'रित्येतन्मात्रान्वयित्वेन गुणमात्रस्योपास्यत्वापत्त्या गुणिनोऽनुपास्यत्वप्रसङ्गात् । एवञ्च वाक्यशेषे श्रूयमाणाः सर्वे परमात्मधर्माः 'तस्मिन् यदन्त' रिति निर्दिष्टे परमात्मन्यन्वयं लभन्त इति न तेषामप्यनुपपत्तिरिति । एवं प्राप्ते सिद्धान्तः–

दहराकाशः परमात्मा । न भूताकाशः । वाक्यशेषगतेभ्यो हेतुभ्यः । वाक्यशेषे हि 'यावान्वा अयमाकाशः तावानेषोऽन्तर्हृदय आकाश' इति दहराकाशस्य भूताकाशात् भेदापेक्षः । तेनोपमानोपमेयंभावो निबध्यते । तदनन्तरं 'अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणी' ति प्रकृतं दहराकाशं अस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमुच्यते । ततो 'यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहित'मित्यस्योपासकस्य लोके यद्भोग्यजातं वर्तते यच्च मनोरथमात्रास्पदमिह नास्ति सर्वं तद्भोग्यजातमस्मिन् दहराकाशे समाहितमिति तस्य निरतिशयभोग्यत्वेन तस्य निरतिशयानन्दत्वं प्रदर्श्यते । 'तदेतत्सत्यं ब्रह्मपुर' मिति तमेव दहराकाशमेतच्छब्देन परामृश्य तस्य सत्यभूतब्रह्माख्यपुररूपत्वमुच्यते । 'ब्रह्मपुर' मित्यत्र निषादस्थपतिन्यायेन सामानाधिकरण्यौचित्यात् । ततः 'अस्मिन्कामास्समाहिता' इति तमेव दहराकाशं 'अस्मिन्नि' ति निर्दिश्य काम्यभूतांश्च गुणान् 'कामा' इति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्यात्मत्वञ्च 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्प' इति वर्ण्यते । ततः 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवती' त्यात्मशब्देन परामृष्टं तदन्तर्वर्तिनश्च काम्यानपहतपाप्मत्वादिगुणांश्च अनुसन्दधतां फलं प्रदर्श्यते । तथा 'तद्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो नविन्देयुरेवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढा' इति 'एत' मिति प्रकृतं दहराकाशं निर्दिश्य तत्र अहरहस्सर्वेषां गमनं गन्तव्यस्य तस्य ब्रह्मलोकशब्देन निर्देशश्च दृश्यते । परमात्मनि खलु सर्वेषामहरहस्सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम् , 'एवमेव खलु सोम्येमास्सर्वाः प्रजास्संतिसम्पद्य नविदुः सतिसम्पत्स्यामह'इति । ब्रह्मलोकशब्दश्च तस्मिन्दृष्ट 'एष ब्रह्मलोकस्सम्राडिति होवाचे' ति । तथा 'अथ य आत्मा

स सेतुर्विधृतिरेषां लोकानामसम्भेदाये'ति, प्रकृतदहराकाशं 'य आत्मे'ति निर्दिश्य तस्य जगद्विधारकत्वं प्रतिपाद्यते । स च परमात्मनो महिमा। 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाये'ति श्रुत्यन्तरात् । एतेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यो दहराकाशः परमात्मा । आकाशशब्दस्य हि परमात्मन्यपि वैदिकी प्रसिद्धिरप्यस्ति 'आकाश इति होवाचे'त्यादिश्रुत्यन्तरे। ननु यदि 'तस्मिन्यदन्त'रित्येतत् परमात्मवर्तिगुणनिवहपरं स्यात्, तदा 'तदन्वेष्टव्य'मित्यस्य दहराकाशान्तर्वर्तितया तस्यैवोपास्यता स्यात्, न तु प्राधान्येन दहराकाशस्यापि। तस्यापि प्राधान्येन उपास्यत्वमुपपादनीयम् । 'अथ य इहात्मानमनुविद्य व्रजंत्येतांश्च सत्यान्कामा'निति वाक्यशेषानुसारादिति चेत् । सत्यं इत्थं तदुपपादनं । 'तदन्वेष्टव्य'मित्यत्र तत्पदेन प्रथमानिर्दिष्टमन्तर्वर्तिमात्रं न परामृश्यते, किं तु सप्तमीनिर्दिष्टो दहराकाशोऽपि । 'त्यदादीनि सर्वैर्नित्यं, नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मिति सूत्रैर्नपुंसकैकशेषस्य एकवचनस्यचोपपत्तेरित्युक्तं भाष्यादिषु। अत्रेदं विचार्यते– तदिति नपुंसक शेषत्वं 'त्यदादीनि सर्वैर्नित्य'मिति परसूत्रेणैव हि वक्तव्यम्। तत्र नैकवद्भावानुवृत्तिरस्ति। 'एकवच्चास्यान्यतरस्या'मित्यत्र अस्येत्यस्य नपुंसकसूत्रकृतैकशेषस्यैवायमेकवद्भाव इत्येतदर्थत्वात् । न च वाच्यं त्यदादिषु नपुंसकानपुंसकयोर्नपुंसकशेषसिध्यर्थं 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मिति सूत्रस्याप्यनुवृत्त्या भाव्यमिति त्यदादिषु स च सा च ताविति स्त्रीपुंसकयोः पुंशेषसिध्यर्थं स च तच्च ते सा च तच्च ते इति नपुंसकानपुंसकयोर्नपुंसकशेषसिध्यर्थं च 'त्यदादितश्शेषे पुंनपुंसकतो लिंगवचना'नीति वार्तिककृता यत्नान्तरस्य कृतत्वात् तथैकवद्भावसिध्यर्थं भाष्यवार्तिकादिषु यत्नान्तरदर्शनात् । कथं तर्हि तंत्ररत्ने 'दधि मधु घृतं पयो धाना उदकं तंडुलास्तत्संसृष्टं प्राजापत्य'मिति चित्रेष्टिविधिवाक्ये दध्यादिप्रत्येकद्रव्यको यागगणः न तु संसृष्टैकद्रव्यको याग इति सिद्धान्तासिद्धये तत्पदं संसृष्टशब्दोक्तैकद्रव्यपरं न भवति, किं तु दध्याद्यनेकद्रव्यपरमित्युक्त्वा दध्यादिषु तदिति

नपुंसकैकशेषाभ्यां निर्व्यूढं अभ्युच्चयार्थं तथा निर्वाहान्तरं कृतम् । सर्व-नाम्नां प्रक्रान्तपरत्व एव स्वारस्येन प्रक्रंस्यमानपरत्वस्यानन्यगतिकत्वात् द्र-व्यविशेषस्यैवाकांक्षापूरकत्वेन संसृष्टमात्रस्य प्रजापतिसम्बन्धानर्हत्वाच्च न्यायतस्तत्पदस्य दध्याद्यनेकद्रव्यपरत्वावश्यंभावेसति तदित्येकवचनोपात्त-मेकत्वं 'गुणेत्वन्याय्यकल्पने' ति न्यायेन पाशबहुत्ववदविवक्षितमिति मु-ख्यहेतूक्त्यनन्तरं अथवा 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या' मिति स्मरणात् नपुंसकानपुंसकानेकाभिप्रायमपि युक्तमेव तदिति नपुंसकैकवचनं एवं प्राजापत्यमपि द्रष्टव्यमित्युक्तत्वादिति । अत्रेदं समाधानं 'अन्वेष्टव्य' मि-त्यत्र नपुंसकानपुंसकैकशेषे कृते सति तत्रैकस्मिन्नर्थ इवैकवचनरूपं कार्यं भवत् तद्विशेषणे तदर्थानुपपत्तिनि सर्वनाम्न्यपि भवति, यथा 'अस्मदोद्वयो-श्चे' ति सूत्रेणास्मदर्थस्य एकत्वे द्वित्वे च बहुवचनं भवत् अस्मदर्थवर्तिनि क्रि-यापदेऽपि भवति वयं ब्रूमइति इहापि 'शुक्लश्च शुक्ला च शुक्लञ्च शुक्लं वर्तत' इति क्रियापदेऽपि एकवचनं दृश्यते तद्वत् सर्वनाम्न्यपि भवितुमर्हति । अत एव महाभाष्ये— 'शुक्लश्च कम्बलः शुक्ला च बृहतिका शुक्लञ्च वस्त्रं त-दिदं शुक्लं तानीमानि शुक्लानी' ति द्विविधे नपुंसकसूत्रोदाहरणे कृतैकवद्भा-वमेव तदिति पदं प्रथमोदाहरणविशेषणं कृतम् । एवं चित्रेष्टिवाक्येऽपि प्राजापत्यशब्दे नपुंसकसूत्रप्रवृत्तौ तदन्तर्वर्तिनि तदिति पदेऽपि नपुंसकैक-वचनं भवतीति तन्त्ररत्नाभिप्रायः । एवमिहापि 'अन्वेष्टव्य' मित्यत्र नपुं-सकसूत्रेणैकवद्भावे कृते तदन्तवर्तिनि तदिति पदेऽपि नपुंसकलिंगमेकवचनं च युक्तमेव । तस्माद्दहराकाशः स्वान्तर्वर्त्यपहतपाप्मत्वादिगुणानिवहेन स-होपास्यः परमात्मैव । न भूताकाश इति सिद्धम् । ननु माभूदयं भूताकाशः, जीवस्तु स्यात्, दहरविद्याप्रकरणे— 'अथ य एष संप्रसादोऽस्माच्छरीरा-त्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति तस्य पराम-र्शादिति चेन्न । तत्र अपहतपाप्मत्वाद्यसम्भवात् । ननु दहरवाक्यादुत्तर-स्मिन् प्रजापतिवाक्ये जीवस्याप्यपहतपाप्मत्वादिकमाम्नातम् । तत्र हि 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकाम-

स्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्सविजिज्ञासितव्यस्ससर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाती' ति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्य अन्वेष्टव्यात्मजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजापतिना 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मे' ति 'य एष स्वप्ने महीयमानश्चरत्येष आत्मे' ति 'अथ यत्रैतत्सुप्तस्समस्तस्संप्रसन्नस्स्वप्नं न विजानात्येष आत्मे' ति च जागराद्यवस्थात्रयवान् जीव एव जिज्ञासितापहतपाप्मत्वादिगुणकात्मेत्युपदिष्टः । सत्यम् । संसारदशायामविद्यातिरोहितापहतपाप्मत्वादिगुणको जीवः पश्चाद्विमुक्तकर्मरूपाविद्याबन्धः शरीरात् समुत्थितः परंज्योतिरुपसम्पन्नस्सन्नपहतपाप्मत्वादिगुणविशिष्टः प्रजापतिवाक्येऽभिधीयते । 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति जीवस्य परंज्योतिःप्राप्त्या तस्यापहतपाप्मत्वादिगुणकस्वरूपाभिनिष्पत्तिमुक्त्वा प्राप्यस्य परंज्योतिषः 'स उत्तमः पुरुष' इति पुरुषोत्तमत्वं विधाय 'स तत्र पर्येति जक्षत्क्रीडन् रममाणस्स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वे' त्यादिना तं प्राप्नुवतो जीवस्य तल्लोकानुभाव्यमहाफलकीर्तनात् । दहरवाक्ये तु नित्याविर्भूतापहतपाप्मत्वादिगुण एव दहराकाशः प्रतीयते । तथाभूतापहतपाप्मत्वादिग्रहणसम्भवे कारणाधीनाविर्भावस्य तस्य ग्रहणायोगात् । तस्माद्दहराकाशे जीवत्वाशङ्का न कार्या । यद्येवं दहरविद्याप्रकरणे– 'अस्माच्छरीरात्समुत्थाये' त्यादिना जीवपरामर्शः किमर्थः, दहराकाशस्य जगद्विधरणादिवत् जीवस्वरूपाविर्भावापादानरूपमहिमविशेषप्रतिपादनार्थः प्रजापतिवाक्यसिद्धस्यार्थस्यायमनुवादः । ननु यदि दहरो न जीवः, कथं तर्ह्यल्पपरिमाणश्रवणमिति चेत्, अत्र वक्तव्यमुत्तरम् 'सर्वत्र प्रसिद्धोपदेशा' दित्यधिकरणे 'निचाय्यत्वादेवं व्योमवच्चे' ति पूर्वमेवोक्तम् । ननु संसारदशातिरोहितजैवापहतपाप्मत्वादिव्यतिरेकेण नित्याविर्भूतमन्यदपहतपाप्मत्वादिकमस्तीत्यत्रैव न प्रमाणम् । दहरविद्याप्रकरणे अपहतपाप्मत्वादिश्रवणस्य प्रजापतिवाक्यसिद्धसंप्रतिपन्नजैवापहतपाप्मत्वादिविषयत्वोपपत्तेः । अतो नित्याविर्भूतैरपहतपाप्मत्वादिभिः

दहरो न जीव इत्येतन्नयुक्तम् । किं तु सूक्ष्मत्वलिंगात् दहरो जीव इत्येव युक्तमिति चेदुच्यते– परमात्मानुकाररूपा तत्साम्यापत्तिर्हि मुक्तिः । 'यदा पश्यः पश्यते रुक्मवर्ण' मित्यादि श्रुतेः, 'इदं ज्ञानमुपाश्रित्य मम साधर्म्य मागताः । सर्गेऽपि नोपजायन्ते प्रळये न व्यथंतिचे' ति स्मृतेश्च । एवं च जीवस्य मुक्तावपहतपाप्मत्वादिगुणाविर्भावः परमात्मनो नित्याविर्भूतापहत-पाप्मत्वादिगुणकत्वमन्तरेण न सम्भवति । अन्यथा जीवस्य मुक्तौ तत्सा-म्यापत्त्ययोगात् । अतो जीवस्य मुक्तिदशाविर्भाववत् जैवापहतपाप्मत्वादि-प्रतिपादकप्रजापतिवाक्यसामर्थ्यादेव परस्य नित्याविर्भूतमपहतपाप्मत्वादि-कमस्तीति सिद्धेः तद्विषयत्वं दहरविद्याप्रकरणश्रुतस्य 'य आत्माऽपहतपा-प्मे' त्यादेर्युक्तमिति ततः परमात्मैव दहराकाशः न जीव इति सिद्धम् ॥

संग्रहकारिकाः ॥

युक्तो दहराकाशोः भूताकाशः प्रसिद्धत्वात् ।
अपहतपाप्मत्वाद्या गुणास्तदन्तर्गतान्वयिनः ॥
जीवोवाऽसौ श्रवणादमुं प्रकृत्यैष संप्रसाद इति ।
संति च तत्रोक्तगुणाः प्राजापत्येन वाक्येन ॥
नैवं परमात्माऽसौ स्वामिन्यभिहितगुणेभ्य इत्युचितम् ।
तस्माद्यदिति गुणोक्तिर्गुणगुणिविषय इति तद्वृत्तम् ॥
नित्याविर्भूतास्ते गुणा न सन्त्येव जीवस्य ।
संति तु परस्य लिंगान्मुक्तेस्तत्परमसाम्यरूपत्वात् ॥

इति दहराधिकरणम् ॥ ९ ॥

---

## शब्दादेव प्रमितः ॥२३॥

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥२४॥

पूर्वत्राणीयस्त्वरूपं अल्पपरिमाणं परस्मिन्नुपपादितम् । इदानीमं-गुष्ठमात्ररूपमप्यल्पपरिमाणं तस्मिन्नुपपाद्यत इति संगतिः । कठवल्लीषु

श्रूयते— 'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सत' इत्यादिः । किमयमंगुष्ठप्रमितो जीवः परोवेति संशये जीव इति प्राप्तम् । 'स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपस्सञ्चरति स्वकर्मभिः । अंगुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो य' इति तस्यांगुष्ठमात्रत्वश्रवणात् । न तु परः, तस्य क्वचिदपि तथात्वश्रवणाभावात् । एवञ्चोपक्रमभूतांगुष्ठमात्रत्वानुसारेण भूतभव्येशानत्वश्रवणं जीव एव देहेन्द्रियादिनियन्तृत्वादिविषयतया योजनीयमिति । ननु श्वेताश्वतरे— 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ती'ति, तैत्तिरीयके— 'अंगुष्ठमात्रः पुरुषोंऽगुष्ठञ्च समाश्रितः । ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभु'गिति परस्याप्यंगुष्ठमात्रत्वं श्रूयते । सत्यम् । परस्यांगुष्ठमात्रत्वश्रवणं क्वचिदपि नास्तीति कृत्वाचिंतयेदमधिकरणम् । यद्वा तदपि मंत्रद्वयं 'अंगुष्ठमात्रो रवितुल्यरूप' इति मन्त्रान्तरानुसारेण जीवपरमिति पूर्वपक्षी मन्यते । एवं प्राप्ते सिद्धान्तः—

अंगुष्ठप्रमितः परमात्मा । भूतभविष्यदात्मकसर्वजगदीशितृत्वश्रवणात् । तस्य देहेन्द्रियादिनियन्तृत्वविषयतया सङ्कोचायोगात् । नन्वंगुष्ठमात्रत्वं प्रथमश्रुतमिति तदनुसारेण देहेन्द्रियादिनियन्तृत्वविषयतया चरमश्रुतं तत् योजनीयम् । न च 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृत'मिति मंत्रे हृदयनिविष्टत्वश्रवणात् तदुपाधिकमंगुष्ठमात्रत्वं परमात्मनस्सम्भवतीति वाच्यम् । शाण्डिल्यविद्यायां— 'एषम आत्माऽन्तर्हृदयेऽणीया'निति हृदयोपाधिकं परस्याणीयस्त्वमेव श्रुतम् । दहरविद्यायामपि तैत्तिरीयके— 'तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः । तस्याश्शिखायामध्ये परमात्मा व्यवस्थित' इत्यणीयोवह्निशिखामध्यवर्तित्वोक्त्या परमात्मनोऽप्यणीयस्त्वे तात्पर्यमवगतम् । तस्मादंगुष्ठमात्रत्वं हृदयोपाधिकमित्येतत् न सम्भवतीतिचेत् सम्भवत्येव । दहरशाण्डिल्यविद्ययोः

हृदयकमलोर्ध्ववर्तिसुषिरवर्तितयोपास्यः परमात्मेति तत्र तदवच्छेदोपाधिकमणीयस्त्वं, इह कृत्स्नहृदयवर्त्युपास्यो विवक्षित इति तदवच्छेदोपाधिकमंगुष्ठमात्रत्वमिति व्यवस्थोपपत्तेः । न च खरतुरगभुजगादीनां अंगुष्ठाभावात् अंगुष्ठमात्रत्वं हृदयोपाधिकमित्येतन्नव्यापकमिति वाच्यम् । मनुष्याणामुपासनाधिकारात् तेषाञ्च हृदयस्य तत्तदंगुष्ठप्रमितत्वात् । आराग्रमात्रस्य जीवस्य हृदयोपाधिनाऽप्यंगुष्ठमात्रत्वं न सम्भवतीति । अत्रेदं वक्तव्यं । अंगुष्ठमात्रत्वं जीवलिंगमेव । अंगुष्ठमात्रशब्देन हि अंगुष्ठाधिकपरिमाणव्यवच्छेदः क्रियते । न त्वंगुष्ठपरिमाणमपि विधीयते । एकस्य शब्दस्य उभयत्र तात्पर्यायोगात् । अत एव अग्नीषोमीयपशौ अध्रिगुप्रैषे छागस्य पार्श्वद्वयगतानामस्थ्नां वंक्रिशब्दवाच्यानामियत्ताप्रकाशकस्य 'षड्विंशतिरस्य वंक्रय' इति मंत्रस्य अश्वमेधपशौ अश्वे चोदकप्राप्तस्य तत्प्रकरणाम्नातेन 'चतुस्त्रिंशद्वाजिनो देवबंधोर्वंक्रीरश्वस्य स्वधितिस्समेती'ति वैशेषिकमंत्रेण अपवादप्रसक्तौ तदपवादार्थेन 'षड्विंशतिरित्येव ब्रूया'दिति वाक्येन षड्विंशतिपदयुक्तप्राकृतमंत्रविधानात् 'षड्विंशतिरेषां वंक्रय'इति षड्विंशतिपदयुक्त एव सः प्राकृतो मंत्रः प्रयोक्तव्यः । न तु 'अश्वस्तूपरो गोमृगस्ते प्राजापत्या 'इति विहिताश्वतूपरगोमृगवंक्रीणां समस्यवचन ऊहः कर्तव्य इति पूर्वपक्षे प्राप्ते ॥

'षड्विंशतिरित्येव ब्रूया'दिति वाक्यस्यैवकारेण षड्विंशतिमात्रव्यतिरिक्तं यदन्यत् चतुस्त्रिंशदिति मंत्रान्तरं प्राप्तम्, तन्नकर्तव्यमित्यत्र तात्पर्यावगमात् षड्विंशतिपदयोगेऽपि तात्पर्यकल्पने वाक्यभेदापत्तेः न्यायप्राप्तस्य अश्वतूपरगोमृगवंक्रीणां समस्यवचनरूपस्य ऊहस्य न बाध इति व्यवस्थापितं पूर्वतंत्रे नवमाध्याये । अत एव च भाष्यकारैरिहाधिकरणे 'यावान्वा अयमाकाश'इति दहराकाशस्य परमात्मनो भूताकाशसमपरिमाणत्वोक्तिरयुक्ता, 'ज्यायान् दिव' इत्यादिवाक्यान्तरे तस्य तदधिकपरिमाणश्रवणादित्याशंक्य 'यावान्वा' इत्यादिवाक्यं हृदयावच्छेदप्रयुक्ताल्पपरिमाणत्वनिवृत्तिमात्रपरम् न तु भूताकाशसमपरिमाणत्वपरमपीत्युक्तम् । एवमंगुष्ठमात्रत्वस्य अंगुष्ठाधिकपरिमाणव्यवच्छेदरूपतायामाराग्रमात्रत्वस्याप्या-

राग्राधिकपरिमाणव्यवच्छेदरूपत्वप्राप्तेराराग्रपरिमाणत्वमपि जीवस्य न स्यादिति चेत्। नास्त्येववस्तुतस्तस्याराग्रपरिमाणत्वमपि। अत एव 'आराग्रमात्रोऽप्यवरोऽपि दृष्ट' इत्येतदनन्तरं 'वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्स विज्ञेयस्सचानन्त्याय कल्पत' इति मंत्रेण आराग्रपरिमाणत्वादत्यल्पमतिसूक्ष्मं परिमाणान्तरं प्रतिपादितम्। तस्मादंगुष्ठाधिकपरिमाणव्यवच्छेदस्य परमात्मन्यनुपपत्तेः जीवे तदुपपत्तेश्च जीव एवांगुष्ठमात्र इति निश्चिते तदनुसारेण चरमश्रुतं भूतभव्येशितृत्वं तस्मिन्नेव सङ्कोचनीयमिति पूर्वपक्षो वर्णनीयः। 'अंगुष्ठमात्र' इत्येतन्मात्रशब्दस्य अवधारणार्थं परिगृह्य अंगुष्ठपरिमाणाधिकपरिमाणव्यवच्छेदपरत्वं न कल्पनीयम्, किंतु शब्दस्य 'प्रमाणे द्वयसच्दघ्नच्मात्र च' इति प्रमाणार्थविहितमात्रच्प्रत्ययरूपत्वं परिगृह्य अंगुष्ठसमपरिमाणत्वपरत्वकल्पनं युक्तम्। भावरूपलघ्वर्थपरिग्रहे सम्भवति अभावद्वयघटितगुर्वर्थकल्पनायोगात्। एवं च अंगुष्ठमात्रत्वं परमात्मन्येव सम्भवति। अधिकपरिमाणस्य अल्पपरिमाणावच्छेदोपाधिकाल्पत्वस्य व्योमादिषु दृष्टत्वात्। वालाग्रायुतांशपरिमाणस्य जीवस्य तु हृदयावच्छेदप्रयुक्तमप्यंगुष्ठमात्रत्वं न सम्भवति। अल्पपरिमाणस्य अधिकपरिमाणकवस्तुमध्यवर्तित्वप्रयुक्ताधिकपरिमाणत्वव्यपदेशस्य क्वचिदप्यदर्शनात्। जीववाक्येषु अंगुष्ठमात्रत्वश्रवणन्तु अंगुष्ठाधिकपरिमाणव्यवच्छेदविषयत्वेनोपपादनीयम्। एकस्यापि शब्दस्य तत्र तत्र उचितार्थभेदसम्भवात्। यद्वा– तेषु हृदयशततमनाड्यवच्छेदोपाधिकयोर्धर्मज्ञानगतयोरंगुष्ठमात्रत्वाराग्रमात्रत्वयोस्तस्मिन् सद्वारकान्वयः। नचेहांगुष्ठवाक्ये सद्वारकान्वयः कल्प्यः। परमात्मनि साक्षात्तदन्वयसम्भवादिति सिद्धांतो वर्णनीयः। यद्येवं प्रथमश्रुतेन अंगुष्ठमात्रत्वलिंङ्गेनैव परमात्मेति निर्णयसम्भवे किमिति तन्निर्णयार्थं ईशानश्रुतिस्सूत्रकारेणाश्रिता। तस्यास्सर्वेश्वरे रूढतया ततो झटिति निर्णयमभिप्रेत्य। अत एव सूत्रे 'शब्दादेवे'त्येवकारः। आस्तां यौगिकार्थविचारावगम्याल्लिंगान्निर्णयः रूढतयाऽभिधानश्रुतिरूपादीशानशब्दादेव लघवान्निर्णयस्संभवतीतिहि तदभिप्रायः। तस्मादंगुष्ठप्रमितः परमात्मेति सिद्धं॥

संग्रहकारिकाः ॥

अंगुष्ठमात्रः पुरुषश्शरीरी श्रुत्यन्तरे तस्य तथा प्रसिद्धेः ।
ईशानतात्वस्तु जघन्यपाठात् तद्भोग्यभोगस्थितिहेत्वपेक्षा ॥
ईशानशब्दस्वरसोपनीतस्सर्वस्य नेता पुरुषोत्तमोऽसौ ।
अंगुष्ठमात्रत्वमणौ विभौ च स्वारस्यहीनं हृदपेक्षयाऽस्तु ॥
अस्माद्भयेन जगतः प्रवृत्तिरुक्ता स्वकार्येषु ।
अस्य च निरवधि दृष्टं सर्वानुग्राहकं ज्योतिः ॥
यदिदं किंचेति मनौ न तत्र सूर्यइति मंत्रे च ।
आभ्यामपि लिंगाभ्यां परमात्मांऽगुष्ठमात्रोऽसौ ॥ इति ।

'हृद्यपेक्षयात्वि'त्येतावतीह स्थितमधिकरणं कम्पनात् ज्योतिर्दर्शनादिति सूत्राभ्यामुत्तरत्र समापयिष्यते । मध्ये प्रासंगिकमधिकरणत्रयं पूर्वतंत्रगतेंद्रपीताद्यधिकरणवत् गर्भाधिकरणतया प्रासंगिकं प्रवृत्तम् । संग्रहश्लोकेषु तु बुद्धिसौकर्यार्थं उपरितनसूत्रद्वयार्थोऽपि अत्रैव संगृहीतः ॥

**तदुपर्यपि बादरायणस्सम्भवात् ॥२५॥**

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥२६॥**

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्यां ॥२७॥**

**अत एव च नित्यत्वं ॥२८॥**

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥**

मनुष्याधिकारप्रसङ्गात् देवादीनां ब्रह्मविद्यायामधिकारोस्ति न वेति विचार्यते । तत्र पूर्वपक्षः— नास्त्यधिकारश्शरीररहितानां तेषां ब्रह्मविद्यानुष्ठाने सामर्थ्याभावात् । न च तेषां शरीरवत्त्वे प्रमाणमस्ति । न च 'वज्रहस्तः पुरन्दरः, इन्द्रोवृत्राय वज्रमुदयच्छ' दित्यादिमन्त्रार्थवादाः तत्र प्रमाणं । अनुष्ठेयार्थस्मृतिस्तुत्यर्थानां तेषान्तत्र तात्पर्याभावात् । नच स्मृतिद्वारतया तत्सिद्धिः । सताचासताचस्तुतिदर्शनेन स्तुत्यर्थं द्वारभूतार्थसत्ता-

नपेक्षणात् । नच स्तुत्यर्थं प्रतीयमानतामात्रेण तत्सिद्धिः । तात्पर्याभावे तदसिद्धेः, तात्पर्याधीनत्वाच्छब्दप्रामाण्यस्य। न च तत्रापि तात्पर्यं, कल्पकाभावात् । प्रामाण्यनिर्वाहकप्रयोजनपर्यवसानाय हि तत्कल्पनं। कर्मकाण्डवचसां विधिनिषेधाधीनप्रवृत्तिनिवृत्तिभ्यां ब्रह्मकाण्डवचसां स्वतःपुरुषार्थब्रह्मप्रतिपादनेन च प्रयोजनपर्यवसानं लब्धमेव । न च देवतोद्देश्यकद्रव्यत्यागात्मकयागविधिवाक्यान्येव देवतापेक्षाणीति वाच्यं । शरीररहितस्यापि उद्देशसम्भवेन ततस्तासां शरीरापेक्षाऽसिद्धेः । न च क्षणध्वंसिनां कर्मणां कालांतरभाविफलसाधनत्वनिर्वाहाय द्वारापेक्षायां 'तृप्त एवैनमिंद्रः प्रजया पशुभिस्तर्पयती' त्याद्यर्थवादतः प्रतीतस्य देवताप्रसादस्य द्वारत्वेन परिग्राह्यतया तासां विग्रहादिपञ्चकसिद्धिः । अपूर्वस्य द्वारस्य सद्भावेन द्वारान्तरानपेक्षणात् । न च अर्थवादप्रतीते देवताप्रसादे स्थिते नापूर्वं कल्प्यमिति वाच्यम् । देवतारहितेषु दानादिषु अपूर्वकल्पनाऽवश्यंभावात् यागहोमेष्वपि सम्प्रतिपन्नाचेतनदेवताकेषु चेतनदेवताकेष्वपि केषुचित् तत्कल्पनाऽवश्यम्भावाच्च । न ह्यश्वमेधे मेध्यस्याश्वस्य गुणक्रियांगान्युद्दिश्य 'कृष्णाय स्वाहा श्वेताय स्वाहा यन्मेहसि तस्मै स्वाहा यच्छकृत्करोषि तस्मै स्वाहा दद्भ्यस्स्वाहा हनूभ्यां स्वाहे' त्यादिमन्त्रैः क्रियमाणेषु होमेषु चेतनादेवतास्ति। न च तिर्यग्जन्मगतान् पितॄनुद्दिश्य क्रियमाणेषु श्राद्धेषु तिर्यग्भूताः पितरः फलप्रदानसमर्थाः। न च इन्द्रादयोपि कल्पावसानेषु निवृत्ताधिकाराः कल्पावसानानुष्ठितभाविकल्पभोग्यफलयागादिफलप्रदानसमर्थाः । एतेन 'यजदेवपूजाया'मिति स्मरणेन यागस्य देवताराधनरूपत्वात् तदाराधनानां राजाराधनवत् आराधनप्रसन्नाराधनीयदेयफलार्थत्वावश्यम्भावात् यागैर्विधिसामर्थ्येन देवताविग्रहसिद्धिरित्यपि शङ्का निरस्ता । राज्ञश्शिशवः तत्पादुकादयश्च राजभृत्यैरुचितोपचारेण पूज्यन्ते । ज्योतिष्टोमे सोमलता पयोन्ननिवेदनेन पूज्यते। पितृमातृगुरुभर्त्रतिथिविद्यावृद्धादयश्च शुश्रूषादिभिः पूज्यन्ते । न च तेषां फलप्रदातृत्वमस्ति । राजकुमारादीनामुपचारो राजादीनामेव पूजा, तेषाञ्च फलदातृत्वमस्तीति यद्यु-

च्येत, तदा देवतानामिज्या वर्णाश्रमादिरूपाचारप्रवर्तकस्य सर्वेश्वरस्यैव पूजा, तस्य फलदातृत्वमस्तीति ततएव यागस्य देवपूजात्वसिद्धेः न तत इन्द्रादिदेवानां विग्रहसिद्धिः । एतेन 'इन्द्रो ह वै देवानामभिप्रवव्राजविरोचनोऽसुराणा' मित्यादि ब्रह्मकाण्डगतोपाख्यानैः इन्द्रादीनां विग्रहसिद्धिशङ्काऽपि निरस्ता । कर्मकाण्डगतविश्वरूपाद्युपाख्यानानां अग्नीषोमीययागादिविधिशेषत्ववत् ब्रह्मकाण्डगतोपाख्यानानामपि पारिप्लवाधिकरणन्यायात् तत्तद्विद्याविधिशेषत्वेन कर्मकाण्डगतैरिव ब्रह्मकाण्डगतैरपि अर्थवादैः स्तुतिद्वारभूतार्थासिद्धेः । तस्माद्देवादीनां विग्रहरहितानां सामर्थ्याभावेन नास्ति ब्रह्मविद्यास्वधिकार इत्येवं प्राप्ते सिद्धांतः ॥

ब्रह्मोपासनं मनुष्याणामुपरि ये देवादयः तेष्वपि संभवत्येव । न च विग्रहाभावेन तेषां सामर्थ्याभावः, सर्वास्वप्युपनिषत्सु सृष्टिप्रकरणेषु 'नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रोजायते, इन्द्रो वरुणस्सोमो रुद्र' इत्यादिवाक्यैः देवादीनां सृष्टिप्रतिपादनात्, सर्वासु श्रुतिषु इन्द्रादिपदानां कर्मविशेषफलत्वप्रतिपादनाच्च । तथा हि सामगानां सामविधिब्राह्मणे 'मयि वर्च' इत्येतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जानः त्रयाणां लोकानामाधिपत्यं गच्छती' ति श्रूयते । त्रैलोक्याधिपत्यमिंद्रत्वमेव । तथा छन्दोगानामुपनिषदि– 'वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यती' त्यादिवाक्यैः वसुरुद्रादित्यमरुत्साध्याख्यगणदेवतापदप्राप्तिः मधुविद्याफलत्वेन प्रतिपाद्यते । तथा देवतावशीकरणस्य कर्मविशेषफलत्वश्रवणादपि तासां विग्रहसिद्धिः । तथा हि सामविधिब्राह्मणे श्रूयते– 'यः कामयेतावर्तयेयमित्येकरात्रं क्षुरसंयुक्तस्तिष्ठेत् सुतासामधुमत्तमा' इति वर्गः । 'एतेषामेकमनेकं वा सर्वाणि वा प्रयुञ्जानः एकरात्रेण कुटुंबिनमावर्तयति, द्विरात्रेण राजोपजीविनं, त्रिरात्रेण राजानं, चतूरात्रेण ग्रामं, पञ्चरात्रेण नगरं, षड्रात्रेण जनपदं, सप्तरात्रेणासुररक्षांसि, अष्टरात्रेण पितृपिशाचान्, नवरात्रेण यक्षान्, दशरात्रेण गन्धर्वाप्सरसः, अर्धमासेन वैश्रवणं, मासेनेंद्रं, चतुर्भिः प्रजापतिं, संवत्सरेण यत्किञ्चिज्जगत् सर्वं हास्य गुणीभ-

वती' ति । एवं देवतानां विग्रहसामान्यसिद्धौ 'सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासुदेवो द्रविणं दधातु, चत्वारि शृङ्गा त्रयो अस्य पादा द्वेशीर्षे सप्तहस्तासोअस्ये' त्यादिमन्त्रैः इन्द्राग्न्यादीनां सहस्राक्षसप्तहस्तत्वादिविशिष्टविग्रहविशेषसिद्धिः । न च तेषु विग्रहविशेषप्रतिपादनानपेक्षा शङ्कनीया । 'यां देवतां वषट्करिष्यन् स्यात्तांमनसाध्यायेदि' ति विहितस्य ध्यानस्य ध्यातव्याकारविशेषापेक्षत्वात् निराकारध्यानासम्भवात्, तथा अर्थवादैरपि वज्रहस्तत्वादिविशिष्टविग्रहसिद्धिः । असता विवेकिनां प्ररोचना संभवेन प्ररोचनार्थं द्वारभूतार्थसत्तापेक्षणात् । अत एव शावरभाष्ये प्रजापतिवपोत्खननादिवाक्यानामपि लाक्षणिकार्थपरिग्रहेण द्वारभूतस्याप्यर्थस्य सद्रूपता दर्शिता । किंच 'इन्द्रो वृत्राये' त्यादिवादानां इन्द्रवृत्रादिशब्देभ्योपि विभक्त्युत्पत्त्यर्थमर्थवस्त्वन्तावदपेक्षितम् । तदभावे प्रातिपदिकत्वाभावेन विभक्त्यनुत्पत्तेः । अपेक्षितोर्थस्तदर्थवादैस्समर्पितो वज्रहस्तत्वादिरूप एव पर्यवस्यति । अपेक्षितार्थविशेषसमर्पणे विद्यमाने तं परित्यज्य अपेक्षापूरणार्थं अर्थांतरग्रहणायोगात् । ननु 'नकिरिन्द्र त्वदुत्तरः न ज्यायोअस्ति वृत्रहन् नक्येवं यथा त्वं, आ त्वा विशंत्विन्दवःसमुद्रमिव सिन्धवः, नत्वामिन्द्रातिरिच्यते, इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसङ्गिरः' इत्यादयो मन्त्राः न केवलमिन्द्रं प्रकाशयन्ति । किन्तु सर्वोत्तरत्वसर्वसोमग्रहपात्रत्वसर्ववाग्जालप्रतिपाद्यत्वादिभिरसदर्थैस्स्तुवन्त्यपि । अतो न स्तुतिद्वारा अर्थसत्तानियम इति चेत्, यत्र विरोधः तत्र 'शृणोतग्रावाण' इत्यादिष्विव असदर्थावलम्बनतास्तु, लौकिकराजादिस्तुतिषु काव्यादिनिबन्धस्तुतिनिन्दासु च असदर्थावलम्बनत्वस्यापि दर्शनात् । यत्र न विरोधः तत्र औत्सर्गिकस्वतःप्रामाण्यवशादपि अर्थसत्ताऽभ्युपगन्तव्या । किमुत तदपेक्षायां । तस्माद्विधिमन्त्रार्थवादैर्देवादीनां विग्रहसिद्धेः सामर्थ्यसद्भावात् मोक्षफलायां ब्रह्मविद्यायामस्त्यधिकारः । ननु मन्त्रार्थवादादिवशात् देवानां विग्रहवत्त्वाभ्युपगमे 'अग्निमग्न आवह, इन्द्रागच्छ हरिव आगच्छ, अध्वर्यो द्रावयत्वं सोममिन्द्रः पिपासति, उपोनूनं युयुजे वृषणा हरी, आ च जगाम वृत्रहा, कस्य

वाऽहदेवा यज्ञमागच्छंति कस्य वा न बहूनां यजमानाना'मित्यादिबहुतरमंत्रार्थवाददर्शनात् देवानां यज्ञदेशागमनमपि अङ्गीकर्तव्यम् । कथमेकस्येन्द्रस्य युगपदनेकयज्ञदेशागमनं घटते । भूतवशिनान्तेषां योगिनामिव युगपत् बहुशरीरपरिग्रहसम्भवादिति ब्रूमः । 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त, अवाड्ढव्यानि सुरभीणि कृत्वे' त्यादिश्रुतिषु लोकान्तरस्थदेवसमीपप्रापणार्थं हव्यवहनश्रवणं तु येषु दर्वीहोमादिषु देवताह्वानं तदागमनं वा न श्रुतं तद्विषयं । यद्वा यज्ञदेशमागता देवाः हविर्गृहीत्वा 'यद्वै देवा हविर्जुषन्ते अल्पमप्येकमाहुतिमपि तद्गिरिमात्रं वर्धत' इति श्रुतेः प्रवृद्धन्तद्धविरग्निना वाहयन्तः स्वस्थानं गत्वा भुञ्जत इति यज्ञदेशागमनहव्यवहनश्रुत्योर्न विरोधः । माभूदिन्द्रादीनां विग्रहवत्त्वे कर्मणि विरोधः । शब्दे तु स्यात्, विग्रहाणामानित्यत्वावश्यंभावेन तद्विशिष्टवाचिनामिन्द्रादिशब्दानां तदुत्पत्तेः पूर्वं पश्चाच्च अर्थशून्यत्वस्य अनिवार्यत्वात् । यद्युच्येत डित्थादिसाङ्केतिकशब्दानामिव काचित्केनाप्यर्थेन अर्थवत्त्वमुपपद्यत इति तदाऽपि इन्द्रादिपूर्वापरकालयोः— 'इन्द्रागच्छे' त्यादीनामर्थशून्यत्वमनिवार्यमिति चेन्न । इन्द्रादीनामिंद्रादिशब्दप्रभवतयेन्द्रादिशब्दानां घटादिशब्दवत् प्रवाहानादिव्यक्तिपरम्परागतजातिवाचित्वात् । यथा हि शिल्पी शिल्पशास्त्रावगतमिंद्राद्याकारं स्मृत्वा तदाकारां प्रतिमां निर्माति, तथा प्रजापतिर्वेदावगतं पूर्वपूर्वेन्द्राद्याकारं स्मृत्वा तत्तदाकारविशिष्टानिंद्रादीन् सृजतीति हि 'वेदेन रूपे व्याकरोत् सतासती प्रजापतिस्सभूरिति व्याहरत् स भूमिमसृजत स भुव इति व्याहरत् सोऽन्तरिक्षमसृजते' त्यादिश्रुतिषु श्रूयते । तथा स्मर्यते च 'नाम रूपं च भूतानां कृत्यादीनां प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार स' इति । 'ननु माभूदर्थद्वारको वैदिकशब्दे विरोधः । शब्दद्वारकस्तु स्यात् । मंत्रार्थवादादीनां हि प्रतीयमानार्थे प्रामाण्यमुपपादितम् । तथा च 'मंत्रकृतो वृणीते' विश्वामित्रस्य सूक्तं भवति, संहिताकारपदकारसूत्रकारब्राह्मणकाराणा'मित्यादिप्रामाण्याद्वेदस्य पौरुषेयत्वमनिवार्यमितिचेत् नायः

मपि दोषः । 'विश्वामित्रस्य सूक्तं भवती' त्यादिवेदशब्देभ्यो विश्वामित्रादीनां तत्तत्सूक्तविशेषदर्शनादिरूपकृत्यविशेषान् नामरूपाणिचानुसन्धाय पूर्वकल्पानुष्ठितपुण्यवशात् विश्वामित्रादीन् सूक्तादीननधीत्यैव द्रष्टुं समर्थान् प्रजापतिः सृष्ट्वा विश्वामित्रादिपदेषु निवेशयति । अनधीत्य तत्तत्सूक्तादिदर्शनसामर्थ्यमेव च मन्त्रकृत्त्वादिकं । ततो न वेदानित्यत्वापत्तिः । अथ स्यात् चतुर्मुखस्य स्वमानेन परार्धद्वयजीविनः चतुर्युगसहस्ररूपैकैकदिवसात्मकस्य अवान्तरकल्पस्यावसाने तावत्कालप्रमाणरात्रिरूपे नैमित्तिकप्रळये भूर्भुवस्स्वरिति त्रैलोक्यमात्रस्य नाश इति वेदसत्त्वात् भवतुवेदशब्दपूर्विका तदनंतरसृष्टिः । तदीयवर्षशतावसाने तावत्प्रमाणो यः प्राकृतप्रळयकालः तदा व्याकृतपर्यन्तसर्वनाशे वेदस्यापि नाशावश्यम्भावात् कथन्तदनन्तरमहाकल्पादौ वेदशब्दपूर्विका सृष्टिः, कथञ्च प्राकृतप्रळये नश्यतो वेदस्य नित्यत्वमितिचेत् उच्यते– तदा वेदानां नाशो न दोषः, 'छन्दांसि जज्ञिरे-तस्मादि' ति श्रुतिषु महाकल्पादौ तेषामपि सृष्टिश्रवणात् । समानानुपूर्वीकत्वरूपे तु नित्यत्वे नास्ति विरोधः । महाकल्पावृत्तावपि सृज्ज्यानां समाननामरूपत्वात् । न च तदसिद्धिः । 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा' इति मन्त्रे महाकल्पादौ ब्रह्मसृष्ट्यनन्तरं तस्मै वेदप्रदानश्रवणस्य ब्रह्मा शिल्पिन्यायेन पूर्वकल्पेन्द्रादिनामरूपाणि मन्त्रार्थवादेभ्योऽवगत्य तत्समाननामरूपानिन्द्रादीन् सृजात्वित्येतदर्थत्वात् , 'तस्य सुप्तस्य देवस्य नाभौ पद्ममजायत । तस्मिन् पद्मे महाभाग वेदवेदाङ्गपारगः । ब्रह्मोत्पन्नस्सतेनोक्तः प्रजास्सृजमहामत'इत्यादिस्मरणाच्च । तस्माद्देवादीनां विग्रहवतामर्थित्वसामर्थ्ययोगादस्तिब्रह्मविद्यायामधिकारइति सिद्धं ॥

संग्रहकारिकाः ॥

देवादीनामधिकृतिर्विद्यायां नैव विद्यते ।
तेषां विग्रहशून्यानां नखल्वस्ति समर्थता ॥
न च मन्त्रार्थवादेभ्यस्तत्सिद्धिप्रार्थनोचिता ।
आन्यपर्याद्विरोधाच्च दुर्वारात्कर्मशब्दयोः ॥

मैवम्मन्त्रार्थवादानां द्वारार्थेऽप्यस्ति मानता ।
न कर्मणि विरोधोऽस्ति नैकविग्रहसम्भवात् ॥
न शब्दे जातिशब्दत्वात् समत्वान्नामरूपयोः ॥

इति देवताधिकरणम् ॥७॥

---

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥३०॥**

**ज्योतिषि भावाच्च ॥३१॥**

**भावं तु बादरायणोऽस्ति हि ॥३२॥**

पूर्वाधिकरणे सामान्येन देवानां तदभीप्सितपरोपासनाधिकारोऽस्तीत्युक्तम् । अथ उपासनाविशेषेषु देवताविशेषाणामधिकारोऽस्ति न वेति चिन्त्यत इति सङ्गतिः । अस्ति छान्दोग्ये मधुविद्या । तस्यां वस्वादय उपास्याः प्राप्याश्च श्रूयन्ते । तत्रह्यादित्यव्यपाश्रयाणि लोहितादिपञ्चरूपात्मकानि पञ्चामृतानि वसुरुद्रादित्यमरुत्साध्यगणभोग्यत्वेनोपास्यानि, तदुपासनानाञ्च वस्वादिपदप्राप्तिः फलमिति वर्णितं, 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतन्दृष्ट्वा तृप्यन्ति सयएतदेवममृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यती'त्यादिना । तस्यांवस्वादीनां नास्त्यधिकारः । स्वस्य स्वोपास्यत्वासम्भवात्, स्वपदप्राप्तेः फलत्वासम्भवाच्चेति पूर्वः पक्षः । ननु नायं पूर्वपक्षो युक्तः । इह कल्पे वस्वादीनां सतां कल्पान्तरेऽपि वसुत्वादिकमस्त्विति, इह जन्मनि ब्राह्मणस्य सतो जन्मान्तरेऽपि ब्राह्मण्यमस्त्विवतीच्छावदिच्छोपपत्तेः, भूमविद्यामद्धन्यगतायां प्राणविद्यायां स्वस्य स्वोपास्यत्वसम्प्रतिपत्तेश्चेति चेत्, एवं पूर्वपक्षी मन्यते । मधुविद्याया न वस्वादिभावः फलम् । किन्तु वस्वादिस्थानप्राप्तिपूर्वकं तत्तद्भोगसाम्यं । यथा 'अस्मद्भ्रातॄणाम्मध्ये त्वमेक' इत्युक्तौ भ्रातृभिर्भोगसाम्यं । अन्यथा मधुविद्यानिष्ठानां प्रायणानन्तरं वस्वादिभावप्राप्तौ 'अष्टौवसव' इत्यादिश्रुतिसिद्धसंख्यातिरेकप्रसङ्गात् । दृष्टञ्च 'वैष्णवं वामनमालभेत स्पर्धमान' इति

विधिशेषस्य 'विष्णुरेव भूत्वेमान् लोकानभिजयती' त्यर्थवादस्य विष्णुवज्जेतृत्वमात्रपरत्वं। तस्माद्वस्वादीनामप्राप्तफलत्वोक्तिर्युक्तैव। तथा स्वोपासनासम्भवोक्तिरपि युक्ता। तदुपासनया तद्भोगसाम्यप्राप्तेस्तत्प्रीतिद्वारत्वस्यौत्सर्गिकत्वेन वस्वादिषु प्रीणयितृत्वप्रीणनीयत्वरूपकर्तृकर्मभावविरोधात्। न हि स्वयमेव स्वात्मानं प्रीणयित्वा प्रीतात्स्वस्मात् फलंलभत इत्यस्ति सम्भवः। प्राणविद्यायांतु भगवत्प्रीत्यैव फललाभः। न हि तत्र स्वोपासनस्य स्वसमभोगप्राप्तिफलश्रवणमस्तीति। किंच 'तन्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत' मिति श्रुतिः न देवादीनां ब्रह्मविद्याधिकारप्राप्त्यर्था। मनुष्याणामिव तेषामप्यर्थित्वादिसत्त्वेनाधिकारस्य स्वतःप्राप्तत्वात्। किन्तु ज्योतिषां ज्योतिर्ब्रह्मैवोपासत इति परिसंख्यार्था। अतोऽपि न वस्वादीनां मधुविद्यायामधिकारइति पूर्वपक्षः। सिद्धान्तस्तु—

वस्वादीनामपि तस्यामस्त्येवाधिकारः। तेषामपि स्वान्तर्यामितया ब्रह्मोपासनसम्भवात् 'य एतामेवं ब्रह्मोपनिषदं वेदे' त्युपसंहारे ब्रह्मविद्यात्वश्रवणात् तेषामपि भाविवस्वादित्वप्राप्तिपूर्वकब्रह्मप्रेप्सासम्भवाच्च। एतेन पूर्वपक्ष्यापादितः प्रीणयितृप्रीणनीयैक्यापत्तिमूलस्सर्वोऽपि दोषो निरस्तः। वस्वादिभिस्स्वान्तर्यामितयोपास्यस्य सर्वेश्वरस्यैव प्रीणनीयत्वात्। तस्माद्वस्वादीनामपि स्वप्रीणनीयोपास्यतत्फलप्रेप्सयोस्सम्भवात् अस्ति मधुविद्याधिकारः। एवं वाय्वादीनां संवर्गविद्याद्यधिकारोऽपि द्रष्टव्यः। नन्वग्न्यादिभ्य उपरि स्थितानामिन्द्रादीनामर्चिरादिगतिस्मरणं न सम्भवति। तच्च विद्याङ्गमिति 'तदोकोग्रज्वलन' मिति सूत्रे सूत्रकार एव 'तच्छेषगत्यनुस्मृतियोगा' दिति सूत्रांशेन स्फुटीकरिष्यति। अतोऽङ्गानुष्ठानाशक्तानां देवानां कथं विद्याधिकारः। यदि गतिस्मरणमदृष्टार्थं तदाऽर्चिरादिदेवता अपि मनुष्याणां मुच्यमानानां अर्चिरादिका गतिरिति स्मरिष्यति। यदि त्वेवंभूतेन मार्गेण मया विद्यया परमपदं प्राप्यमिति स्मरणमहरहःकर्त्तव्या। यामुपासनायां ऋत्विक्कर्तृकहविश्शेषभक्षणनियमस्तेषांक्रियमाणकर्मसन्तताविवोत्साहजननार्थं, तदाग्न्यादयः स्वस्वानोक्षितांशं विहायापेक्षितं स्व-

स्वपदानामुपरिस्थितं गत्यंशं स्मरिष्यन्ति । यथा ऋत्विजोऽश्वमेधादिषु अतिबहुपशुप्रभवहविर्विशेषमध्ये अपेक्षितांशमात्रं भक्षयन्तीति न सङ्कटं किंचित् । ननु देवानां ब्रह्मविद्याधिकारचिन्तेयं क्वोपयुज्यते । न तावदस्मदादीनां प्रवृत्तौ । नापि देवानां । तेषां स्वकीये विग्रहवत्त्वे तत्प्रयुक्तसामर्थ्यादिमत्त्वे च स्वयमेवावगतिसद्भावात् । उच्यते- देवता न संति चेत् मधुविद्यादीनां वस्वादिपदप्राप्तिः फलं न भवेत् । वरुणग्रहनिर्मोकादिवत् बाधितस्य फलत्वेन श्रुतस्यापि विधेयक्रियाफलत्वायोगात् अन्यदेव तत्फलं कल्प्यं स्यात् । अन्तरादित्यविद्यादिष्वादित्यदेवतान्तर्यामित्वेन ब्रह्मोपासनं न सिध्येत् । गत्यनुस्मृतावचेतनान्यर्चिरादीन्येव मार्गपर्वत्वेन चिन्तनीयानि स्युः । 'भाक्तं वानात्मवित्त्वा' दित्यादिसूत्रोक्तन्यायेन यागादिफलं भुञ्जानानान्निरन्तरमाजानदेवकर्मकरतावगत्या वैराग्यं न सिध्येत् । मनुष्याणामेतादृशाभिमतासिद्धिः फलम् देवतासद्भावप्रसाधनस्य । मंत्रार्थवादाः प्राप्तिविरोधयोरसतोः प्रतीयमानार्थे प्रामाण्यं न जहातीति देवताविग्रहप्रसाधनोपयोगिन्यायसमर्थनस्यापि 'प्लवाह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यूं ते पुनरेवापियंति ॥ जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं, तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेते' त्यादिमन्त्रार्थवादप्रामाण्यावधारणेन विवेकवैराग्यादिसिद्धिः फलमित्याद्यूह्यम् ॥ संग्रहकारिके ॥

तथाऽपि मधुविद्यायां वस्वादीनान्नविद्यते ।
अधिकारो विरोधाच्च प्राप्तत्वात्तत्फलस्य च ॥
मैवं सा ब्रह्मविद्या तदधिगतिफला वर्णिता वाक्यशेषे
तस्माद्वस्वादिशब्दे प्रविकसितपरब्रह्मपर्यन्तशक्तिः ।
स्वावस्थब्रह्मचिन्ताविधिषु न वलते कर्मकर्त्रैक्यशङ्का
मुक्तेः प्राक् द्वारभूतं फलमपि घटते भावि वस्वादिताप्तिः ॥

इति मध्वधिकरणम् ॥ ९ ॥

शुगस्य तदनादरश्रवणात्तदाद्रवणात् सूच्यते हि ॥३३॥

क्षत्रियत्वगतेश्च ॥३४॥

उत्तरत्र चैत्ररथेन लिंगात् ॥३५॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥३६॥

तदभावनिर्धारणे च प्रवृत्तेः ॥३७॥

श्रवणाध्ययनार्थप्रतिषेधात् ॥३८॥

स्मृतेश्च ॥३९॥

वस्वादीनामर्थित्वसामर्थ्यसद्भावात् ब्रह्मविद्यायामधिकारोऽस्तीत्युक्तं। तर्हि शूद्राणामपि तत्सद्भावात् अधिकारस्स्यादिति शङ्कया सङ्गतिः। शूद्राणामधिकारोऽस्ति न वेति तदुपसंहारसामर्थ्यसत्त्वासत्त्वाभ्यां संशये पूर्वपक्षः। अस्त्यधिकारस्तेषामपि। अग्निविद्याभावाद्धि कर्मानाधिकारः पूर्वतन्त्रापशूद्राधिकरणे साधितः। न चोपासनेषु मनोवृत्तिमात्ररूपेषु तदपेक्षाऽस्ति। अतः स्त्रीणामिव तेषामप्यधिकारोऽस्त्येव। न च तेषां विद्यासहकारिकर्मासम्भवः। स्ववर्णाश्रमधर्मसम्भवात्। न च तेषां ब्रह्मस्वरूपतदुपासनप्रकारज्ञानासम्भवः, इतिहासपुराणसत्त्वात्। अत एव हि विदुरादयो ब्रह्मनिष्ठाः। अस्तिच छान्दोग्योपनिषदि तेषां विद्याधिकारालिङ्गम्। तत्रहि संवर्गविद्यायां विद्याधिकारिणः शूद्रेत्यामन्त्रणं दृश्यते। 'आजहारेमाश्शूद्रानेनैव मुखेन मामालापयिष्यथा' इत्येवन्तत्रोपाख्यायते। जानश्रुतिर्नाम राज्यपरिपालकः श्रद्धयाबहुप्रदः सर्वासु दिक्षु ग्रामनगरमार्गारण्यतीर्थादिषु पान्थानामन्नोदकशयनाच्छादनादिभोग्यजातसंपूर्णानावसथान् मापयांचक्रे। तस्य धार्मिकप्रवरस्य कर्मभिः क्षीणदुरितस्य ब्रह्मविविदिषामुत्पादयितुं केचन महर्षयो हंसरूपमास्थाय निशायां हर्म्ये शयानस्य तस्योपरि पङ्क्तिमाबध्याजग्मुः। तेषामग्रेसरं हंसं 'भोभो भल्लाक्ष भल्लाक्षे' ति विपरीतलक्षणया मन्दलोचनेति सम्भ्रमेण द्विवारं सम्बोध्य कश्चिद्धंस

उवाच । जानश्रुतेरन्नदानादिप्रभावजनितं ज्योतिः द्युलोकपर्यन्तं व्याप्तं वर्तते। तत्र त्वं लग्नः प्रदग्धो माभूरिति, एवमुक्तवन्तन्तमग्रगामी हंसः प्रत्युवाच। एतं वराकं जानश्रुतिं शकटसहितं रैक्कमिव कीदृशमाहात्म्यशालिनमात्थेति। एतदाकर्ण्य तेन पृष्ठगामिना हंसेन कोऽसौ रैक्क इति पुनः पृष्टस्सएव प्रत्युवाच। सर्वेषामपि सर्वं सत्कर्मविज्ञानजातं यदीयसत्कर्मविज्ञानान्तर्भूतं सरैक्क इति। तदेतद्धंसवाक्यं जानश्रुतिःस्वनिंदारैक्कप्रशंसागर्भमाकर्ण्य कथमपि निशामतिवाह्य तल्पं त्यजन्नेव क्षत्तारमाहूय शकटचिह्नसहितं रैक्कमुक्त्वा तदन्वेषणाय प्रेषयित्वा क्वचिद्देशे शकटस्याधस्तात् पामानं कण्डूयमानं रैक्कं दृष्ट्वा प्रत्यागत्य तस्मिन्निवेदितवति स्वयं रैक्कमुपसंपद्य गवां षट्शतानि निष्कमश्वतरीयुक्तं रथञ्चोपहृत्य त्वदुपास्यां देवतामुपदिशेति प्रार्थयामास । ततस्तमुवाच रैक्कः 'अहहारेत्वा शूद्र तवैव सह गोभिरस्त्वि' ति। अहेति निपातः। हारसहितः इत्वा रथः गोभिस्सह तवैवास्त्विति तदर्थः । पुनर्जानश्रुतौ रैक्कस्यैतावता न सन्तोष इति मत्वा गवां सहस्रं पूर्वानीतं हारादिकं रैक्कस्य विवाहार्थं स्वकन्याञ्चोपहृत्य विद्योपदेशार्थं प्रार्थयमाने रैक्कस्येदं वाक्यं 'आजहारेमाश्शूद्रे' त्यादि । इमाः दक्षिणाः आहृतवानसि । अनेनैव मुखेन विद्याग्रहणोपायेन मामालापयिष्यसि। विद्योपदेष्टारं करिष्यसीत्यर्थः । यद्यपि 'अहहारेत्वाशूद्रे' ति पूर्ववाक्येऽपि 'शूद्रे' त्यामन्त्रणमस्ति । तथाऽपि शूद्रवत् ब्रह्मविद्यागौरवमजानानस्स्वल्पांदक्षिणामाहरसीति कोपेन क्षत्रिय एव 'शूद्रे' त्यामन्त्रित इत्यन्यथा सिद्धिर्वक्तुं शक्या । न तु द्वितीयवाक्य इत्यभिप्रेत्य इदं सन्तोषवाक्यमुदाहृतं भाष्ये । एवं शूद्रस्यापि विद्याधिकारोऽस्तीति प्राप्ते राद्धान्तः—

शूद्राणान्तावत् नब्रह्मस्वरूपतदुपासनप्रकारपरिज्ञानोपायोऽस्ति । न च पुराणादिकं तदुपायः, 'इतिहासपुराणाभ्यां वेदं समुपबृंहये'दिति वेदतात्पर्यनिर्णयार्थत्वेन तस्य विनियुक्तत्वात् । न च 'श्रावयेच्चतुरोवर्णान् कृत्वा ब्राह्मणमग्रत' इति शूद्राणां पुराणादिश्रवणानुमतेर्वैफल्यं, पापक्षयार्थत्वोपपत्तेः । विदुरधर्मव्याधादीनान्तु ब्रह्मनिष्ठा न पुराणादिना, किंतु

जन्मान्तरवासनानुवृत्त्या । 'शूद्रे' त्यामन्त्रणमपि न शूद्राणां विद्याधिकारे लिङ्गं । इह शूद्रशब्दस्य रूढ्या जातिवाचित्वाभावात् 'शूचेर्द्दश्चे' त्युणादिसूत्रेण 'शुच शोक' इति धातोः 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपी'त्यादिसूत्रानुवृत्तरप्रत्ययस्य 'अमितम्योर्दीर्घश्चे' ति तदनन्तरसूत्रानुवृत्तदीर्घस्य धातुचकारस्थाने दकारादेशस्य च विधायकेन निष्पन्नस्य तस्य योगेन शोचितृत्वार्थकत्वात् । नचेह रूढिप्राबल्यं शङ्कनीयं । हंसवाक्यानादरश्रवणेन तदैव रैक्कोपसर्पणेन कार्येण च सूचितस्य शोकस्य बुद्धिस्थतया बुद्धिस्थयोगस्य रूढितः प्रबलत्वात् । किंच जानश्रुतेः क्षत्रियत्वावगमादपि तद्विषयशूद्रशब्दो यौगिकः । उपाख्यानोपक्रमेहि 'जानश्रुतिर्ह पौत्रायणः श्रद्धा देयो बहुदायी बहुवाक्य आससहसर्वत आवसथान्मापयांचक्रे सर्वत एव मेन्नमत्स्यन्ती' ति जानश्रुतेः दानपतित्वं सर्वेभ्यः पक्वान्नदायित्वञ्चोक्तम् । मध्ये च 'सह सञ्जिहान एव क्षत्तारमुवाचे'ति क्षत्तृप्रेषणं । 'इयं जाया अयं ग्रामो यस्मिन्नास्स' इति रैक्वाय कन्याप्रदानं रैक्वस्तदा यत्र ग्रामेस्थितः तस्य ग्रामस्य दानंचोक्तम् । अन्ते च 'ते हैते रैक्वपर्णानाममहावृषेषु यत्रास्मा उवासे' ति तस्मै महावृषाख्यदेशगतबहुग्रामप्रदत्वमुक्तम् । एतैर्लिंगैः जानश्रुतेः क्षत्रियत्वमवगतं । यद्यपि अन्यायवृत्ताश्शूद्रा अपि राज्यं परिपालयन्तः 'वैश्यात् ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते । 'जीविकावृत्तिरेतस्य राजांतःपुररक्षण' मित्युक्तलक्षणक्षत्रसंग्रहादिकं कुर्वंति । तथाऽपि वेदनिबद्धं तत् न तादृशं वक्तुं शक्यम् । बाधकाभावे वैदिकलिंगावगम्यस्य धर्म्यस्यैव ग्राह्यत्वात् । अन्यथा शूद्रेत्यामन्त्रणेनावगतशूद्रस्य विद्याग्रहणं अधर्म्यं वेदेन निबद्धमिति वक्तुं शक्यतया शूद्रस्य विद्याधिकारे उक्तवैदिकलिंगासिध्या तद्बाधकानामनुपन्यसनीयतापत्तेः । तस्माज्जानश्रुतिः क्षत्रियोऽवगम्यत इति युक्तमेव । किंच अस्यामेव संवर्गविद्यायामुत्तरत्र चैत्ररथस्य क्षत्रियत्वात् तस्यापि क्षत्रियत्वमवगम्यते । उत्तरत्र हि 'अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्ष' इत्यादौ शौनकस्य ब्राह्मणस्य द्वितीयोऽभिप्रतारी क्षत्रिय इति तत्प्रायपाठात् रैक्वस्य

ब्राह्मणस्य द्वितीयो जानश्रुतिरपि क्षत्रिय इत्यवगम्यते । स्यादेतत् । जानश्रुतेः क्षत्रियत्वनिर्धारणमिह प्रायपाठसत्वाधीनं, तत् अभिप्रतारिणः क्षत्रियत्वनिर्धारणाधीनं, तदपि तस्य चैत्ररथत्वनिर्धारणाधीनं, तच्च तस्य कापेययाज्यत्वनिर्धारणाधीनं, तत्कुतो निर्धार्यते । न हि तदिह वा अन्यत्र वा श्रुतमस्ति । न च कापेयसहपाठात् तत्सम्बन्धः क्वचित्सिध्यन् तद्याज्यत्वरूपस्सिध्यतीति वाच्यम् । भोजनार्थं सहोपविष्टावित्येव हि सहपाठः । न च तावन्मात्रेण कश्चन कुलसम्बन्धस्सिध्यति । अतिथिगृहस्थयोर्व्यभिचारात्, प्राचीनशालीयसंज्ञादिषु व्यभिचाराच्च । तेषामेकविद्यत्वं सम्बन्धश्चेत्, इहापि तदेव सम्बन्धस्स्यात् । उभयोरपि असंवर्गविद्योपासकत्वात् । ननु छन्दोगब्राह्मणे 'अथ यस्य ज्योतिरुक्थ्यः पूर्वमहर्भवत्यायुरुत्तर' इतिविहितस्य द्विरात्रस्य 'एकाकिनमेवैनमन्नाद्यस्याध्यक्षं करोती' त्येनं द्विरात्रयाजिनमेकमेव भ्रातृवर्गादिमध्ये ऐश्वर्यस्याध्यक्षं करोतीत्येवं फलार्थवादमुक्त्वा तदुपपादकमर्थवादान्तरमाम्नातम् । 'एतेन वै चित्ररथं कापेया अयाजयन् तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वन् तस्माच्चैत्ररथीनामेकः क्षत्रपतिर्जायत' इति चित्ररथतद्वंश्यानां कापेययाज्यत्वं श्रुतमिति चेत्, किंततः । न खल्वभिप्रतारी चित्ररथः, नामभेदेन ततो भेदावगमात् । नापि चित्ररथवंश्यः, तथा श्रवणाभावात् । भाष्ये तु 'एते नवै चित्ररथं कापेया अयाजयन्नि'ति श्रुतिपाठो लिखितः । तत्रापि अभिप्रतारिणः कापेययाज्यत्वासिद्धिशङ्का तुल्या । तस्य चैत्ररथत्वाश्रवणादेव । तस्मादभिप्रतारिणः कापेययाज्यत्वं ततश्चित्ररथवंश्यत्वञ्च अवगन्तुमशक्यमिति चेत् उच्यते– कापेयस्तावत् श्रुत्यन्तरबलात् चित्ररथयाजकत्वेन प्रत्यभिज्ञायत इति तावन्निर्विवादं । तत्सहोपविष्टोऽभिप्रतारी कापेययाज्यः चित्ररथवंश्यश्चेति बुद्धिरौत्सर्गिकी । बाधकाभावात् । भवत्येव यथाद्यविदितपूर्वस्य हस्तिनो निकटे दृश्यमाने पुरुषे राज्ञो हस्तिपकोऽयमिति प्रत्यभिज्ञायमाने सति अयमस्य हस्तिपकस्य शिक्षणीयो हस्ती राजकीयश्चेति बुद्धिः । ननु सिध्यतु कापेययाज्यत्वमभिप्रतारिणः तच्चित्ररथवंश्यत्वं न सिध्यति,

अन्यस्यापि तद्याज्यत्वसम्भवादिति चेत् । न त्रिविधाः खलु याजकाः पितृ-पितामहादिपरम्परया कुलक्रमागताः याजकाः पितृभूताः, तदसम्भवे कस्यचिदाधानप्रभृतिषु सर्वेषु कर्मसु याजका मनुष्यभूताः, तदसम्भवे तत्र कर्मणि दैवादागत्य आर्त्विज्यं कुर्वन्तो देवभूताः । अतस्समानान्वयानां याज्ययाजकभावस्य मुख्यत्वेन औत्सर्गिकत्वात्, पूर्वराजचरित्रेषु बहुशो याज्ययाजककुलव्यवस्थादर्शनाच्च कापेयानां पितृभूतयाजकत्वावधारणात् कापेययाजकयोगेन चित्ररथवंश्यत्वसिद्धिः । तस्मात् संवर्गविद्यान्वयिनोर्द्वयोः ब्राह्मणस्य द्वितीयः क्षत्रिय इत्युत्तरदर्शनात् तन्न्यायपाठादपि रैक्वस्य द्वितीयो जानश्रुतिः क्षत्रियः । ननु रैक्वो ब्राह्मण इति कुतोऽवगतं, येन शौनकद्वितीयवत् तद्द्वितीयः क्षत्रियस्स्यात् । तदन्वेषणार्थं प्रेषिते क्षत्तरि तमन्विष्य प्रत्यागते सति 'यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छे'ति यत्र तपोवनादौ ब्राह्मणानामावासस्थले ब्राह्मणस्यान्वेषणं कर्तुमुचितं, तत्र गत्वैनं प्राप्नुहीत्यर्थकेन तस्य ब्राह्मणत्वस्य स्फुटीकरणात् । तस्मादिह आमन्त्र्यमाणस्य क्षत्रियत्वावगमात न शूद्रेत्यामन्त्रणेन तस्य विद्याधिकारः । विद्याप्रदेशेषु उपदेश्यस्य उपनयनसंस्कारपरामर्शात् शूद्रस्य तदभावाभिलापाच्च न शूद्रस्य विद्याधिकारः । छान्दोग्ये ह्येवमुपाख्यायते शैशवे प्रमीतपितृकस्सत्यकामो 'विद्यार्थमाचार्यमुपेत्य ब्रह्मचर्यं चरिष्यामि किं गोत्रोऽह'मिति मातरं पृष्ट्वा तया त्वज्जनकपरिचरणं कृत्वैव स्थिताऽस्मि नाहं गोत्रं वेदेत्युक्तः गौतममासाद्य 'ब्रह्मचर्यं भवति वत्स्याम्युपेयां भगवन्त' मित्युक्त्वा 'किंगोत्रस्त्व' मितिपृष्टो 'नाहं गोत्रं वेद माताऽपि नावेदीत् माता मे जबाला सत्यकामोऽह' मित्युवाच । अथ गौतमस्सत्यवचनेन 'नायमब्राह्मण' इति निर्धार्य 'समिधं सोम्याहरोपत्वानेष्य' इत्युक्तवानिति । ननु अपरामृष्टमुपनयनं विद्याङ्गमध्ययनाङ्गं वा उभयथापि नोपपद्यते । विद्यांगोपनयने गोत्रपरिज्ञानस्य अनपेक्षितत्वेन गोत्रप्रश्नानुपपत्तेः । अध्ययनांगोपनयन एव गोत्रभेदेन प्रकारभेदसत्त्वेन गोत्रप्रश्नोपयोगात् अध्ययनांगोपनयने 'समिधं सोम्याहरे' ति विनियोगानुपपत्तेः । विद्यांगोपनयन एव 'तद्विज्ञानार्थं स

गुरुमेवाभिगच्छेत्समित्पाणिःश्रोत्रियं ब्रह्मनिष्ठ'मिति समित्पाणित्वस्य विहितत्वात्, अग्रे सत्यकामाय षोडशकलब्रह्मविद्योपदेशस्यैव दर्शनात्,वेदाध्यापनस्यादर्शनाच्च। उच्यते– उपक्रमगतगोत्रप्रश्नानुसारादध्ययनांगमिदमुपनयनं। अध्ययनन्तु 'उपनीये' त्यनेनैव गृहीतं। तस्य अध्ययनपर्यंतोपनयनपरत्वात्। पूर्वतन्त्रे हि 'तस्मादग्निचिद्वर्षति न धावे' दित्यत्र 'अग्निचि' दित्यस्य यदर्थोऽग्नेश्चयनसंस्कारः, तत्पर्यन्ताग्निचयनपरते त्यग्निचयनांगक्रकतौभूत एव 'वर्षति न धावे'दित्यादीनि अग्निचिद्व्रतानि, न त्वग्निचयनसंस्कारमात्रे भूत इति निर्णीतं क्रमलक्षणे। विद्याप्रदेशे अध्ययनांगोप'नयनपरामर्शो विद्यार्थमपि तदपेक्षास्ति, अतस्तद्रहितस्य न विद्याधिकार' इतिज्ञापनार्थः। समिदाहरणनियोगस्तु तस्मिन् दयया तस्मै विद्यामप्युपदेक्ष्यामीत्यभिप्रायो वर्णनीयः। अस्तु शूद्रस्याप्युपनयनमिति चेत् न 'न शूद्रे पातकं किञ्चिन्नच संस्कारमर्हती' ति मानवे धर्मशास्त्रे तस्य तत्प्रतिषेधात्। पातकं=वृथामांसभक्षणादिकृतं। ननु तत्र 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हती' त्येतदनन्तरं 'धर्मेप्सवस्तु धर्मज्ञास्सतां वृत्तिमनुव्रताः। मन्त्रवर्जन्नदुष्यन्ति प्रशंसां प्राप्नुवन्ति चे' ति धार्मिकाणां शूद्राणां मन्त्रवर्जसंस्काराभ्यनुज्ञानं कृतमिति चेत् सत्यं। तज्जातकर्मादिमात्रविषयं। न तु उपनयनविषयमपि। 'शूद्रश्चतुर्थो वर्ण एकजाति' रिति गौतमस्मृतौ। आहत्य तस्य द्वितीयजन्मरूपोपनयनाभावस्मरणात् इहापि शूद्रत्वाभावनिर्धारणे सत्येव अध्ययनांगोपनयनप्रवृत्त्युपन्यासाच्च। किंच शूद्रस्य वेदवाक्यश्रवणतदध्ययनतदर्थविचारज्ञानानुष्ठानानि, 'पद्यु वा एतत्श्मशानं यच्छूद्रः तस्माच्छूद्रसमीपे नाध्येतव्य' मिति शूद्रसमीपे अध्ययनप्रतिषेधेन गौतमस्मृतौ 'अथहास्यवेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद' इति शूद्रस्य वेदश्रवणादिषु दण्डविधानेन चार्थात्प्रतिषिध्यन्ते। यस्य हि समीपेऽपि नाध्येतव्यं वेदवाक्यं, यस्य च तच्छ्रवणेऽपि महान् दण्डः, स तत्कथं शृणुयात्। अशृण्वतः कुतोऽध्ययनमनुष्ठानं वा, तस्मान्नशूद्रस्य विद्याधिकार इति सिद्धम्॥

संग्रहकारिके ॥

विद्यास्वस्त्यधिकारश्शूद्राणामपि फलार्थित्वात् ।
इतिहासपुराणाभ्यां वेद्यत्वाद्दर्शनाच्च तथा ॥
वेदोपबृह्मणतया विद्यार्थे ते न तु स्वतन्त्रतया ।
विदुराद्यास्स्वयमुद्गतविद्या जानश्रुतिस्तु स नृपः ॥

इति अपशूद्राधिकरणम् ॥९॥

---

## कम्पनात् ॥ ४० ॥

एवं प्रासंगिकेऽधिकरणत्रये वृत्ते यदंगुष्ठाधिकरणान्ते स्थितमुत्तरत्र समापयिष्यतइत्युक्तं, तत्सूत्रद्वयेन समापयति– 'अंगुष्ठमात्रः पुरुषो मध्य आत्मनी' ति 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मे' त्यनयोर्मन्त्रयोर्मध्ये 'यदिदं किं च जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ती' ति मन्त्रः पठ्यते । अस्यार्थः । अस्मिन्नंगुष्ठमात्रे पुरुषे प्राणशब्दनिर्दिष्टे स्थितं ततो निस्सृतमिदं सर्वं जगदुद्यतवज्रतुल्यादेतस्माद्यन्महतोभयं तस्माद्धेतोः एजति=कम्पते । तच्छासनातिवृत्तौ प्रत्यवायो भविष्यतीति भयात् स्वस्वकार्येषु प्रवर्तत इत्यर्थः । 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम' इत्यनन्तरमंत्रे अग्न्यादीनामंगुष्ठमात्रनिमित्तभयहेतुकस्वस्वव्यापारप्रवृत्त्युपन्यासादिहापिमंत्रे 'महद्भयं वज्रमुद्यत' मिति प्रथमानां पञ्चम्यर्थतां कम्पत इत्यस्य स्वस्वव्यापारप्रवृत्त्यर्थताञ्चालोच्यैवं व्याख्यातम् । एवंरूपात् कम्पनादपि अंगुष्ठप्रमितः परमात्मा ॥

## ज्योतिर्दर्शनात् ॥ ४१ ॥

तयोरेव अंगुष्ठमात्रविषययोर्मन्त्रयोर्मध्ये 'न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाती' ति परमात्मासाधारणं सर्वतेजसां छादकं तेषां कारणभूतं अनुग्राहकञ्च अंगुष्ठमात्रपुरुषस्य ज्योतिर्दृश्यते । अत्र हि 'तमेव

भान्तमनुभाति सर्व'मिति तद्भानानुभानरूपभानपौर्वापर्योक्त्या सर्वतेजः-कारणत्वमुक्तम् । पूर्वार्धेन सर्वतेजश्छादकत्वमुक्तम् । चतुर्थपादेन सर्वतेजोऽनुग्राहकत्वमुक्तं । इदं परमात्मासाधारणम् । 'तं देवा ज्योतिषां ज्योतिः, यस्यादित्यो भामुपयुज्य भाती' त्यादिश्रुत्यन्तरदर्शनात् आथर्वणस्यैव 'न तत्र सूर्य' इति मन्त्रस्य पाठाच्च । एवम्भूतज्योतिर्दर्शनादपि अंगुष्ठमात्रः पुरुषः परमात्मा ॥

इति प्रमिताधिकरणम् ॥१०॥

---

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥४२॥

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४३ ॥

## पत्यादिशब्देभ्यः ॥ ४४ ॥

पूर्वं दहराकाशस्य परब्रह्मत्वसमर्थनाय अल्पश्रुतिपरिहारे कृते तत्प्रसङ्गादंगुष्ठमात्रस्य परमात्मत्वं साधितम् । तत्प्रसङ्गागतं तु अधिकरणत्रयम् । अथ पूर्वप्रकृतदहरविद्याया बुद्धिस्थत्वेन तदनन्तरश्रुतस्याकाशवाक्यस्य परमात्मपरत्वं निरूप्यत इति सङ्गतिः । छान्दोग्ये दहरविद्यानन्तरं श्रूयते— 'आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मे'ति । तत्र आकाशः 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानी'ति पूर्वमन्त्रप्रकृतो मुक्तात्मा, उत परमात्मेति मुक्तात्मनि नामरूपनिर्वोढृत्वसम्भवासम्भवाभ्यां संशये, पूर्वपक्षः– स मुक्तात्मा । 'ते यदन्तरे'ति नामरूपमध्यस्थितत्वोक्त्या नामरूपास्पृष्टत्ववर्णनात् । 'नामरूपयोर्निर्वहिते'ति तु मुक्तात्मनि पूर्वावस्थाभिप्रायेण उपपद्यते । स हि बद्धावस्थायां नामरूपयोर्नितरां वोढा, देवमनुष्यादिजन्मपर्यायेण बहुविधनामरूपवोढा स्थित इत्येवं प्राप्त उच्यते—

अयमाकाशः परमात्मा । न मुक्तात्मा । मुक्तात्मभेदोपपादकनामरूपनिर्वोढृत्वश्रवणात् । निर्वोढृत्वं हि रूढ्या कर्तृत्वम् । न तु योगेन नितरां वोढृत्वम् । रूढेः प्रबलत्वात् । नामरूपकर्तृत्वं तु जीवस्य न बन्धमुक्त्यवस्थयोस्सम्भवति । जगद्व्यापारनिषेधात् । तत्तु परमात्मन एव धर्मः । 'नामरूपे व्याकरवाणि, तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायत' इत्यादि श्रुतेः । तस्माद्यद्यपि पूर्वमंत्रे अभिसम्भवितृत्वेन मुक्तात्मा प्रकृतः । तथाऽपि अभिसम्भाव्यत्वेन परमात्माऽपि प्रकृत इति तद्विषय एवायमाकाशशब्दः । आकाशशब्देन प्रकृतस्य दहराकाशस्य प्रत्यभिज्ञानादपि तद्विषयोऽयं। न च प्रजापतिवाक्येन व्यवधानात् न तत्प्रत्यभिज्ञानमस्तीति शङ्कनीयम् । तस्याप्युपासकस्वरूपयाथात्म्यकथनद्वारा दहरवाक्यशेषत्वात् । दहरवाक्ये दहराकाशउपास्यतयोपक्रान्त इह प्राप्यतयोपसंह्रियत इति विशेषः । अथ स्यात् जीवात्मनो भिन्नं आत्मान्तरमेव नास्ति । बृहदारण्यके– 'योऽयं विज्ञानमयः प्राणे' ष्विति प्रकृतस्य जीवस्य 'एष ब्रह्मलोकस्सम्राडि' ति निर्दिष्टपरमात्मैक्योपदेशात्, 'नेह नानास्ति किं चने' ति भेदनिषेधाच्च । एवं च नामरूपकर्तृत्वमपि मुक्तात्मनि घटते । तस्यैव परमात्मत्यात् । अतोऽयमाकाशो न मुक्तात्मा, किं तु तद्भिन्नः परमात्मेति निर्णयो न युक्त इति चेत्, मैवं । बृहदारण्यके प्राणेष्विति जीवं प्रकृत्य 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किं च न वेद नान्तर'मिति सुषुप्तौ, 'प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याती'त्युत्क्रान्तौ च, भेदेन व्यपदेशात् 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल' इत्यादिवाक्यश्रुतपरिष्वञ्जकविषयपत्यादिशब्देभ्यश्च जीवभिन्नस्य परमात्मनः प्रत्याख्यानासम्भवात् । ऐक्योपदेशभेदनिषेधौ तु प्रकाश्यैक्यनिबन्धनाविति समनन्तरपादे वक्ष्यते । तस्मादिहाकाशः परमात्मा न मुक्तात्मेति युक्तमत्र ॥

संग्रहकारिका: ॥

मुक्तात्मा प्रकृतस्स्यात् आकाशो नामरूपनिर्वोढा ।
प्राग्बद्धस्तद्वानिति तन्निर्वोढा ततस्तदस्पृष्टः ॥

निर्वोढिष्येत कर्ता यदि भवतु तथा पूर्वमन्त्रोपदिष्टः
प्राप्तव्यब्रह्मलोकोदिततदभिदया यद्विमुक्तोऽपि कर्ता ।
तेनैक्यं ब्रह्मलोकश्रुतिसमधिगतेनैकधैवेति किञ्चि-
न्नानानास्तीति चास्य स्फुटगतिबृहदारण्यके प्रत्यपादि ॥
मैवन्निर्वोढा स्यात् कर्ता योगाद्धि बलवती रूढिः ।
तत्कर्तृताच बद्धे मुक्तेऽपि च नैव सम्भवति ॥
बृहदारण्यकवचसामर्थो न ब्रह्मजीवैक्यं ।
सुप्त्युत्क्रांन्त्योर्भेदश्रवणात्पत्यादिशब्देभ्यः ॥
इति अर्थांतरत्वादिव्यपदेशाधिकरणम् ॥११॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजि-
द्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे
नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे प्रथमस्याध्यायस्य
तृ ती यः पा दः ॥

---

**आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-**
**गृहीतेर्दर्शयति च ॥ १ ॥**
**सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥**
**तदधीनत्वादर्थवत् ॥ ३ ॥**
**ज्ञेयत्वावचनाच्च ॥ ४ ॥**
**वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥**
**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥**
**महद्वच्च ॥ ७ ॥**

इह पादे सांख्यतन्त्रप्रतिपादनच्छायापन्नानां वाक्यानां सांख्याभिमतार्थनिरासेन ब्रह्मणि समन्वयः प्रतिपाद्यत इति पादार्थस्तत्सङ्गतिश्चेत्युभयमपि प्रथमपाद एव दर्शितं । काठके श्रूयते– 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परम्मनः । मनसस्तु परा बुद्धि र्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः ॥ पुरुषान्नपरं किंचित् सा काष्ठा सा परागति' रिति । तत्र किं सांख्यतन्त्रसिद्धं प्रधानमव्यक्तशब्देनोच्यते, उत शरीरमिति सांख्यतत्वप्रक्रियाप्रत्यभिज्ञानशरीरपरिशेषाभ्यां संशये, पूर्वपक्षः- सांख्याभिमतं प्रधानमिदमव्यक्तम् । 'महतः परमव्यक्तमव्यक्तात्पुरुषः पर' इति तत्प्रक्रियाप्रत्यभिज्ञानात्, 'पुरुषान्न परं किंचि' दिति पञ्चविंशपुरुषातिरिक्ततत्वनिषेधाच्च । न तु शरीरमव्यक्तं ! व्यक्ते तस्मिन्नव्यक्तशब्दस्य शक्त्यभावात् । अव्यक्तकार्ये शरीरे तस्य लक्षणोपेयत इति चेन्न । लक्षणातः प्रधाने रूढेर्बलवत्त्वात् । सांख्यकल्पिता सा रूढिः नैयायिककल्पितपक्षसपक्षादिरूढिवदन्यत्रशब्दार्थनिर्णये अनुपयोगिनीति चेन्न । सांख्यतन्त्रसिद्धतत्वानुवादोयमिति तत्प्रक्रियाप्रत्यभिज्ञानात् सिद्धौ तदीयरूढेरेव ग्राह्यत्वात् , 'न पक्षे न सपक्षे वा विपक्षे केवलं स्थितः । चित्रंनिस्त्रिंशधूमस्ते प्रतापाग्न्यनुमापक' इति काव्यश्लोके नैयायिककल्पितरूढेरप्युपयोगदर्शनात् । ननु 'पुरुषान्न परं किंचि' दित्यत्र पुरुषः पंचविंश इति कथमवगम्यते, येनायं पंचविंशातिरिक्तनिषेधस्स्यादिति चेत्, इत्थं । ज्ञानकर्मेन्द्रियाणि दशेंद्रियशब्दगृहीतानि, भूततन्मात्राः दशार्थशब्दोदिताः, मनोऽन्तःकरणं बुद्धिरहङ्कारः महानात्मा महत्तत्त्वमव्यक्तं प्रधानमिति सांख्याभिमतानि चतुर्विंशतिस्तत्वानि प्राङ्निर्दिष्टानि । अतः पुरुषः पंचविंशः । यद्यपि सांख्यानाम्महत्तत्व एव बुद्धिशब्दः, आत्मशब्दश्च चेतने, तथापि प्रत्यभिज्ञापकभूयस्त्वानुसारेण कार्ये कारणोपचारादहङ्कारे बुद्धिशब्दः, महत्तत्वे व्यापकत्वयोगेनात्मशब्दः । 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनी' त्युपरितनमन्त्रे ज्ञानेप्यात्मशब्ददर्शनात् । ननु पूर्वत्र 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिन्तु सारथिं विद्धि मनः

प्रग्रहमेवच ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषुगोचरा ' नित्यात्मशरीरादिषु रथिरथादिरूपेण रूपितेषु इन्द्रियादिपरत्ववाक्ये शरीरव्यतिरिक्तानींद्रियादि-शब्दैर्गृहीतानि, शरीरमेकं स्वशब्देन नगृहीतं, अव्यक्तशब्दश्चाधिकोस्तीति परिशेषादव्यक्तशब्दो लक्षणयापि शरीरार्थको वक्तुं युक्त इति चेत् न । रथि-रथादिरूपेण निरूपितान्येव इन्द्रियादिपरत्ववाक्येप्यन्यूनातिरेकेण ग्राह्या-णीति नियमे कारणाभावात् । तथा नियमे हि न तावद्रूपकवाक्यस्याकांक्षा कारणं । तस्य वाक्यस्येन्द्रियादिभिरसंयतैर्जीवैः पुनःपुनः संसारमेति संय-तैस्तुमुक्तिमिति प्रदर्शनार्थे रथिरथादिरूपेणांगभावमासाद्य निराकांक्षत्वात् । नापीन्द्रियादिपरत्ववाक्यस्याकांक्षा तत्र कारणं । तस्यापि पुरुषपरत्वप्र-तिपादनेऽङ्गभावमासाद्य निराकांक्षत्वात् । अतः परिशेषादव्यक्तशब्दश्शरी-रलक्षक इत्येतदयोगात् सांख्यतन्त्रप्रक्रियाप्रत्यभिज्ञानुसारेण तत्तन्त्रासिद्धप्र-धानार्थक इत्येव युक्तमिति । एवं प्राप्ते राद्धान्तः—

पूर्वत्र रथिरथादिरूपेण रूपितानां मध्ये यच्छरीरं रथरूपकेण वि-न्यस्तं तदात्मनारूपितं तदव्यक्तशब्देन परिशेषात् गृह्यत इति युक्तम् । तत्रह्यात्मा शरीरं बुद्धिर्मन इन्द्रियाणितद्विषया इति षडर्था रथरथिसारथित-दृह्यमाणतुरगरज्जुतुरगतन्मार्गात्मना यद्रूपिताः तन्मुक्त्यर्थोपासनोपकरणत्वा-द्वशीकार्यत्वायेति तावन्निर्विवादं । 'यस्त्वविज्ञानवान्भवति अयुक्तेन मन-सा सह । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । यस्तु विज्ञानवा-न्भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथे' रिति तत्रैव श्रवणात् । तत्र च वशीकार्यतायां प्राधान्याप्राधान्यविवेचन-मपेक्षितं यत् प्रधानं तद्वशीकरणे यत्नातिशयसिद्धये । इन्द्रियादिपरत्ववा-क्यमपि वशीकार्यतायां प्राधान्याप्राधान्यरूपं परापरभावं विना विषयान्त-रन्नलभते । न हि 'दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिका-स्तु शतं पूर्णं सहस्रन्त्वाभिमानिकाः ॥ बौद्धा दशसहस्राणि तिष्ठन्ति विग-तज्वराः । पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥ पुरुषन्निर्गुणं प्राप्य कालसंख्या न विद्यत' इति सांख्यकल्पिततत्तदुपासनाफलभूयस्त्वाल्पत्व-

रूपः परापरभाव इति वक्तुं शक्यम् । तत्र मनसः इन्द्रियेभ्यः पृथक्परिगणनाभावेन भूततन्मात्रापेक्षया निकर्षापत्त्या तद्विषयत्वे 'अर्थेभ्यश्चपरम्मन' इति मनइन्द्रियस्य अर्थशब्दोक्तभूतपरत्वोक्त्यनुपपत्तेः । नापि हेतुहेतुमद्भावरूप इति वक्तुं शक्यम् । सांख्यमते इन्द्रियाणामाहङ्कारिकत्वेन 'इन्द्रियेभ्यः पराह्यर्था' इति भूततन्मात्राणामिंद्रियपरत्वोक्त्यनुपपत्तेः, तेषां भौतिकत्वाभ्युपगमे 'अर्थेभ्यश्च परं मन' इति मनइंद्रियस्य भूतपरत्वोक्त्यनुपपत्तेः । तस्मात् इंद्रियेभ्यः तद्विषयाः वशीकार्यत्वे पराः । वश्येंद्रियस्यापि विषयसन्निधाविंद्रियविजृम्भणात् । तेभ्योऽपि मनः परं । मनसि विषयध्यानप्रवृत्ते विषयासन्निधाने रागविजृम्भणात् । तस्मादपि बुद्धिः परा । अध्यवसायाभावे मनसोऽकिंचित्करत्वात् । ततोऽप्यात्मा परः । सर्वस्या अपि विषयवृत्तेः आत्मेच्छायत्तत्वात् । तत एवात्मा अणुरपि महानिति विशेष्यते । तस्मादपि शरीरं परं । तदायत्तत्वात् सर्वासामपि पुरुषप्रवृत्तीनां । तस्मादपि परस्सर्वान्तर्यामी सर्वप्रेरकः परिपूर्णः पुरुषोत्तम इति इन्द्रियादयो वशीकार्यतायामुत्तरोत्तरं परा उच्यन्त इति तदर्थो वाच्यः । सर्वान्तर्यामिणो भगवतो वशीकरणं तच्छरणागतिरेव । 'तमेव शरणं गच्छे' त्यादिवचनात् । तदिदमिंद्रियादिपरमपुरुषान्तानां वशीकार्यतायामुत्तरोत्तरपरत्वमग्रे श्रुतिरेव दर्शयति– 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्तआत्मनी'ति । अस्य हि मन्त्रस्यायमर्थः । वागुपलक्षितं सर्वं ज्ञानकर्मेंद्रियजातं मनसि नियच्छेत् । बाह्येंद्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत् । विषयविकल्पाभिमुखं तन्मनः आत्मनि स्थितायां बुद्धौ विषयदोषाध्यवसायरूपायां नियच्छेत् । तां बुद्धिं महति प्रत्यगात्मनि नियच्छेत् । तदुपादेयताविषयां तत्प्रवणां कुर्यात् । तञ्च प्रत्यगात्मानं निरुपप्लवे परमात्मनि नियच्छेत् । तच्छेषताप्रतिपत्तिं कुर्यादिति । तस्मात्सूक्ष्ममव्याकृतमव्यक्तशब्दार्हमिति तदवस्थांतररूपं शरीरमुपचारादव्यक्तमित्युक्तम् । यदि सूक्ष्ममव्याकृतमभ्युपगम्यते तर्हि तदेव सांख्यमतमापन्नमिति कथं तन्निरसनम् । स्वतन्त्रमेवाव्याकृतं

कार्याणि साधयतीति सांख्यमतन्निरसनीयम् । परमपुरुषाधीनत्वात् तेन प्रेर्यमाणमेवाव्याकृतम्महदादिकार्यजातं साधयतीति त्वस्माकमभ्युपगम इति विशेषः । किञ्च– यदि सांख्याभिमतमव्यक्तमिहश्रुतिरवक्ष्यत्, तदातस्य-तत्कार्यस्य व्यक्तजातस्यच ज्ञेयत्वमप्यवक्ष्यत् । 'व्यक्ताव्यक्तज्ञविज्ञानान्मोक्ष' इति हि सांख्यानामुद्घोषः । ननु 'अशब्दमस्पर्शमरूपमव्ययन्तथाऽरसन्नित्यमगन्धवच्च यत् । अनाद्यनन्तम्महतःपरं ध्रुवं निचाय्य तन्मृत्युमुखात् प्रमुच्यत' इत्यनन्तरमेव सा श्रुतिरव्याकृतं वदति । व्यक्तधर्मभूतशब्दादिनिषेधानामव्यक्तपर्यवसानस्य न्याय्यत्वात् महतः परत्वोक्तेश्च यत्तदिति सामान्यतोऽपि निर्देशस्याव्याकृतपरत्वौचित्यादितिचेन्नैवम् । 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पद'मिति परमपुरुषप्रकरणात् । स एव ह्यन्यत्र निचाय्यत्वेन प्रतिपाद्यते । अत एव 'पुरुषान्नपरं किंचि'दिति पञ्चविंशपुरुषातिरिक्ततत्वनिषेध इति शङ्का निरस्ता । प्रकरणेन तत्र पुरुषशब्दस्य परमपुरुषपरत्वात् । 'अशब्दमस्पर्श'मित्यादि तु 'यत्तदद्रेश्यमग्राह्य'मित्यादिवत् तस्मिन्नप्युपपद्यते । 'महतः पर'मिति 'बुद्धेरात्मा महान्पर' इति प्रस्तुतात् जीवात् परत्वमुक्तम् । अपिचास्मिन्प्रकरणे प्राप्यस्य परमपुरुषस्य प्राप्त्युपायस्योपासनस्य प्राप्तुरुपासकस्यचेति त्रयाणामेव ज्ञेयत्वेनोपन्यासः प्रश्नश्च दृश्यते । तत्र 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती'ति । अत्र 'देवं मत्वा धीर' इति क्रमेण उपास्योपासनोपासकानामुपन्यासः, 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीय' इति मोक्षरूपप्रश्नद्वारा उपायोपेयोपेतॄणां त्रयाणामपि प्रश्नः । प्रेतः प्रकर्षेणेतः अपुनरावृत्तिं मुक्तिं प्राप्तः । आत्मोच्छित्तिर्मुक्तिरिति शून्यवादिनां विमतिः 'नायमस्तीति चैक' इत्युपन्यस्ता । नत्वत्र प्रेतशब्दो मृतवचनः । मृतास्तित्वस्य वैवस्वतं लोकं प्राप्य तं पृच्छता 'न साम्परायः प्रतिभाति बालं प्रमाद्यंतं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनःपुनर्व-

शमापद्यते म' इत्यादिवैवस्वतवचनं श्रुतवता च नचिकेतसा निर्ज्ञातत्वेन मृते देहातिरिक्ते नास्तित्वविमत्युपन्यासायोगात् । तस्मात्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्चेति नेह तांत्रिकस्याव्यक्तस्यानुवादप्रसक्तिरस्ति । अपि च 'बुद्धेरात्मा महान्पर'इत्यत्र महत्तत्वन्नग्राह्यं, चेतनरूढात्मशब्दसामानाधिकरण्यात् । 'तद्यच्छेज्ज्ञान आत्मनी' त्यत्र सप्तम्यौ तु वैयधिकरण्येन प्राग्व्याख्यातौ । अतोऽपि जीवात्मपरत्वेनोच्यमानमव्यक्तं न सांख्यतन्त्रसिद्धं प्रधानमिति युक्तम् । महत्तत्वपरत्वानभिधानात् ॥

संग्रहकारिके ॥

महतः परमव्यक्तं पठितं यद्धि काठके ।
प्रधानं कपिलोक्तं तत्तन्त्रप्रत्यभिज्ञया ॥
मैवं तत्स्याच्छरीरं रथिरथतुरगाद्यात्मना रूपितानामात्मादीनां मुमुक्षोर्नियतमिह वशीकार्यताज्ञापनार्थम् ।
एतस्यां तारतम्यस्फुटसमधिगमायेन्द्रियेभ्यः पराङ्त्यारभ्याम्नातमन्त्रे न्यसनमभिलपत्यस्वशब्दं शरीरम् ॥

इति आनुमानिकाधिकरणम् ॥१॥

---

## चमसवदविशेषात् ॥ ८ ॥
## ज्योतिरुपक्रमातु तथाह्यधीयत एके ॥ ९ ॥
## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१०॥

पूर्वत्र रूपकवाक्ये शरीरश्रवणादव्यक्तं शरीरं न तंत्रसिद्धा प्रकृतिरित्युक्तम् । तर्हि तदश्रवणादजा तंत्रसिद्धा प्रकृतिस्स्यादिति प्रत्यवस्थानात्सङ्गतिः । श्वेताश्वरोपनिषदि पठ्यते– 'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' इति । अत्र किमजाशब्देन तन्त्रसिद्धा स्वतन्त्रा प्रकृतिरुच्यते, उत सिद्धान्ताभिमता ब्रह्माधीना प्रकृतिरिति संशये पूर्वपक्षः ।

तन्त्रसिद्धैवोच्यते । 'अजा'मिति जन्मराहित्यश्रवणात् , 'सृजमाना'मिति स्वातंत्र्यश्रवणाच्च । न तु ब्रह्मात्मिका । तस्यास्सिद्धान्ते ब्रह्मकारणकत्वाभ्युपगमेन जन्मराहित्याभावात्, सृष्टौ ब्रह्मप्रेर्यत्वाभ्युपगमेन स्वातन्त्र्याभावाच्चेति । सिद्धान्तस्तु —

ब्रह्मकारणिकाया अपि जन्मराहित्यमुपपादयिष्यते । तथा । अजाशब्दयौगिकार्थस्य जन्मराहित्यस्य साधारणत्वात् न तेन तन्त्रसिद्धेति विशेषः प्रतीयते । यथा 'अर्वाग्बिलश्चमसऊर्ध्वबुध्नस्तस्मिन् यशोनिहितं विश्वरूपम् । तस्यासत ऋषयस्ससप्ततीर' इत्यस्मिन् मंत्रे यौगिकेन चमसशब्देन चम्यते भक्ष्यते अनेनेति व्युत्पत्तिमता भक्षणसाधनमात्रं प्रतीयते। न कश्चिद्विशेषः, यौगिकशब्दानामर्थप्रकरणवाक्यशेषादिभिर्विनाऽर्थनिश्चयासम्भवात् । तत्र 'यथेदं तच्छिर एषह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न' इति वाक्यशेषः शिरोऽत्र चमस इति निश्चायकोऽस्ति । तस्मिन्निहितं यशः प्राणवायुः तस्य तीरस्थास्सप्त ऋषयश्श्रोत्रचक्षुर्घ्राणयुगळरसनानीति निश्चायको वाक्यशेषोऽस्ति । नैवमिहाजा तंत्रसिद्धा प्रकृतिरित्यत्र किञ्चिन्निश्चायकमस्ति । सृष्टिस्वातंत्र्यं तु स्वव्यापारकर्तृत्वरूपं परप्रेर्यत्वेऽप्युपपद्यते । सारथिना प्रेर्यस्यापि रथस्य 'रथो गच्छती'ति स्वातंत्र्यव्यवहारात् । तस्मादिह तन्त्रसिद्धा अजा न ग्राह्या । किं तु ब्रह्मात्मिकैव ग्राह्या । ब्रह्मकारणकत्वाम्नानात् । तैत्तिरीया हि 'अणोरणीयान्महतो महीया'निति मंत्रेण ब्रह्मोपक्रम्य 'सप्त प्राणाः प्रभवंति तस्मा'दित्यादिना 'यस्माज्जाता न परा नैव किं च नास'त्यंतेन प्राणसमुद्रपर्वतादिकस्य सर्वस्य प्रपञ्चस्य ब्रह्मणस्सकाशात्प्रभवमधीयानास्तेषां मंत्राणां मध्य एव 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य' इति पठन्ति । अतोऽत्र ब्रह्मकार्यवर्गमध्ये पाठादजाऽपि ब्रह्मकारणिका विवक्षितेत्यवसीयते । ननु अयमजामन्त्रस्तद्भोगत्यागरूपबन्धमुक्तजीववृत्तांतविषयः, कथमिह 'अजा' मिति द्वितीयान्तेन 'सप्त प्राणाः प्रभवंती'त्यनुवृत्तक्रियान्वयः । अतो नास्याः

प्राणादिवत् ब्रह्मकारणकत्वं प्रतीयतइतिचेत् उच्यते– यथा 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छ' दितिवाक्यमिंद्रवृत्तांतमात्रविषयतया प्रतीयमानमपि दर्शपूर्णमासप्रकरणानुरोधादिंद्रेण अग्नीषोमाभ्यां दत्ततयोच्यमानस्य पुरोडाशद्रव्यकस्य यागस्य विधायकं, तथा वृत्तान्तमात्रविषयतया प्रतीयमानोऽपि अयं मंत्रस्सकलकार्यजनयित्र्याः प्रकृतेः परमेश्वरसृज्यत्वप्रतिपादक इति पूर्वापरपरामर्शादङ्गीकर्तव्यम्। ननु कथं प्रकृतेः परमेश्वरकारणकत्वं जन्मराहित्यञ्च। स्थूलसूक्ष्मभेदान्नैतद्विरुद्धम्। यथा मधुविद्यायामादित्यस्य वस्वादिदेवताभोग्यरसाश्रयत्वोदयास्तमयादिमत्त्वं, 'अथ ततऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकलएव मध्ये स्थाते' त्युक्तम् सर्वविशेषप्रहाणेनैकतयाऽवस्थानञ्च कार्यकारणावस्थाभेदरूपस्थूलसूक्ष्मावस्थाभेदेन न विरुद्धम्। 'एकल' इति लकारोपजनश्छान्दसः। एकएवेत्यर्थः। तस्मात् ब्रह्माधीनैवेयमजा तंत्रसिद्धेति सिद्धम्॥

संग्रहकारिके॥

स्वातंत्र्यजनिराहित्ये सृजमानामजामिति।<br>
यस्याश्श्रुते सा प्रकृतिस्सांख्योक्ता न परात्मिका॥<br>
मैवं ब्रह्मात्मिकायामपि यदजनिता कारणावस्थया स्यात्<br>
स्वव्यापाराश्रयत्वं रथवदिह परप्रेर्यतायामपि स्यात्।<br>
तस्मान्नायं विशेषोऽस्त्यपितु परसृजिप्रक्रियास्तेविशेष-<br>
स्तत्सृज्यायान्ततस्स्यादतिविशदमजामन्त्रतात्पर्यगस्याः॥

इति चमसाधिकरणम्॥२॥

---

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च॥११॥**

**प्राणादयो वाक्यशेषात्॥ १२॥**

**ज्योतिषैकेषामसत्यन्ने॥ १३॥**

अजाशब्दस्य स्वतन्त्रप्रकृतिपरत्वे विशेषकस्याभावात् वाक्यान्तरानुरोधेन ब्रह्मात्मकत्वं साधितम्। तदत्रनप्रसरति। ब्रह्मसत्वे संख्याधिक्यात्, तेन विनैव संख्यापूरणेन अब्रह्मात्मिका प्रकृतिरिति निश्चयसंभवादिति शङ्कया सङ्गतिः। वाजसनेयिनस्समामनंति। 'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेव मन्यआत्मानं विद्वान् ब्रह्मामृतोऽमृत'मिति। अयम्मन्त्रः सांख्यतन्त्रसिद्धतत्वपरः उत वाक्यशेषाम्नातप्राणादिपर इति पंचविंशतिसंख्यातत्वाधिक्यप्रतीतिभ्यांसंशये पूर्वपक्षः। सांख्यतत्वपरः। पंचविंशतिसंख्याप्रतीतेः। तत्प्रतीतिश्च पंचशब्दविशेषितात्पञ्चशब्दात्। पंचजनाइति हि न मनुष्यादिवाचीशब्दः। प्रथमपंचशब्दसमभिव्याहारेण द्वितीयपंचशब्दस्यापि संख्यापरत्वावसायात्। ततश्च पञ्चानां जनानां समूहाइति समाहारविषयोयं समासः। तथा निश्चये च पंचपूल्यइतिवदीकाराभावो लिङ्गव्यत्ययश्च छान्दसस्समर्थनीयः। तद्धितार्थोत्तरपदयोरभावेन समासस्य समाहारविषयत्वावश्यंभावात्। ते समूहाः कतीत्याकांक्षायां पुनः पञ्चसंख्यया विशेष्यन्ते 'पञ्च पञ्च पूल्य' इतिवत्। ननु समासमभ्युपगम्य छान्दसत्वेन रूपसमर्थनं किमर्थं, असमासेऽपि पञ्चशब्दद्वयेन पञ्चविंशतिसंख्यालाभोपपत्तेः। एवं संवर्धनेन संख्याविशेषलाभोऽप्यन्यत्र संप्रतिपन्न एव। यथा 'पञ्चपञ्चाशतस्त्रिवृतस्संवत्सरा' इत्यत्र पञ्चगुणितपंचाशत्संख्यया पंचाशदुत्तरद्विशतसंख्यालाभः। यथावा 'वयसो वयसस्सप्त दशसप्तदशानि ददाती'त्यत्र सप्तदशगुणितसप्तदशसंख्यया एकोननवत्युत्तरद्विशतसंख्यालाभः। यथावा 'पंचभिर्धाता विदधाविदं यत्तासां स्वसृरजनयत् पंच पंच तासामुयंति प्रयवेण पंच नानारूपाणि क्रतवो वसानाः त्रिंशत्स्वसार उपयंति निष्कृत' मित्यत्र पंचगुणितपंचसंख्यया पंचविंशतिसंख्यालाभ इति चेत् मैवं। पंचजनशब्दस्य समासपदत्वेन तन्न्यायानवतारात्। समासपदत्वंच शतपथब्राह्मणपठितस्यास्य मन्त्रस्य अन्तानुदात्तस्वरेण निश्चीयते। अस्यान्तानुदात्तस्वरस्य शतपथब्राह्मणस्वरविधायकभाषिकाख्यग्रन्थविहितब्राह्मणपठितमन्त्रत्वनिमित्तोदात्तादेशरूपत्वात्।

अतस्तस्य 'स्थानिना समासस्ये' ति व्याकरणविहितेन अन्तोदात्तस्वरेण 'पंचानांत्वा पंचजनाना' मिति मन्त्रान्तरे समासदर्शनेन च अत्रापि समासेन भाव्यमिति । तस्मात्समाहारसमासोऽयं, छान्दसत्वेन रूपसिद्धिरित्येव युक्तम् । न च तत्वाधिक्यप्रसङ्गः । चतुर्विंशतेस्तत्वानां आत्मनि प्रतिष्ठितत्ववचनं तद्दृष्टायत्तत्वात् भाक्तं, आत्मनस्तद्वचनं स्वमहिमप्रतिष्ठितत्ववचनवत् भाक्तमित्युपपत्तेः । सांख्यतत्वापरिग्रहे श्रुतपंचविंशतिसंख्यान्वयानिर्वाहादिति । एवंप्राप्ते सिद्धान्तः ॥

पंचविंशतिसंख्योपसंग्रहादपि न सांख्यतत्वप्रतीतिः । तेभ्यः पृथग्भावात् । तद्वैलक्षण्यात् । 'यस्मिन् पंच पंचजना' इति तेषां यच्छब्दनिर्दिष्टब्रह्मात्मकताप्रतीतेः, आत्माकाशाभ्यां संख्यातिरेकाच्च । न च पंचविंशतिसंख्यान्वयानुरोधेन पूर्वपक्षावसानोक्ता क्लिष्टगतिः कल्पनीया । कठवल्लीषु 'इन्द्रियेभ्यः पराह्यर्था' इत्यादिना पुरुषावरत्वेन वर्णितानां ज्ञानेन्द्रियकर्मेंद्रियभूततन्मात्रा मनोबुद्धिभोक्तृस्थूलसूक्ष्मशरीराणां 'तच्चाकाशं सनातन' मित्यादिष्वाकाशशब्देन प्रसिद्धस्य अप्राकृतभगवल्लोकस्य च ग्रहणसम्भवात् कठवल्लीषु अव्यक्तशब्दस्य स्थूलसूक्ष्मशरीरद्वयपरत्वोपपत्तेः । एवमक्लेशेन अन्तरङ्गशाखान्तरदृष्टसंख्येयोपसंग्रहसंभवे क्लिष्टगत्या बहिरङ्गाप्रामाणिकसांख्यतत्वोपसंग्रहायोगात् । वस्तुतोऽत्र पंचविंशतिसंख्याप्रतीतिरेव नास्ति । समाहारसमासे स्त्रीप्रत्ययाभावपुल्लिंगयोः छान्दसत्वेन समर्थनीयत्वात्, पंचजनशब्दस्य संज्ञाशब्दत्वमभ्युपगम्य 'दिक्संख्ये संज्ञाया' मिति सूत्रविहितसंज्ञासमासवर्णनोपपत्तेः । ननु तर्हि पंचजनसंज्ञकाः केचिदिह वर्णनीया इति चेत् सत्यम् । सन्त्येव वाक्यशेषश्रुताः प्राणादयः 'प्राणस्य प्राणमुत चक्षुषश्चक्षुश्श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनोविदु' रिति वाक्यशेषे हि षष्ठ्यन्तैः प्राणादिशब्दैः प्रसिद्धाः प्राणादयः श्रूयन्ते । ननु शतपथब्राह्मणे माध्यन्दिनानामेवान्नपाठः । न काण्वानाम् । अतस्तेषां प्राणादयः पंचपंचजना नस्युरिति चेत् उच्यते– 'यस्मिन्पंचपंचजना' इत्यस्मात् पूर्वस्मिन्मंत्रे 'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत' मिति

ज्योतिषां ज्योतिष्ट्वेन ब्रह्मण्यभिधीयमाने ब्रह्माधीनस्वकार्याणां केषांचिज्ज्योतिषां प्रतिपादकेन षष्ठ्यन्तज्योतिश्शब्देन प्रकाशकानि ज्ञानेन्द्रियाणि गृह्यन्त इति इन्द्रियविशेषाणां समर्पकेण 'प्राणस्य प्राण' मित्यादिवाक्यशेषेणावधार्यते । तत्र 'प्राणस्ये' ति शब्देन वायुसम्बन्धिनस्स्पर्शेन्द्रियस्य ग्रहणम् । मुख्यप्राणस्य ज्योतिश्शब्देन षष्ठ्यन्तेन प्रदर्शनायोगात् । 'चक्षुष' इति 'श्रोत्रस्ये' ति चक्षुश्श्रोत्रेन्द्रिययोर्ग्रहणम् । 'अन्नस्ये'त्यन्नशब्दोदितपृथिवीसम्बन्धिघ्राणेन्द्रियग्रहणम् । तेनैव अद्यतेऽनेनान्नमिति व्युत्पत्त्या तंत्रेण रसनेन्द्रियस्यापि ग्रहणम् । 'मनस'इति मन इन्द्रियस्य । एवं गृहीतानां सर्वेषामिन्द्रियाणां ग्रहणसिध्यर्थं कण्वशाखायामप्युपसंहर्तव्यम् । षष्ठ्यन्तज्योतिःपदोदितेन्द्रियोपक्रमस्य वाक्यशेषगतेंद्रियविशेषोपन्यासस्य च तत्रापि तुल्यत्वात् तदेवं 'यस्मिन् पंच पंचजना आकाशश्च प्रतिष्ठित' इति पंचजनशब्दनिर्दिष्टानि इन्द्रियाणि आकाशशब्दोपलक्षितानि भूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्वानां ब्रह्माश्रयत्वप्रतिपादनात् नतन्त्रसिद्धब्रह्मानधीनपंचविंशतितत्वानुवादशङ्कावकाशइति स्थितम् ॥

संग्रहकारिकाः ॥

यस्मिन्पञ्चेति मनौ पंचोक्ताःपंचजनसमाहाराः ।
तत्वानि पंचविंशतिरेते कपिलेन कथितानि ॥
मैवं ब्रह्माश्रयताभेदान्नहिधीस्तदुक्ततत्वानां ।
अधिकरणाऽऽकाशाभ्यां तदुक्तसंख्यातिरेकाच्च ॥
पंचजनाइति संज्ञापदेन पंचेंद्रियाणि कथ्यन्ते ।
दृष्टानि यानि शेषे ब्रह्माधीनस्वकार्याणि ॥
संग्राह्यं काण्वैरप्यन्नपदं घ्राणरसनपरं ।
ज्योतिःपदोदितेन्द्रियसमुपक्रमवाक्यशेषगतितौल्यात् ॥

इति संख्योपसंग्रहाधिकरणम् ॥३॥

---

**कारणत्वेनचाकाशादिषु यथाव्यपदिष्टोक्तेः ॥१४॥**

## समाकर्षात् ॥ १५ ॥

माभूवन् पंचपंचजनास्सांख्यतत्वानि, तथापि ब्रह्मकारणमिति सिद्धांत्यभिमतं न सिध्यति। कारणवाक्यानां परस्परविरोधेन क्वचिदपि प्रतिष्ठितत्वाभावात्, तानि विहाय स्मृत्यनुसारेण प्रधानस्यैव कारणतया वक्तव्यत्वादिति प्रत्यवस्थानात्सङ्गतिः। कारणवाक्यैः ब्रह्म कारणमिति निश्चेतुं शक्यं, उत परस्परविरोधेन तैः किमपि निश्चेतुं नशक्यमिति, तान्यनपेक्ष्य कपिलादिस्मृतिभिः प्रधानं कारणमिति निश्चेयमिति संशये पूर्वपक्षः– छांदोग्ये 'सदेवसोम्येदमग्रआसीदेकमेवाद्वितीय'मिति सत्पूर्विकासृष्टिराम्नाता। तत्रैव 'तद्धैक आहुरसदेवेदमग्रआसीत् एकमेवाद्वितीय'मित्यसत्कारणवादमुपाक्षिप्य 'कुतस्तुखलु सोम्यैवंस्यात् कथमसतस्सज्जायेते'ति असत्कारणवादं निराकृत्य 'सदेवसोम्येदमग्र आसी'दिति सत्पूर्विका सृष्टिः स्थिरीकृता। तैत्तिरीयकेतु छान्दोग्ये निराकृतमसत्कारणवादं परिगृह्य असत्पूर्विका सृष्टिराम्नाता। 'असद्वा इदमग्रआसीत् ततो वै सदजायत' इति। बृहदारण्यकेऽपि तथैवाम्नायते– 'सदेवेदमग्रआसीत् तत्सदासीत् तत्समभव'दिति। तत्रैव अव्याकृतपूर्विकाऽपि सृष्टिराम्नायते– 'तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यां व्याक्रियते'ति। अव्याकृतं ह्यव्यक्तं प्रधानमेव। एवं कारणवाक्यानां परस्परविरोधेन ब्रह्म वा स्वतन्त्रं प्रधानंवैकं कारणमिति निर्णयालाभेसति आप्ततमकपिलादिप्रणीतस्मृतिभिः प्रधानं कारणमिति निश्चेयं, तत्रैव सर्वाणि कारणवाक्यानि योजनीयानि, ईक्षणादयोऽपि गौणायोजनीयाइति। एवंप्राप्ते सिद्धांतः—

ब्रह्मणएव जगदुत्पद्यत इति निश्चेतुं शक्यते। जन्मादिसूत्रे सर्वज्ञत्वसत्यसङ्कल्पत्वादिविशिष्टं ब्रह्मयथाव्यपदिष्टंतथाभूतस्यतस्यैकस्यैव 'तस्माद्वाएतस्मादात्मनआकाशस्संभूतः, तत्तेजोऽसृजते'त्यादिश्रुतिभिराकाशादिषु कारणत्वेन प्रतिपादनात्। नन्वस्तु तथाप्रतिपादनं, तथाऽप्युदाहृतकारणवाक्यजातविगानं कथं समाधेयं। उच्यते— आनन्दवल्ल्यां 'सोऽकामयत बहुस्यां प्रजायेये'ति पदेन पूर्वप्रकृतमानंदमयं परामृश्य तस्य जगत्सृष्टिसङ्कल्पमु-

क्त्वा 'इदं सर्वमसृजत यदिदं किंचे' त्यादिना तस्य सर्वस्रष्टृत्वसर्वानुप्रवेशसर्वात्मभावानभिधाय 'तदप्येष श्लोकोभवती' त्युक्ते सर्वस्मिन्नर्थे साक्षित्वेन 'असद्वा इदमग्र आसी' दिति श्लोक उदाहृतः। तस्मादानन्दमयसमाकर्षात् असच्छब्दस्तस्मिन्नेवानभिव्यक्तनामरूपताभिप्रायो वक्तव्यः। 'असदेवेदमग्र आसी' दित्यत्राप्ययमेव निर्वाहः। असच्छब्दोक्तस्य 'तत्सदासी' दिति सत्पदेन समाकर्षात्, अत्यन्तासतश्च 'नासतोदृष्टत्वा' दिति न्यायेन सद्रूपतापत्त्ययोगात्। 'तद्धेदं तर्ह्यव्याकृतमासी' दित्यत्राप्यव्याकृतपदं अव्याकृतशरीरकपरमपुरुषपरं। 'सएष इह प्रविष्ट आनखाग्रेभ्यः पश्यंश्चक्षुश्शृण्वन् श्रोत्रं मन्वानोमन' इत्यनन्तरवाक्ये 'सएष' इत्यनेन प्रकृतमव्याकृतं समाकृष्य तस्य अन्तःप्रविष्टसर्वांतर्यामिपुरुषत्वाभिधानात्। 'तन्नामरूपाभ्यां व्याक्रियते' ति कर्मकर्तरिलकारः। तदव्याकृतशरीरमविभक्तनामरूपं ब्रह्म स्वयमेव स्वात्मानं विभक्तनामरूपमकरोदित्यर्थः। 'तदात्मानं स्वयमकुरुते' ति श्रुत्यन्तरैकार्थ्यात्। एवं कारणवाक्यानां ब्रह्मपरत्वे सति ईक्षणब्रह्मात्मश्रुतयोऽप्यनुगृहीता भवंति। तस्माद्ब्रह्मैककारणकं जगदिति सिद्धम्॥

संग्रहकारिके॥

कारणवाक्यविगानादासतमोक्तं प्रधानमेव भवेत्।
कारणमशेषजगतः कारणवाक्यानि तत्र नेयानि॥
मैवं सर्वत्रापि ब्रह्मसमाकर्षसत्त्वेन।
तेषां नास्ति विगानं तस्माद्ब्रह्मैव कारणं जगतः॥

इति कारणत्वाधिकरणम् ॥४॥

---

**जगद्वाचित्वात् ॥ १६ ॥**

**जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥ १७ ॥**

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेके ॥**

अत्रेयं विषयशुद्धिः– अजातशत्रुर्नाम काशीराजः स्वसमीपमागत्य 'ब्रह्म ते ब्रुवाणी'त्युक्तवन्तं बालाकिं गार्ग्यं 'सहस्रं दद्म एतस्यां वाचि जनको जनक इति वै जना धावन्ती'ति प्रशस्य बालाकिना 'य एवैष आदित्ये पुरुषस्तमेवाहमुपास' इत्यादिभिर्वाक्यैर्ब्रह्मत्वेनोपदिष्टानादित्यचन्द्रविद्युत्स्तनयित्न्वादिगतान् पुरुषानब्रह्मत्वेन तत्तत्पुरुषोक्त्यनन्तरमेव प्रत्याख्याय ततस्तूष्णींभूते तस्मिन् किमेतावदेव परिज्ञानमिति पृष्ट्वा तेनैतावदेवेत्यभिमते 'मृषा वै किल मासमवादिष्ठाः ब्रह्म ते ब्रवाणी'त्युक्त्या तमपोद्य 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्य' इति स्वयमुपदिदेश । अत्र यो वेदितव्य उपदिष्टः पुरुषः स किं सांख्यतन्त्रसिद्धः पुरुषः उत पुरुषोत्तम इति संशये पूर्वपक्षः । तन्त्रसिद्धः पुरुष एवायम् । 'यस्य वै तत्कर्मे'ति पुण्यपापसम्बन्धश्रवणात् । न च तस्य 'एतेषां पुरुषाणां कर्ते'ति श्रुतादित्यादिपुरुषकर्तृत्वासम्भवः । आलोकदानादिना तद्भोगोपयोगिनां तेषां तददृष्टजन्यत्वेन अदृष्टद्वारा तस्य तत्कर्तृत्वात् । 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते- यथा वा स्वाश्श्रेष्ठिनं भुञ्जन्ति एवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मानः एतमात्मानं भुञ्जन्ती'ति वाक्यशेषे यथा प्रधानपुरुषः स्वकीयैर्भृत्यादिभिर्भोगसाधनान्युपहरद्भिर्भोगान्भुङ्क्ते यथा च ते भोगसाधनान्युपहरन्तः प्रधानपुरुषं पालयन्ति तथा वेदितव्यत्वेनोपादिष्ट आत्मा प्रकृतैरादित्यादिपुरुषैर्भुङ्क्ते ते च तं पालयन्तीत्युक्तत्वाच्च । ननु तथाऽपि पुण्यपापवान् पुरुषो वेदितव्यः परिग्राह्य इत्यत्र किन्नियामकम् । कर्मशब्दस्य पुण्यपापरूढिवत् क्रियत इति व्युत्पत्त्या कार्यमात्रयोगस्यापि सत्त्वेन परमपुरुषपक्षेऽपि 'यस्य वैतत्कर्मे'त्येतदुपपन्नम् । रूढिप्राबल्यावलम्बने चलनेऽपि रूढेस्सत्त्वेनान्यतरपरिग्रहे विनिगमनाविरहात् रूढ्योः परस्परं कलहायमानयोर्लब्धोन्मेषो योग एवेह प्रबल इति वक्तुं शक्यत्वादिति चेन्न । आदित्यादिपुरुषकर्तृत्वमपूर्वद्वारकं विवक्षितमित्येतदर्थसमर्पणार्थतया कर्मशब्दस्यापूर्वरूढेरिहोपयुक्तत्वेन रूढ्यन्तराद्योगाच्च तस्याः प्रबलत्वात् चलनरूढेः परमपुरुषपक्षे विभौ तस्मिन्ननन्वयेन सांख्यपुरुषपक्षेऽपि विभुत्वेन

तेरभ्युपगते तस्मिन्ननन्वयेन जीवाणुत्वपक्षेऽपि चलनोक्तेः प्रयोजनाभावेन रूढ्यन्तरोन्मेषशङ्कानवकाशाच्च । तस्मादुक्तव्यतयोपक्रान्तं ब्रह्म तन्त्रसिद्धः पुरुष एवेति न तद्व्यतिरिक्तेश्वरसिद्धिः । एवञ्च यद्यपि पूर्वाधिकरणेषु सकलवेदान्तप्रसिद्धब्रह्माधिष्ठानेन प्रधानस्य जगत्परिणामित्वमुक्तं, तथाऽपि तथाभूतं ब्रह्म सांख्यपुरुष एवेतीह ब्रह्मनिरूपणोपक्रमसांख्यपुरुषनिरूपणाभ्यामवगमात् तस्मिन्नेव सर्वेषां वेदान्तानां पर्यवसानमभ्युपेयमिति सर्वपूर्वाधिकरणाक्षेपेणायं पूर्वपक्षः । तत एवास्य पूर्वाधिकरणसङ्गतिश्च । एवं प्राप्ते सिद्धान्तः —

'यस्य वैतत्कर्मे'त्यत्र एतच्छब्दस्तावत् प्रत्यक्षादिसन्निधापितसकलजगद्वाची । प्रकरणोपपदादिसङ्कोचकाभावात् । अतस्तत्समानाधिकरणः कर्मशब्दोऽपि कार्यत्वयोगेन सकलजगद्वाचीत्यभ्युपेयं । सकलजगद्वाच्येतच्छब्दसामानाधिकरण्येन दुर्बलस्यापि योगस्योन्मेषात् । पूर्ववाक्योक्तमादित्यादिपुरुषकर्तृत्वं प्रति द्वारतया निर्वाहकत्वेन अपूर्वं बुद्धिस्थमितिचेत् न । जगदेकदेशभूतादित्यादिकीर्तनेन तदेकदेशि जगत् बुद्धिस्थमित्यपि वक्तुं शक्यत्वात् । उभयोर्बुद्धिस्थत्वसंभवे च एतत्पदसामानाधिकरण्येन जगद्वाचित्वस्यैव युक्तत्वात् । अपूर्ववाचित्वमादित्यादिपुरुषकर्तृत्वानिर्वाहकतया प्रकृतोपयोगीतिचेत् न । एकःकथमेतावतामादित्यादिपुरुषाणां कर्तेत्याकांक्षायां नह्ययन्तेषामेव कर्त्ता किंतु सर्वस्यास्यजगतः । तथाच यस्यैतत्सर्वमेव जगत्कार्यं तस्यादित्यादिपुरुषकर्तृत्वे का विचिकित्सेति कैमुतिकन्यायेन कार्यसामान्ययोगस्याप्यादित्यादिपुरुषकर्तृत्वनिर्वाहकतया प्रकृतोपयोगसाम्यात्, तत्साम्येच एतत्पदसामानाधिकरण्यबलात् कार्यत्वयोगोन्मेषेण जगद्वाचित्वस्यैवाभ्युपेयत्वात्, 'एतेषां पुरुषाणां कर्ते' ति प्रकृतं कर्तारं 'यस्ये' ति परामृश्य कर्मशब्देन तत्संबन्धिनिर्देशरूपेण कर्तृकर्मसमभिव्याहारेणापि कर्मशब्दे कर्तृव्यापारविषयत्वात्मककार्यत्वयोगोन्मेषात्, सर्वकार्यसाधारणेन कार्यसामान्ययोगेनैव अपूर्वेऽपि वृत्तिसम्भवेन तत्र तस्य असाधारण्येन रूढिकल्पनायोगाच्च । पूर्वतंत्रे हि बर्हिराज्याधिकरणे बर्हि-

शशब्दस्य लवनादिसंस्कृतेषु दर्भेष्वाज्यशब्दस्योत्पवनादिसंस्कृते घृते च सार्वभौमे शिष्टप्रयोगे सत्यपि क्वाचित्कं तयोर्दर्भघृतजातिमात्रे प्रयोगमवलम्ब्य तेनैव संस्कृतप्रयोगनिर्वाहात् तयोस्संस्काररूपं प्रवृत्तिनिमित्तान्तरं न कल्प्यमित्युक्तम् । 'एकदेशेऽपि यो दृष्टश्शब्दो जातिनिबन्धनः । तदत्यागान्नतस्यास्ति निमित्तान्तरकल्पने' ति । अतः 'बल्हीयो योगः कल्प्यां रूढिं बाधत' इति न्यायात् नापूर्वरूढिकल्पनावकाशः । तस्मात् 'यस्य वै तत्कर्मे' ति सकलजगत्कर्तृत्वोपदेशोऽयम् । एवं च प्रत्यक्षादिसन्निधापितसकलजगदुपस्थापकैतच्छब्दः आदित्यपुरुषाद्येकदेशमात्रकर्तृत्वमात्रव्यवच्छेदको वाशब्दश्च सार्थको भवति । ब्रह्मनिरूपणोपक्रमः 'चक्षोस्सूर्यो अजायते' त्यादिश्रुतिप्रतिपन्नपरब्रह्मधर्मादित्यपुरुषादिकर्तृत्वोपन्यासश्च सर्वलोकप्रसिद्धजीवातिरिक्तबालाक्यविदितपुरुषोपदेशश्च अनुकूलितो भवति । 'सर्वान् पाप्मनोऽपहत्य सर्वेषाञ्च भूतानां श्रैष्ठ्यं स्वाराज्यं पर्येति यएवं वेदे' त्यौपसंहारिकब्रह्मवेदनफलवर्णनमप्युपपादितं भवति । ननु 'एतैरात्मभिर्भुङ्क्ष' इति भोक्तृत्वं, 'अथास्मिन् प्राणएवैकधा भवती' ति सप्तम्यन्तनिर्दिष्टवेदितव्यपुरुषाश्रितमुख्यप्राणसंबन्धश्चेति जीवलिंगद्वयं वेदितव्यपुरुषस्य जीवत्वगमकं वाक्यशेषे श्रूयत इति चेत्, तस्य निर्वाहः प्रतर्दनविद्यायामेवाभिहितः । उपक्रमोपसंहारबलात् ब्रह्मपरत्वेन निश्चिते वाक्ये तन्मध्यगतान्यन्यलिंगानि तदनुरोधेन नेयानीति । कथन्तन्नयनमिति चेत् । इत्थं । जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थं जीवसङ्कीर्तनमिति तदिदं प्रश्नव्याख्यानाभ्यामवगम्यते । प्रश्नस्तावत् राज्ञा गार्ग्यं प्रति कृतः, 'क्वैष एतत्बालाके पुरुषोऽशयिष्ट क्वैषतदाऽभूत् कुतएतदागा' दिति । एवं राज्ञा पृष्टं सुषुप्तजीवाधिकरणमविजानति गार्ग्ये 'हितानाम हृदयस्य नाड्य' इत्यादिना 'तासु तदा भवति यदा सुप्तः स्वप्नं नकथञ्चन पश्यती' त्यन्तेन जीवस्य सुषुप्त्यधिकरणं हृदयावच्छिन्नं ब्रह्म प्राप्तं मार्गतयाऽधिगन्तव्यासु नाडीषु सर्पणमुक्त्वा 'अथास्मिन् प्राणएवैकधाभवती' ति राज्ञैव कृतं स्वपृष्टार्थविवरणम् । तस्य व्याख्यानमिदं सुषुप्तौ जीवस्य ब्रह्माणि लयप्रतिपा-

दकं । 'सता सोम्य तदा सम्पन्नो भवती'ति छन्दोगश्रुत्यैकार्थ्यात्, 'य-त्रैषएतत्सुप्तोभूत्, यएष विज्ञानमयः पुरुषः क्वैषतदाऽभूत् कुतएतदागा'दिति 'यत्रैषएतत्सुप्तोभूत् यएषविज्ञानमयः पुरुषः तदैषां प्राणानां विज्ञानेन वि-ज्ञानमादाय यएषोऽन्तर्हृदयआकाशस्तस्मिन्शेत'इति वाजसनेयिशाखाम्ना-तबालाक्यजातशत्रुसंवादगतप्रश्नोत्तरैकार्थ्याच्च । तस्माद्वेदितव्यतयोपदिष्टः पुरुषस्सुपुप्तजीवाधिकरणत्वेन ततोभिन्न उक्तइति सभगवान् परमपुरुषए-वेति सिद्धम् ॥

संग्रहकारिकाः ॥

ब्रह्मेति सर्वागमसीमलालितः सांख्योदितः पूरुषएव नाधिकः ।
ब्रह्मप्रसङ्गो यदजातशत्रुणा कर्मान्विते तत्र समाप्तिमापितः ॥
मैवमिह कर्मशब्दः कार्यपरो नैव पुण्यपापपरः ।
निखिलजगत्स्वरसैतत्पदसमाभिव्याहृतिग्रासात् ॥
बालाक्यविदितपुरुषोपदेशवाक्यप्रवेशाच्च ।
चक्षोस्सूर्य इतीद्दक्प्रापकवचनानुरोधाच्च ॥
इति जगद्वाचित्वाधिकरणम् ॥ ९ ॥

---

## वाक्यान्वयात् ॥ १९ ॥
## प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः ॥ २० ॥
## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥
## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

बृहदारण्यके मैत्रेयीब्राह्मणे याज्ञवल्क्यः स्वयंप्रविव्रजिषया मैत्रेयी-कात्यायन्योः स्वभार्ययोर्वित्तसंविभागं चिकीर्षन् वित्तेन किममृतत्वं प्राप्तुं शक्यमिति मैत्रेय्या पृष्टो 'यथैवोपकरणवतां जीवितं तथैवतेजीवितंस्यात् अमृतत्वस्य तु नाशास्ति वित्तेने'त्युक्त्वा 'येनाहन्नामृतास्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मेब्रूही'ति तया पुनरमृतत्वसाधनं पृष्टः 'न

वा अरे पत्युः कामाय पतिः प्रियोभवति आत्मनस्तु कामाय पतिः प्रियोभवती' त्यादिभिः 'नवा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवती' त्यन्तैः वाक्यैः पतिजायापुत्रवित्तादिकं सर्वं यद्भोगार्थतयैव प्रियं भवति तं पत्यादिसर्वभोक्तारमात्मानमुपक्रम्य 'आत्मावा अरे द्रष्टव्यश्श्रोतव्योमन्तव्योनिदिध्यासितव्य' इत्यमृतत्वसाधनमात्मदर्शनं तत्साधनानि श्रवणादीनि चोपदिश्य 'आत्मनिखल्वरे दृष्टे श्रुते मते विज्ञाते इदंसर्वंविदित'मित्यात्मविज्ञानेन सर्वविज्ञानमुक्त्वा 'सयथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथक्धूमाविनिश्चरन्त्येवंवा अरेऽस्य महतोभूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरसइतिहासःपुराणं विद्याउपनिषदश्श्लोकास्सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकस्सर्वाणि च भूतान्यस्यैवैतानिसर्वाणिनिश्वसितानी'ति तस्य नामरूपात्मकसकलप्रपञ्चकारणत्वं प्रदर्श्य 'प्रज्ञानघनएवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति नप्रेत्यसंज्ञाऽस्ती'ति तस्योत्पत्तिविनाशविशेषविज्ञानाभावानुक्त्वा 'एतावदरेखल्वमृतत्व' मिति तस्यात्मनोवेदनममृतत्वसाधनमुपसञ्जहारेति श्रूयते । अत्र पतिजायादिवाक्यजातमुत्पत्तिविनाशवाक्यञ्च जीवविषयं, श्रवणमननादिवाक्यं सर्वविज्ञानवाक्यं सर्वकारणत्ववाक्यञ्च परमात्मविषयमिति प्रतीयते । सर्वाणि चैतानि वाक्यानि एकविषयत्वेन प्रवृत्तानि प्रकृतपरामर्शिभिरात्मशब्दसर्वनामशब्दैरुत्तरोत्तरवाक्यप्रवृत्तेः । चतुर्थाध्याये मैत्रेयीब्राह्मणे 'महद्भूतमनन्तमपार'मिति परमात्मासाधारणविशेषणानि'प्रज्ञानघनएवे'त्यादिवाक्योक्तोत्पत्तिविनाशादिजीवलिंगसामानाधिकरण्येन निर्दिष्टानि। एवं जीवेश्वरलिंगयुक्तवाक्यानामेकविषयत्वप्रतीतावपि नाभेदस्तयोश्श्रुतितात्पर्यविषय इत्यभ्युपगन्तुं युक्तम् । 'नाहं सर्वज्ञ'इत्याद्यनुभवेन जीवे सर्वज्ञत्वादिविशिष्टेश्वरभावबाधात् । उभयोर्भेदेन अत्र प्रतिपादनकल्पनंत्वेकविषयत्वप्रतीतिविरुद्धम् । तस्मात् जीवेश्वरयोरन्यतरएवात्र प्रतिपाद्यः । अप्रतिपाद्यलिंगानि च प्रतिपाद्ये योज्यानीति स्थिते जीवधर्माणामीश्वरे योजनेन सिद्धान्तो भविष्यति । ईश्वरलिंगानां

जीवे योजनेन सांख्यतन्त्रसिद्धः पुरुष एवात्र प्रतिपाद्य इति तावत्पूर्वपक्षः । तथा हि– पतिजायादिसम्बन्धस्तावदविचलं जीवलिंगम् । 'न वा अरे पत्युः कामाये'त्यत्र वैशब्देन प्रसिद्धिद्योतकेन । प्रसिद्धं ह्येतत् तत्रापि, मैत्रेयि यत् पत्यादयो जायादीनां पत्यादिप्रयोजनाय प्रिया न भवंति किं तु स्वप्रयोजनायैवेत्येवमर्थप्रतीतेः । अतः पत्यादिकं परित्यज्यामृतत्वसाधकं स्वात्मदर्शनमेव श्रवणादिभिस्सम्पादनीयमिति 'आत्मा वा अरे द्रष्टव्य' इत्यादिनोच्यत इति सङ्गच्छते । ननु स्वात्मभोगाय पत्यादीनां प्रियत्वमुक्त्वा ततः केवलमात्मस्वरूपमन्वेष्टव्यमिति वचनं न संघटते । प्रियमेवह्यन्वेष्टव्यं न तु प्रियवियुक्तस्वरूपमिति चेत्, उच्यते– सर्वेषामपि स्वात्मा स्वतः प्रियः, पतिजायादयस्तु न पतित्वादिना प्रियाः, तेषां स्वेष्टसंपादकत्वदशायामिव स्वानिष्टकरणत्वदशायां प्रीत्यदर्शनात् । अतः स्वात्मनःपत्यादीनां चानुभवानुसारेण व्यवस्थिताव्यवस्थितपुरुषार्थत्वरूपं तत्वमालोच्याव्यवस्थितगौणपुरुषार्थरूपं पत्यादिकं परित्यज्य मुख्यमेवाश्रयेदिति प्रकृतिवियुक्तात्मदर्शनतदर्थश्रवणमननध्यानविधानं सङ्गच्छत एव । 'दशमन्वन्तराणीह तिष्ठन्तींद्रियचिन्तका' इत्यादिना तन्त्रसिद्धपुरुषध्यानस्य सांख्यैर्मुक्तिफलकत्वप्रतिपादनात् । सर्वविज्ञानवचनमपि तत्र सङ्गच्छते । मुक्त्यर्थानुसन्धेयप्रकृतिवियुक्तजीवस्वरूपाणां विशेषकान्तराभावेनैकाकारतया स्वात्मनि तथा विज्ञातेसति 'एवमाकारास्सर्वे जीवा' इति ज्ञातुं शक्यत्वात् । सर्वोपादानत्ववचनं तु जीवाधिष्ठितप्रधानविषयतया सङ्गच्छते । तत्रह्यार्द्रेंधनविशिष्टस्याग्नेः धूमोपादानत्वं दृष्टान्तीकृतं । न चाग्निर्धूमोपादानं, किंत्वार्द्रेंधनमेव । तदुत्कर्षेण धूमोत्कर्षदर्शनात् । एवं दार्ष्टान्तिकभावेऽप्यार्द्रेंधनकल्पजडप्रकृतिविशिष्टस्याग्निकल्पस्य चेतनस्योपादानत्ववर्णनं दृष्टान्तानुसारात् 'दध्ना जुहोती'ति विधानमिव विशेषणे संक्रामति । एवमिह ब्रह्मधर्माणां जीवे योजयितुं शक्यत्वात्, जीवधर्माणां पतिजायादिसम्बन्धोत्पत्तिविनाशविशेषविज्ञानाभावानां ब्रह्मणि योजयितुं शक्यत्वात्, बृहदारण्यकचतुर्थषष्ठाध्यायाम्नातयोर्मैत्रेयीब्राह्मणयोस्तन्त्रसिद्धे पुरुषे पर्यवसानेन तत्सामान्यात् सर्वाण्यपि

कारणवाक्यानि पुरुषाधिष्ठितप्रधानकारणत्वपराणि । अतः प्रधानमेव जगत्कारणं नत्वीश्वरो नाम कश्चिदस्तीति । एवं प्राप्ते सिद्धांतः–

अमृतत्वसाधनवेदनेनोपक्रमस्तेनोपसंहारो मध्ये चामृतत्वसाधनात्मदर्शनश्रवणमननध्यानकीर्तनञ्च प्रकरणस्य परमात्मविषयत्व एवोपपद्यते, नतन्त्रसिद्धपुरुषविषयत्वे । 'नान्यः पन्था' इति श्रुतेः श्रुतिविरुद्धस्य 'पुरुषं निर्गुणं प्राप्ये'त्यादितान्त्रिकवचनस्य हेयत्वात् । कथं ब्रह्मणि पतिजायादिवाक्यघटना । इत्थं- पतिजायापुत्रवित्तादयो मत्प्रयोजनायाहमस्यप्रियस्स्यामिति स्वसङ्कल्पात् प्रिया न भवन्ति, किन्तु परमात्मनस्स्वाराधकप्रियप्रतिलंभनविषयकामनानिर्वृत्तय इति । परमात्मा हि कर्मभिराराधितस्तत्तत्कर्मानुगुणं प्रतिनियतदेशकालस्वरूपपरिमाणमाराधकानान्तत्तद्वस्तुगतं प्रियत्वमापादयति । 'एष ह्येवानन्दयाती'ति श्रुतेः । न तु किमपि वस्तु स्वतः प्रियमप्रियं वा भवति । यथोक्तं भगवता पराशरेण– 'तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय पुनः प्रसादाय च जायते ॥ तस्माद्दुःखात्मकन्नास्ति न च किञ्चित् सुखात्मक'मिति । नन्वित्थं पतिजायादिवाक्यं परमात्मविषयतां प्राप्नोतु नाम । 'तान्येवानुविनश्यती'त्यादि जीवपरामर्शः कथन्तद्विषयतां प्राप्नुयादिति चेत्, इत्थं- जीवस्तावत् ईश्वराद्धुत्पद्यते । 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गा' इत्यादिश्रवणात् । अतस्तयोः कार्यकारणभूतयोरस्ति घटमृत्पिण्डयोरिव मुख्यमैक्यं, तदिह ज्ञापनीयम् 'आत्मनिखल्वरे' इत्यादिपूर्ववाक्योक्तसर्वविज्ञानप्रतिज्ञासिध्यर्थमिति तत्ज्ञापनार्थं जीवशब्दैरीश्वराभिधानमित्याश्मरथ्य आचार्यो मन्यते । संसारदशायां जीवेश्वरयोर्भेदेऽपि मोक्षदशायां 'यथा नद्यस्स्यंदमानास्समुद्र' इति मन्त्रोक्तनदीसमुद्रन्यायेन अभेदप्राप्तेः जीवशब्दैरीश्वराभिधानमित्यौडुलोमिराचार्यो मन्यते । ईश्वरस्य जीवेऽन्तर्यामितयाऽवस्थितेस्तन्नियाम्यत्वेन तच्छरीरस्य जीवस्य शब्दाश्शरीरिपर्यन्ताइति जीवशब्दैरीश्वराभिधानमिति काशकृत्स्नआचार्यो मन्यते । इदमेव मतं सूत्रकारस्याभिमतम् । जीवोत्पत्तेः 'नात्माऽश्रुते'रित्यत्र, मुक्तावागन्तुकरूपा-

भिनिष्पत्तेः 'संपद्याविर्भाव' इत्यत्र निराकरिष्यमाणत्वात्, सर्वशब्दानां शरीरिपरमात्मपर्यन्तत्वस्य 'चराचरव्यपाश्रयस्तु स्या'दिति सूत्रेण प्रसाधयिष्यमाणत्वाच्च । तस्मादादिमध्यावसानपरामर्शात् मैत्रेयीब्राह्मणं परमात्मपरम् । न तु तन्त्रसिद्धपुरुषपरमिति सर्वेषां कारणवाक्यानां सिद्धं परमात्मपरत्वम् ॥

संग्रहकारिकाः ॥

मैत्रेयीब्राह्मणोक्तः पतिसुतवनिताद्यन्वयात् पञ्चविंश-
स्तस्य ज्ञानाद्विमुक्तिः प्रकृतिविरहितस्येति तंत्रे प्रसिद्धिः ।
तन्न्यायात्सर्ववेदावधिपरिपठिताश्चेतनैकान्तशब्दाः
तत्रैवाख्यां लभंतां भवतु च तदधिष्ठातृकं तत्प्रधानम् ॥
पतिसुतवनितादिकीर्तनेऽपि स्पृशति न संसृतिभाजमात्मशब्दः ।
इह सुदृढमुपक्रमादिदृष्ट्या परविषये सति तस्य कः प्रसङ्गः ॥
तस्मादिहात्मा भणितः पुमान्परस्तदिष्टमाराधकसौख्यलम्भनम् ।
तत्सिद्धये स्युस्तनयादयः प्रियाःस्वरूपतो नेति तदर्थइष्यतां ॥
जीवपरामर्शोऽयं शरीरिपरमात्मपर्यन्तः ।
यत्रोत्पत्तिविनाशज्ञानाभावाहि न गदितास्तस्य ॥
इति वाक्यान्वयाधिकरणम् ॥६॥

---

**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥२३॥**

**अभिध्योपदेशाच्च ॥ २४ ॥**

**साक्षाच्चोभयाम्नानात् ॥ २५ ॥**

**आत्मकृतेः ॥ २६ ॥**

**परिणामात् ॥ २७ ॥**

**योनिश्च हि गीयते ॥ २८ ॥**

एवं निरीश्वरसांख्ये निरस्ते सतीश्वरः केवलं निमित्तभूतः प्रधानमेव तु परिणामिजगदुपादानमिति वदतस्सेश्वरसांख्यस्य मतं निराक्रियत इति सङ्गतिः । किं ब्रह्म जगतोनिमित्तमात्रं उतोपादानमपीति तस्योपादानत्वे श्रुतिन्यायविरोधतदानुकूल्याभ्यां संशये पूर्वपक्षः– ईश्वरोनिमित्तमात्रं, प्रधानमेव उपादानं । 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरं, मयाध्यक्षेण प्रकृतिस्सूयते सचराचर'[१] मित्यादिश्रुतिस्मृतिदर्शनात्, लोके कुलालमृत्पिण्डादिनिमित्तोपादानभेददर्शनाच्च परमात्मनउपादानत्वासम्भवाच्च। कार्याकारेण परिणामित्वं ह्युपादानत्वं, न तु परिणाम्याधारत्वमपि। मृदि घटाकारेण परिणममानायां तदाधारस्य भूतलस्याप्युपादानत्वप्रसङ्गात् । न च 'बहुस्यां प्रजायेये' ति ब्रह्मणस्स्रक्ष्यमाणतेजःप्रभृतिरूपेण स्वस्य बहुभवनसङ्कल्पश्रवणादुपादानत्वमप्येष्टव्यमिति वाच्यम्। तदनुपादानत्वेपि ततो भेदेऽपि स्वकीयत्वप्रयुक्ताभेदोपचारेणतदुपपत्तेः।'प्रजायेमहिरुद्रप्रजाभिः, अग्ने यन्मे तनुवा ऊनन्तन्मआपृणेत्याह यन्मे प्रजायै पशूनामूनन्तन्मआपूरयेतिवावैतदाहे'त्यादिमन्त्रार्थवादा हि प्रजापशुरूपेण स्वस्यैव जननं स्वस्यैव प्रजापश्वात्मकत्वञ्चावेदयन्ति । नच प्रतिज्ञादृष्टान्तानुसारेणोपादानत्वमप्येष्टव्यमिति वाच्यम् । ब्रह्मज्ञाने सत्यपि वियदादिषु मृत्पिण्डादिज्ञाने सत्यपि घटशरावादिषु च संशयदर्शनेन प्रतिज्ञादृष्टान्तयोरौपचारिकतया नेतव्यत्वात् । 'तदात्मानं स्वयमकुरुते' त्यादेः 'यदायदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यह' मित्यादिवन्नयनसम्भवादिति । एवंप्राप्ते सिद्धान्तः—

ब्रह्म जगत उपादानमपि, न निमित्तमात्रं । उपादानत्वे सत्येवहि सर्वविज्ञानप्रतिज्ञामृत्पिण्डघटशरावादिदृष्टान्तौ नोपरुध्येयाताम् । न च तयोरौपचारिकत्वं कल्प्यं, मुख्यत्वसमर्थनोपपत्तेः । तथाहि– 'सदेव सोम्येदमग्रआसीत् एकमेवाद्वितीय' मित्यत्र सत्पदं सूक्ष्माचिदचिद्विशिष्टवस्तुपरम् । अन्यथा ब्रह्मातिरिक्तस्य जीववर्गस्य अव्यक्तस्य च सत्वेन अवधारणाविरोधात्, अवधारणस्य तत्पृथग्भूतवस्त्वन्तरव्यवच्छेदकत्वेनोपपादनी-

यत्वात् । तज्ज्ञाने च तत्कार्यं सर्वमपि विषयोभवति । कार्यद्रव्यस्य कारणानन्यत्वात् । कार्यगतस्थूलावस्था परं विषयो नभवति । अतस्तेनाकारेण संशय उपपद्यते । अन्यदिहापेक्षितं प्रतिज्ञादृष्टान्तवाक्ययोर्विचारणीयमारम्भणाधिकरणे विचारयिष्यते । न च कुलालमृत्पिण्डन्यायेन निमित्तोपादानभेदनियमश्शङ्कनीयः । तत्र हि निमित्तोपादानाभेदग्राहकप्रमाणाभावात् तद्भेदः, इह तत्प्रमाणे जाग्रति कथमभेदो न स्यात् । न च भूतलवत्परिणाम्युपादानाधारस्योपादानत्वोक्तिर्निरालंबनेति वाच्यं । अपृथक्सिद्धकार्याश्रयत्वरूपत्वादुपादानत्वस्य तस्य ब्रह्मण्यपिमुख्यत्वात् । नच कार्याश्रयत्वे साक्षात्त्वन्निवेशनीयं, येन साक्षात्तदाश्रयभूता प्रकृतिरेवोपादानं स्यात् । साक्षात्त्वविशेषणे गौरवात् । किंच प्रतिज्ञादृष्टान्ताभ्यां तावद्ब्रह्मण उपादानत्वमवसीयते । 'बहुस्यां प्रजायेये' त्यभिध्योपदेशादपि तदवसीयते । न च तस्य मुख्यत्वसम्भवे पूर्वपक्षोदाहृतमन्त्रार्थवादवत्क्लिष्टगतिः कल्पनीया । तथा 'ब्रह्मवनं ब्रह्मसवृक्ष आसीत् यतोद्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमिवः ब्रह्माध्यतिष्ठद्भुवनानि धारय' न्निति साक्षाच्च तस्य निमित्तोपादानोभयरूपत्वमाम्नायते । अत्र हि 'वृक्ष' इति तक्षणनिर्वर्त्यद्यावापृथिव्युपादानत्वमुक्तम् । 'ब्रह्माध्यतिष्ठ' दिति निमित्तत्वं । तथा 'तदात्मानं स्वयमकुरुते' ति सृष्टौ तस्यैव कर्तृकर्मभावश्रवणादपि तस्य निमित्तोपादानोभयरूपत्वमवगम्यते । 'तदात्मानं सृजाम्यह' मितिवदुपपद्यत इत्युक्तमितिचेत् न । तत्रापि निमित्तोपादानभावसिध्यविशेषात् । इयांस्तु विशेषः । तत्र अवतारशरीररूपेण स्वात्मनः स्वेन सृष्टिरुच्यते, इह प्रपञ्चरूपेणेति । एवं बहुविधश्रुतिसिद्धमपि तस्योपादानत्वं 'निष्कळं निष्क्रियं शान्त' मित्यादिनिर्विकारत्वविषयबहुश्रुत्यन्तराविरोधेन कल्पनीयम् । तथा तत्कल्पनञ्च निरुक्तोपादानलक्षणे साक्षादाश्रयत्वाविवक्षयैव निर्वहतीत्यतोऽपि साक्षात्त्वन्नाविवक्षणीयम् । न च व्यवहितकारणवद्व्यवहिताश्रयो नास्ति, स केवलमाश्रयस्यैवाश्रय इति शङ्कनीयम् । पर्यङ्कास्तीर्णवस्त्रे शयानं प्रति तद्वहनाक्षमस्य वस्त्रमात्रस्य आश्रयत्वायोग्यतया

व्यवहितस्य पर्यङ्कस्य वस्त्रद्वारा तदाश्रयत्वात् प्रासादस्थपर्यङ्कशायिते पुरुषे 'प्रासादे शेत' इति व्यवहारदर्शनाच्च । एतेन स्वाभिन्नकार्यावस्थाश्रयत्व-मुपादानलक्षणम्, तथा च ब्रह्मप्रपञ्चयोरपृथक्सिद्धिसत्त्वेऽप्यभेदाभावात् न ब्रह्मणः प्रपञ्चोपादानत्वमित्यपि शङ्का निरस्ता । श्रुतोपादानत्वनि-र्वाहार्थमपृथक्सिद्धिगर्भस्यैव लक्षणस्य वाच्यत्वात् श्रुतोपपत्त्यनुसारेण अश्रुतकल्पनौचित्यात् । तस्मादुक्तलक्षणपरिणामित्वाभ्युपगमे श्रुतोपादान-त्वनिर्वाहात् श्रुतनिर्विकारत्वाव्याकोपाच्च निरुक्तपरिणामित्वरूपं निरवद्यमे-वोपादानत्वम्, यदक्षरवाक्यगतभूतयोन्यादिशब्दैरपि जोघुष्यते । योनि-शब्दोह्युपादानपर्यायः । अक्षरप्रकरणे 'कर्तारमीशं पुरुषं ब्रह्मयोनि'मिति कर्तृत्वस्यापि श्रवणात् ततोऽपि निमित्तोपादानोभयरूपत्वसिद्धिः । तस्मात् ब्रह्म जगत उपादानं निमित्तञ्चेति सिद्धम् ॥

संग्रहकारिके ॥

अस्तीश्वरस्तथाऽपि तु नोपादानमयमपरिणामित्वात् ।
तदधिष्ठितं प्रधानं श्रुतिस्मृतिभ्यामुपादानम् ॥
निर्दोषो निर्विकारस्स्वत इति चिदचिद्देह एष स्वदेह-
द्वारादोषैर्विकारैरपि च न सहते सङ्गतिं विश्वनेता ।
तेनोपादानलक्ष्मच्युतमिह न भवेद्धाऽव्यवस्थाश्रयत्वं
पर्यङ्कास्तीर्णवस्त्रस्थितिजुष इव यद्देहगत्याश्रयोऽसौ ॥

इति प्रकृत्यधिकरणम् ॥७॥

---

## एतेन सर्वे व्याख्याता व्याख्याताः ॥२९॥

अतीतपञ्चत्रिंशदधिकरणन्यायातिदेशरूपत्वात् सङ्गतिः । अतीता-धिकरणेष्वनुदाहृताः कारणवाक्यविशेषाः किमुक्तलक्षणब्रह्मपरा उत नेति

तेषामुक्तन्यायविषयत्वसम्भवासम्भवाभ्यां संशये पूर्वःपक्षः । अनुदाहृताः कारणवाक्यविशेषास्सर्वे परमपुरुषैकान्तिका न भवन्ति । 'हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्, यदा तमस्तन्नदिवा न रात्रिर्नसन्नचासच्छिव एव केवल'इत्यादिकारणवाक्यान्तरेषु ब्रह्मशिवादिशब्दोक्तकारणान्तरप्रतीतेरिति । सिद्धान्तस्तु—

अतीताधिकरणोक्तन्यायैरेव तेऽपि परमपुरुषविषयास्सिध्यन्तीति । तत्सिद्धिप्रकारस्तु श्रुतप्रकाशिकादिषु प्रपञ्चितो द्रष्टव्यः । अतिविस्तरापत्तेर्नेह सलिख्यते । कारणभूत वस्तुनि शिवादिशब्दा अपि श्रुता इतिचेत् पूर्वन्यायैस्तेऽपि ब्रह्मणि नारायणे योज्याः ॥

इति सर्वव्याख्यानाधिकरणम् ॥८॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे प्रथमस्याध्यायस्य

च तु र्थः पा दः ॥

---

# प्रथमोऽध्यायस्समाप्तः ॥

---

श्रीमते हयवदनपरब्रह्मणे नमः ॥

---

॥ श्रीः ॥

श्रीमते हयवदनपरब्रह्मणे नमः ॥

नयमयूखमालिकायां

# द्वितीयोऽध्यायः ॥



## स्मृत्यनवकाशदोषप्रसंगइतिचेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॥१॥

## इतरेषाञ्चानुपलब्धेः ॥ २ ॥

प्रथमेऽध्याये श्रीमन्नारायणाख्यं परंब्रह्म सकलजगत्कारणमिमि तत्र सर्वेषां वेदान्तानां न्यायतस्समन्वयव्युत्पादनेन प्रसाधितं। तत्र संभावितसर्वविधविरोधसमाधानेन तदेव स्थिरीकर्तु द्वितीयोऽध्याय आरभ्यते। तत्र प्रथमाधिकरणे सांख्यस्मृतिविरोधेन वेदांतानामन्यपरत्वाशङ्का निरस्यते। ननु कथं स्मृतिविरोधेन श्रुतेरन्यपरत्वशङ्का, श्रुतिस्मृतिविरोधे स्मृतेरेवाप्रामाण्यस्य 'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमान' मिति पूर्वतन्त्राधिकरणे स्थितत्वात्। तत्र हि 'औदुंबरीं स्पृष्ट्वोद्गाये' दिति प्रत्यक्षश्रुतिविरोधेन 'औदुंबरी सर्वा वेष्टयितव्ये' ति स्मृतेरनादरणीयत्वं, असत्येव प्रत्यक्षश्रुतिविरोधे स्मृतेर्मूलश्रुत्यनुमापकत्वेन प्रामाण्यञ्चोक्तम्। सत्यं। प्रत्यक्षश्रुतेः स्फुटार्थत्वे तथैव। जगत्कारणविषयावेदान्तास्तु स्पर्शनश्रुतिवन्नस्फुटार्थाः, किंत्वतिगहना नानाप्रकाराः 'वेदार्थोयस्स्वयं ज्ञातस्तत्राज्ञानं भवेदपि। ऋषिभिर्निश्चिते तस्मिन् का शङ्का स्यान्महात्मभि' रित्युक्तरीत्योपबृह्मणनिश्चयार्थाइति कपिलादिमहर्षिप्रणीतसांख्यस्मृतिरूपोपबृह्मणानुसारेण तेषामन्यपरत्वशङ्का भवत्येवेति तन्निरासार्थमिदमधिकरणम्। अत्र प्रथमाध्यायप्रसाधितं ब्रह्मणो जगत्कारणत्वमयुक्तं युक्तंवेति सांख्यमन्वादिस्मृतिविप्रतिपत्तेः किं सांख्यस्मृत्योपबृंहणीयास्सन्तो वेदान्तास्तदनुसारेण प्रधानकारणपराः, उत मन्वा-

दिस्मृत्युपबृंहणीयास्सन्तस्ते ब्रह्मकारणपराइत्यनिर्धारणात् संशये पूर्वपक्षः—सांख्यस्मृत्योपबृंहणीयाः । तस्या निरवकाशत्वात् । मन्वादिस्मृतीनां वर्णाश्रमादिधर्मेषु अग्निहोत्रादिकर्मसु च सावकाशत्वात् । न च मनुव्यासादिबहुस्मृतिविरोधात् सांख्यस्मृतेर्भ्रान्तिमूलत्वं कल्प्यतामिति वाच्यम् । 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानञ्च पश्ये' दिति श्वेताश्वतरोपनिषदि सांख्यकर्तुः कपिलस्य ज्ञानपरिपूर्णत्वश्रवणेन तत्कल्पनाऽयोगात् । 'यद्वै किञ्च मनुरवदत्तद्भेषज' मिति मनूक्तीनामपि कात्स्न्र्येन प्रामाण्यं श्रुतमितिचेन्न । भेषजशब्दस्य प्रामाण्यार्थत्वाभावेन तदसिद्धेः । यजुर्वेदेहि 'यो ब्रह्मवर्चसकामस्स्यात् तस्मा एतं सोमारौद्रंचरुं निर्वपे' दिति ब्रह्मवर्चसकामस्येष्टिं विधाय 'यावदेव ब्रह्मवर्चसं तत्सर्वं करोती' ति फलार्थवादानन्तरं 'अतिब्रह्मवर्चसंक्रियत इत्याहुरीश्वरो दुश्चर्माभवितो' रित्येवंरूपेप्यनुष्ठानेन 'अतिब्रह्मवर्चसं क्रियते तेन यजमानश्श्वित्रीभवितुं प्रभवती'त्येवं फलमेव पुनर्दोषपर्यवसायिनं सङ्कीर्त्य तत्परिहारार्थं 'मानवी ऋचौ धाय्ये कुर्या' दिति मनुना दृष्टे 'अग्निं वः पूर्व्यंगिरा देवमीडे वसूना' मित्यादिके ऋचौ सामिधेनीमध्ये धाय्यारूपे विधाय कथं मानवीभ्यामृग्भ्यां श्वित्रपरिहारइत्याकांक्षायां 'यद्वै किञ्च मनुरवदत्तद्भेषजं भेषजमेवास्मै करोती'त्यर्थवादेन तत्सङ्घटनं कृतम् । अत्र मनूक्त्यर्थानां श्वित्रपरिहारार्थभेषजरूपत्वप्रतिपादनमेव तत्सङ्घटकं, न तु मनुदृष्टऋगर्थानां 'अग्निर्वसूनाम्मध्ये पूर्व्य' इत्यादीनां मनुस्मृतिवचनार्थानाञ्च प्रामाणिकत्वप्रतिपादनम् । मनूक्त्यर्थानां श्वित्रे व्याध्यन्तरे वा भेषजरूपत्वं बाधितमिति चेत्, तर्हि असदर्थावलम्बनार्थवादत्वमस्तु । नह्यर्थवादस्य सदर्थावलम्बनत्वासिध्यर्थं प्रकृतार्थासङ्घटकार्थान्तरपरिग्रहो युक्तः । तस्मात् 'यद्वै किञ्चे' त्यादिकमनुवाक्यानां सर्वेषां स्वस्वविषयत्वेन प्रतीते सर्वत्रार्थे प्रामाण्यप्रतिपादनपरमित्येतदसिद्धेः मनुस्मृतिवचनानां ब्रह्मकारणवादांशमपहाय वर्णाश्रमधर्मेष्वेव अवकाशकल्पनं युक्तमिति वेदान्तानां निरवकाशया सांख्यस्मृत्यैवोपबृंहणीयत्वात् ते कपिलसूत्रहरिहरवार्तिकादिप्रतिपादितेन प्रकारेण प्रधानकारणत्वपरा नेतव्याः ।

तेषु ये पुरुषस्यैव कारणत्वं स्फुटं वदन्ति तेत्वमात्यजयं राज्ञीव प्रधानकृत्यं पुरुषे व्यपदिशंतीति नेतव्याइति मन्वादिस्मृतिभिरेवोपबृंहणीयाः। तासामाप्ततमप्रणीतानां बहूनामनवकाशत्वात् । नच कर्मभिस्तासां सावकाशत्वं, परमपुरुषाराधनभूतकर्मप्रतिपादकानामपि तदाराधनीयतया तच्छेषिणि परमपुरुषे जगत्कारणे ब्रह्मण्येव तात्पर्यात् । अत एव मनुना वर्णाश्रमादिधर्मान् ऋषिभिः पृष्टेन तदाराधनीयपरमपुरुषोपदेशपूर्वकमेव तेषामुपदेशः कृतः । 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमनिर्देश्यं प्रसुप्तमिव सर्वतः ॥ ततस्स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः ॥ सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् ॥ तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ॥ आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं प्रोक्तं तेन नारायणस्स्मृतः' इत्यादिना पुराणेषु परमपुरुषप्रतिपादनैदंपर्येण प्रवृत्तेष्वेव 'वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारक' इत्यादिवचनैस्तदाराधनतया तच्छेषत्वेनैव कर्मप्रतिपादनमिति स्पष्टमेव । तथा याज्ञवल्क्येनापि 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इतीश्वरं प्रस्तुत्य 'मुखपादोरुपज्जास्स्युस्तस्य वर्णा यथाक्रम'मिति पुरुषसूक्तप्रक्रियया तस्य जगत्कारणत्वं प्रतिपादयता मनुवदेव स्ववर्णितवर्णाश्रमधर्माणामाराधनीये पुरुषसूक्तप्रतिपाद्ये श्रियःपतौ नारायण एव तात्पर्यमाविष्कृतम् । तथा आपस्तम्बेनापि 'पूः प्राणिनस्सर्व एव गुहाशयस्याहन्यमानस्यविकल्मषस्ये'ति एवं 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इति सुबालोपनिषत्प्रतिपाद्यरूपं नारायणं प्रस्तुत्य 'तस्मात्कायाः प्रभवंति सर्वे समूलं शाश्वतिकस्सनित्य' इति तस्य सकलमूलकारणत्वं वदता सएव स्ववर्णितवर्णाश्रमादिधर्माणामाराधनीय इति तत्र तात्पर्यमाविष्कृतम् । एवमन्येषामपि स्मर्तॄणां वचनान्युदाहरणीयानि । नच अनवकाशत्वतौल्ये कथं मन्वादिस्मृतिभिरेवोपबृंहणीया इति निर्णय

इति वाच्यम्। मन्वादीनामाप्ततमत्वात्। मनोस्तावदाप्ततमत्वं तदुक्तीनां भेषजत्वश्रुत्याऽवसितम्। तथाहि— भेषजत्वमिह रोगदुरितोभयशान्त्यर्थसाधारणदोषपरिहारार्थत्वमात्रं विवक्षितं, नतु विशिष्य रोगशान्त्यर्थत्वमेव। 'यद्वैकिंचे' ति वाक्यस्यात्यंतासमर्थत्वापत्तेः। नहि मनुस्मृतिवचनानां मध्ये किमपि वचनं वैद्यकवद्रोगशांत्यर्थभेषजप्रतिपादकमस्ति। दुरितशांत्यर्थप्रतिपादकंत्वस्त्येव वर्णाश्रमधर्मविषयवचनजातम्। नित्यनैमित्तिकानां वर्णाश्रमधर्माणां दुरितक्षयहेतुत्वात्। ननु तथाऽपि सर्वाणि मनुस्मृतिवचनानि दुरितक्षयोपयोगीनि नभवंति, मनुस्मृतौ राजनीतिव्यवहारपदनिर्णयविषयत्वेन दृष्टार्थानामपि सत्त्वादिति वीप्सार्थकयत्किञ्चिच्छब्दासांगत्यमस्तीतिवाच्यं। तेषामपि दुरितक्षयार्थकर्मानुष्ठानोपकारकत्वेन परम्परया तादर्थ्यसत्त्वात्, तदभावेऽपि कात्स्न्र्यपरयत्किञ्चिच्छब्दस्य वर्णाश्रमधर्मविषयवचनजातपरत्वेन सङ्कोचोपपत्तेश्च असंकुचितसर्वपरत्वासंभवे संकुचितसर्वपरत्वौचित्यात्। अतएव 'सर्वएव हारियोजनस्य लिप्सन्त'इति ज्योतिष्टोमप्रकरणश्रुतिवाक्ये सर्वशब्दस्य असंकुचितसर्वपरत्वासम्भवात् केनचिदवच्छेदेन सामस्त्यपरत्वे वाच्ये प्राकरणिकज्यौतिष्टोमिकार्त्विज्यावच्छिन्नसामस्त्यपरत्वं युक्तमिति ऋत्विजामेव हारियोजनभक्षणविधायकमिदं वाक्यमिति निर्णीतं पूर्वतन्त्रे। एवञ्च भेषजत्वोक्त्या लब्धप्रामाण्यानां मनूक्तीनां परमतात्पर्यविषयमाराधनीयं विहाय तदाराधनमात्रे तात्पर्यपर्यवसानायोगस्य उक्तत्वात्। तत्रैव धर्मशास्त्ररूपाणां सर्वासां मनूक्तीनां प्रामाण्यं लभ्यत इति तत्र तस्याप्ततमत्वम्। तथा 'सहोवाच व्यासः पाराशर्य' इति श्रुत्या स्वप्रतिपाद्येऽर्थे व्यासोक्तत्वेन गौरवप्रदर्शनात् तथा व्यासोपादिष्टानां सर्वेषां प्रामाण्यं लभ्यत इति तस्याप्ततमत्वम्। एवं याज्ञवल्क्यादीनामपि 'जनकोह वैदेहो बहुदक्षिणेन यज्ञेनेज' इति बृहदारण्यकाध्यायादिवचनभङ्गीभिराप्ततमत्वं, कपिलस्यत्वाप्तत्वमात्रम्। 'ऋषिं प्रसूत' मित्यादेस्तदृषित्वोपयोगिकतिपयवेदवेदार्थगोचरज्ञानवत्त्वमात्रविषयत्वेनापि चारितार्थ्यात्। तथा सांख्यशास्त्रप्रवक्तारः कपिलासुरिपञ्चशिखादयस्त्रिचतुराएव स्मृतीतिहा-

सपुराणवक्तारो मन्वादयस्त्वतिबहवइति सुप्रसिद्धम् । स्मृतीतिहासपुराणानिच कपिलादिप्रणीतकतिपयसूत्ररूपात् सांख्यशास्त्रात् अतिबहुळानीतिव्यक्तमेव । तस्मादाप्ततममन्वादिबहुप्रणीतबहुशास्त्रविरोधात् सांख्यशास्त्रस्य निरवकाशत्वमकिंचित्करमिति निरवकाशाभिर्मन्वादिस्मृतिभिरेवोपबृंहणीया वेदांताः । ततश्च तेषां समन्वयात् ब्रह्मणोजगत्कारणत्वमविचलमिति ॥

संग्रहकारिकाः ॥

वेदान्तौघस्य सांख्यस्मृतिरतिगहनस्यार्थतत्वावधृत्यै
वक्तुं युक्तोपबृंहण्यनितरविषया साह्यलब्धावकाशा ।
नत्वन्या कापि धर्मावगतिपरतया विश्रुता सावकाशा
तस्माद्वेदान्तवेद्यं न भवति जगतः कारणं ब्रह्म तत्त्वे ॥
मैवं मनुव्यासमुखस्मृतीनामपि प्रतीतोऽनवकाशभावः ।
आराधनीये खलु कर्मभिस्स्वैर्नारायणे भावमुशन्ति तासाम् ॥
तस्माद्धजन्त्याप्ततमैः प्रणीतास्ताएव तेषामुपबृंहणत्वम् ।
या तद्विरुद्धार्थपरैव दृष्टा सांख्यस्मृतिर्भ्रान्तिनिबन्धना सा ॥

इति स्मृत्यधिकरणम् ॥१॥

---

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

अत्रापि विषयसंशयपूर्वपक्षसिद्धान्तहेतवः पूर्ववद्द्रष्टव्याः । हिरण्यगर्भस्य भ्रमासम्भवात् तत्कृतस्य शास्त्रस्येश्वराभ्युपगमेन श्वेताश्वतरोपनिषदाद्युक्तयोगानुष्ठानवर्णनेन च कपिलादिस्मृतिवैलक्षण्येन च वेदान्तान्तरङ्गत्वात् तेनोपबृंहणीया वेदान्ता इति तदुक्तरीत्या ईश्वराधिष्ठितस्य प्रधानस्य कारणत्वेनाभ्युपगन्तव्यत्वात् ब्रह्म कारणमित्येतदयुक्तं इत्यस्यातिदेशाधिकरणस्याधिका शङ्का । हिरण्यगर्भस्यापि क्षेत्रज्ञत्वेन तत्कृतस्य शास्त्रस्य भ्रममूलत्वसंभवात्, अब्रह्मात्मकप्रधानकारणत्वाभ्युपगमात्, ईश्वरस्य निमित्तमात्रत्वाङ्गीकारात्, वेदांताभिमतध्येयवैषम्यात्, तन्निरूप्यविलक्षणध्यानविधानाच्च विरुद्धेन तेन वेदान्ता नोपबृंहणीया इति तत्परिहारः ॥

संग्रहकारिका ॥

योगस्तद्धुपबृंहणत्वमयतां सद्यञ्जभूनिर्मित-
स्तत्राङ्गीकृत ईश्वरश्श्रुतिमितो योगश्च तद्गोचरः ।
मैवं श्रुत्युदितेश्वरात्तदुदिताद्योगाच्च तद्गोचरा-
द्वैलक्षण्यजुषौ हि तौ भववतः कस्येह नास्ति भ्रमः ॥

इति योगप्रत्युक्त्यधिकरणम् ॥२॥

---

**न विलक्षणत्वादस्य तथात्वञ्च शब्दात् ॥४॥**

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥५॥**

**दृश्यते तु ॥ ६ ॥**

**असदिति चेन्न प्रतिषेधमात्रत्वात् ॥७॥**

**अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥**

**न तु दृष्टान्तभावात् ॥ ९ ॥**

**स्वपक्षदोषाच्च ॥ १० ॥**

**तर्काप्रतिष्ठानादपि ॥ ११ ॥**

**अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥१२॥**

मन्वादिस्मृतिभिरेवोपबृंहणं कार्यमित्युक्तमयुक्तम् । तासां तर्कविरुद्धत्वात् । अतस्तर्कानुगृहीतया सांख्यस्मृत्यैवोपबृंहणं कार्यमिति प्रत्यवस्थानात्सङ्गतिः । ब्रह्मकारणत्वं युक्तमयुक्तंवेति चेतनात् ब्रह्मणोऽचेतनतया तद्विलक्षणस्य जगत उत्पत्तिसम्भवासम्भवाभ्यां संशये पूर्वपक्षः- चेतनाद्ब्रह्मणोऽचेतनस्य जगत उत्पत्तिर्न सम्भवति । विलक्षणत्वात् । घटकुण्डलमृत्सुवर्णादीनां मृत्त्वसुवर्णत्वादिकारणगतासाधारणरूपेण सालक्षण्ये सत्येव हि कार्यकारणभावो दृष्टः । चेतनस्य च चेतनत्वमसाधारणं न तत्कार्येषूपलभ्यते । न च कदाऽप्यनुपलभ्यमानं चैतन्यं सुषुप्तजीवेष्विव घटादिष्वनुद्भूतं श्रुत-

ब्रह्मकारणताऽन्यथाऽनुपपत्त्या कल्पनीयम् । सति चैतन्ये कदाचिदुद्भावावश्यम्भावेन तथा कल्पनाऽयोगात् । अन्यथा श्रुतयूपादित्यभावान्यथानुपपत्त्या यूपेऽप्यनुद्भूतादित्यत्वकल्पनापत्तेः, 'विज्ञानञ्चाविज्ञानञ्च' त्यादिचेतनाचेतनविभाजकश्रुतिविरोधापत्तेश्च विलक्षणाविलक्षणयोः कार्यकारणभावाभ्युपगतौ वैलक्षण्ये सति भेदावश्यंभावेन कार्यकारणैक्यसिद्धांताविरोधापतेश्चेति। सिद्धांतस्तु —

क्रिमिमाक्षिकादिषु सत्यपि वैलक्षण्ये कार्यकारणभावो दृश्यते । तत्राचेतनांश एव माक्षिकप्रकृतिक इति सालक्षण्यमस्तीति चेत् न । यथाकथञ्चित्सालक्षण्यस्य कार्यकारणभावप्रयोजकत्वे सर्वस्य सर्वस्मादुत्पत्तिः प्रसज्यत इति कारणगतासाधारणरूपेण सालक्षण्यं तवाभिमतम् । न च तदिहोपपादयितुं शक्यम् । क्रिमौ माक्षिकत्वस्याभावात् । एवमुपपद्यते विलक्षणयोरपि जगद्ब्रह्मणोः कार्यकारणभावः । न च तथा सति भेदाभ्युपगमापत्तिः । सालक्षण्यप्रतिषेधेऽपि कुण्डलहिरण्ययोरिवाभेदोपपत्तेः । न च जगद्ब्रह्मणोरभेदे जगत्सृष्ट्यादिषु सत्सु हेया जगदवस्थाः जगतीव ब्रह्मण्यपि स्युरित्येकस्मिन्नेव ब्रह्माणि हेयगुणाः तद्विरुद्धाः श्रुत्यन्तरसिद्धापहतपाप्मत्वादयश्चेत्यसामञ्जस्यापत्तिः । सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्म कारणं, स्थूलचिदचिद्वस्तुशरीरकं ब्रह्म कार्यमित्येवंरूपे सिद्धान्ताभिमते कार्यकारणाभेदे तदप्रसक्तेः शरीरगतधर्माणां शरीरिण्यप्रसङ्गे बाल्ययौवनस्थाविरादीनामात्मन्यसम्बन्धस्य दृष्टान्तस्य सद्भावादिति । एवं च यद्यपि स्थूलसूक्ष्मशरीररूपविशेषणांशे कार्यकारणयोरचेतनत्वेन विशेष्यांशे तयोश्चेतनत्वेन च सालक्षण्यमस्तीति वक्तुं शक्यम्, तथाऽपि कारणगतविशेष्यांशस्य कार्यगतविशेषणांशेऽपि कारणत्वं वक्तव्यमित्यभ्युपेत्य वैलक्षण्यम् । तत्र दृष्टान्त उपन्यस्तः । बाल्यावस्थस्य यौवनाद्यवस्थान्तरापत्तावपि हि कारणगतविशेष्यांशस्य कार्यगतविशेषणांशेऽपि कारणत्वमस्ति , निरात्मकशरीरस्य यौवनादिप्राप्त्यभावात्, तथेहापि सत्यपि वैलक्षण्ये कार्यकारणभाव उपपद्यत इति दर्शयितुम् ॥

संग्रहकारिके ॥

अचेतनं चेतनतः कथं स्याद्विलक्षणाद्विश्वमिति स्थवीयः ।
विशिष्टयोः कारणकार्यभावे न चोद्यमेतद्धि पदं लभेत ॥
तथाऽपि तर्कप्रतितर्कउच्यते न सर्वसाम्यं क्वचिदप्युदीक्ष्यते ।
यथा कथञ्चित्प्रकृतेऽपि वर्तते विशेषतो न क्रिमिमाक्षिकादिषु ॥

इति विलक्षणत्वाधिकरणम् ॥३॥

---

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥१३॥

प्रधानकारणवादिसांख्यमात्रतर्केण समन्वयभङ्गाभावेऽपि परमाणुकारणवादिकणभक्षाक्षचरणक्षपणकादिबहुतान्त्रिकाभिमततर्केण तद्भङ्गस्स्यादित्यधिकाशङ्कानिरासाय पूर्वन्यायातिदेशार्थमिदमधिकरणम् । परमाणुकारणवादिनां तर्केण समन्वयभङ्गो भवति न वेति तेषां परस्परविरोधसद्भावेऽपि तद्भङ्गसामर्थ्यसम्भवतदसम्भवाभ्यां संशये पूर्वपक्षः । सम्भवति तद्भङ्गे सामर्थ्यं, यथा शुनां परस्परविरोधसत्त्वेऽपि एकं वराहं मारयितुमैकमत्येन तद्भक्षणलिप्सया प्रवृत्तानां सर्वेषां शुनां तदलाभेऽपि वराहस्य मारणं भवति । एवं परमाणवस्सत्याः शून्याः विज्ञानात्मकाः क्षणिकाश्चतुर्विधाः एकविधा इत्येवमवान्तरकलहसद्भावेऽप्यल्पपरिमाणानामेव तंत्वादीनां महापरिमाणपटाद्यारम्भकत्वदर्शनात् तद्विपरीतपरिमाणयोर्ब्रह्मजगतोरुपादानोपादेयभावो न सम्भवतीति प्रतिष्ठितेन सकलपरमाणुवाद्यभिमतेन तर्केण तद्भङ्गउपपद्यत इति पूर्वः पक्षः । सिद्धान्तस्तु -

यथा नानादिग्विप्रकीर्णमपि बहुलन्तमस्तोमं एक एवादित्यः प्रतिक्षिपति, एवमुदाहृतं अन्यदप्येतादृश तर्कजालं 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मय' मित्याद्यो मृत्पिण्डारब्धघटशरावादिप्रत्युदाहरणेन प्रतिक्षिपन् वेद एव जागर्तीति नात्रप्रयतितव्यमस्तीति ॥

संग्रहकारिके ॥

अणुकारणता बहुवादिमता प्रतितिष्ठति तर्क इहेति मुधा ।
तदवान्तरभेदकथाकलहक्षपितश्श्रुतिसीम्नि न स प्रभवेत् ॥

अल्पान्महत्त्स्यान्महतो नाल्पमित्येष वादिनां ।
श्वराहनयः क्षिप्तः श्रुत्या दृष्टान्तवर्णनात् ॥
इति शिष्टापरिग्रहाधिकरणम् ॥४॥

---

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥

पूर्वाधिकरणस्यातिदेशाधिकरणत्वात् तद्विहाय तन्मूलाधिकरणेन सङ्गतमिदमधिकरणम् । तत्र हि 'न तु दृष्टान्तभावा'दिति सूत्रेण शरीरगतबालत्वयुवत्वादीनां शरीरिण्यप्रसङ्गं दृष्टान्तीकृत्य चिदचिच्छरीरकं ब्रह्मेति तद्गतदोषाणां ब्रह्मण्यप्रसक्तिरुक्ता । साऽनुपपन्ना । जीववच्छरीरित्वे तत्कृतसुखदुःखभोगप्रसक्तेरित्याक्षिप्यते । प्रथमेऽध्याये 'सम्भोगप्राप्तिरिति चेन्न वैशेष्या'दिति सूत्रेण परस्यास्मदादिशरीरानुप्रवेशप्रयुक्ता सुखदुःखभोगप्रसक्तिर्निराकृता । यथा परगृहप्रविष्टस्यागृहस्वामिनो गृहसाकल्यवैकल्यप्रयुक्तहर्षविषादभाक्त्वं नास्ति एवं परस्यापीति । इह पुनः शरीरस्वामित्व प्रयुक्ता सा निराक्रियते । 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ती'ति श्रवणात् शरीरस्वामित्वे तत्कृतसुखदुःखभोगो न निवारयितुं शक्य इति पूर्वः पक्षः । सिद्धान्तस्तु—

यथाऽपराधिनमपराधानुगुणं क्लेशयितुं तदर्थं कारागृहं निर्माय तत्क्लेशनार्थं स्वयमपि तत्र प्रविष्टस्य स्वतन्त्रस्य तत्कृतक्लेशभाक्त्वं न भवति, एवं परस्यापि । 'नहवै सशरीरस्ये'त्यादिश्रुतिरपि स्वकर्मोपार्जितशरीरविषया । न तु शरीरस्वामिमात्रविषया । अन्तर्यामिब्राह्मणे— 'यस्य पृथिवी शरीर' मित्यादिना परस्य पृथिव्यादिशरीरस्वामित्वमुक्त्वा तत्तदभिमानिदेवतावत् तत्कृतसुखदुःखभाक्त्वशङ्कानिरासायैव प्रतिपर्यायं 'एषत आत्माऽन्तर्याम्यमृत' इत्यमृतत्ववचनादिति ॥

संग्रहकारिके ॥

यदि वर्ण्येत चिदचिच्छरीरं ब्रह्म कारणम् ।
तदा शरीरिणोऽस्य स्यात् भोक्तृत्वं सुखदुःखयोः ॥

मैवं कर्मकृतं तन्न शरीरकृतं ततोऽस्य तन्न भवेत् ।
राजानुग्रहनिग्रहवशवर्तित्वं यथा राज्ञः ॥
इति भोक्त्रापत्त्यधिकरणम् ॥५॥

---

**तदनन्यत्वमारम्भणशब्दादिभ्यः ॥१५॥**

**भावेचोपलब्धेः ॥ १६ ॥**

**सत्वाच्चापरस्य ॥ १७ ॥**

**असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेश्शब्दान्तराच्च ॥ १८ ॥**

**पटवच्च ॥ १९ ॥**

**यथा च प्राणादिः ॥ २० ॥**

विलक्षणत्वाधिकरणे कारणात् ब्रह्मणः कार्यस्य जगतो वैलक्षण्येऽप्यनन्यत्वं 'असदिति चेन्न प्रतिषेधमात्रत्वा' दिति गुणसूत्रोक्तं कुण्डलहिरण्यन्यायेन सांख्यंप्रत्युपपादितम् । इदानीं वैलक्षण्ये सत्यनन्यत्वमयुक्तम् । वैलक्षण्यस्य भेदव्याप्तत्वात् । अत एव कुण्डलहिरण्ययोरप्यनन्यत्वमसिद्धम् । सर्वत्र कार्यकारणयोर्बुद्धिशब्दान्तरादिभिर्भेदावश्यम्भावादिति वदतो वैशेषिकस्य मतमास्थायानन्यत्वमाक्षिप्य समाधीयत इति सङ्गतिः । तत्रैवं पूर्वपक्षः– अनन्यत्वे ब्रह्मणो जगत्कारणत्वं न संभवति । लोके कार्यकारणभूतानां घटमृत्पिण्डादीनां बुद्धिशब्दान्तरादिभिः कार्यकारणभावस्य भेदव्याप्तिनिर्धारणात् । न हि मृत्पिंडे घटाकारा घटे वा पिंडाकारा बुद्धिरुदेति । न च घटशब्दो मृत्पिंडे पिंडशब्दो वा घटे प्रयुज्यते । न च पिंडाकारो घटे पृथुबुध्नोदराकारो मृत्पिंडेवाऽस्ति । न च मृत्पिंडेनोदकाहरणं घटेन वा कुड्यनिर्माणं क्रियते । न च तंतुष्विव पटे बहुत्वं. पट इव तंतुष्वेकत्वं वाऽस्ति । न च घटस्येव मृत्पिंडस्य दण्डचक्रादि कारणम् , मृत्पिंडस्येव घटस्य जलसंयोजनपूर्वकमर्दनं वा कारणं भवति । न चोत्तरकाले

मृत्पिंडः पूर्वकाले घटोवाऽस्ति । न च पूर्वकाले घटादिदर्शनमुत्तरकाले मृत्पिंडदर्शनं वाऽस्ति । तस्माद्बुद्धिशब्दादिभेदात् कार्यकारणयोर्भेद एष्टव्यः। एकस्मिन्नेव शरीरे बाल्ययौवनाद्यवस्थाभेदेनेव एकस्मिन्नेव मृद्द्रव्ये पिंडघटावस्थाभेदेन बुद्धिशब्दान्तरादय उपपद्यन्त इति चेत् न। अवस्थानामनित्यतायामसत्कार्यवादापत्तेः, अनित्यानामवस्थानां प्राक्सता कारणेनानन्यत्वासम्भवात् कार्यकारणानन्यत्वसिद्धांतभङ्गापत्तेश्च । तासामपि नित्यतायां बुद्धिशब्दान्तरादिव्यवस्थित्यसम्भवात् दण्डचक्रादिकारणकलापवैयर्थ्यप्रसङ्गाच्च । ननु मृदः पिण्डतादशायामनभिव्यक्ता घटावस्था, अभिव्यक्तैव सा बुद्धिशब्दान्तरादिभाजनं, अभिव्यक्त्यर्थश्च दण्डचक्रादिकारणकलापः। न च तथा सति मृत्पिण्डगतघटावस्थाभिव्यक्त्यर्थेन दण्डचक्रादिव्यापारेण तद्गतकरककपालमणिकमल्लकाद्यवस्थानामप्यपवरकगतघटाभिव्यक्त्यर्थमारोपितेन प्रदीपेन तद्गतकरकादीनामिवाभिव्यक्तिप्रसङ्गः। नैल्योत्पलत्वयोः प्रदीपप्रभयोत्पलत्वस्यैवाभिव्यक्तिः । कूपजलस्य कूपान्तरवस्थितिसमये जलत्वशौक्ल्ययोर्जलत्वस्यैवाभिव्यक्तिरित्यादिव्यवस्थादर्शनेन तद्वदिहापि यथादर्शनमभिव्यङ्ग्याभिव्यञ्जकभाववैचित्र्योपपत्तेरिति चेत्—मैवम्। अभिव्यक्तावपि नित्यत्वानित्यत्वविकल्पे पूर्वोक्तदोषानातिप्रसक्तेः। किंच केयमभिव्यक्तिः, ज्ञानं चेत्, तदा दण्डचक्रादिमेळनस्य घटज्ञानकारणत्वापत्त्या तस्मिन्नसति क्वचिदपि घटज्ञानोदयो न स्यात्। आवरणाभिभवश्चेत् तेन किमावरणमभिभूयते? पूर्वं मृदिस्थिता पिंडावस्थेति चेत्—न। तथा सति घटध्वंसकमुद्गरपातानंतरमपि घटावस्थायाः प्रतीतिप्रसङ्गः। तदावरणभूतायाः पिण्डावस्थायास्तिरोहितत्वात्। ननु तदानीं मुद्गरपाताभिव्यक्ता कपालावस्था तदावरणं, स्वकारणाभिव्यक्तायाः कस्याश्चित् कार्यावस्थायाः तद्गतसकलकार्यावस्थांतरावरणत्वाभ्युपगमात् । न च तथा सति कपालेषु कदाचित् घटकारणमेळने घटावस्थाभिव्यक्तिप्रसङ्गः। इष्टापत्तेः। कपालानि चूर्णीकृत्य जलमृदन्तरसंयोजनमर्दनव्यापारैर्मार्दवं प्रापय्य दण्डचक्रादिमेळने घटाभिव्यक्तिदर्शनात्। न च दग्धपटकारणानां पुनः पट-

भावो न दृश्यत इति शङ्कनीयम् । तद्भस्मनां क्षितितलपतितानां तत्क्षिति-प्ररूढकार्पासतरुफलपरिणतौ क्रमेण तेषां पटभावाभिव्यक्तिदर्शनादितिचेत्—नैवं। एवं घटाद्यवस्थानां पिण्डाद्यवस्थास्वपि सद्भावस्य तदानीं तदप्रतीत्यर्थं प्रतीयमानपिंडाद्यवस्थानां तदावरणत्वस्य च कल्पने कल्पकाभावात् यथानुभवमवस्थानामागन्तुकत्वेन व्यवस्थित्युपपत्तेः । अन्यथा कदाचित् कस्याश्चिदेवावस्थाया अनुभवः, नावस्थान्तराणामित्यनुभवाननुभवव्यवस्थाया अप्यनुपपत्तेः । न ह्यभिव्यक्तिरनुभवस्वयंवरलभ्यः, येन दंडचक्रादिसमवधानात्पूर्वं पिंडावस्थाया एवानुभवः, तदनंतरं घटावस्थायाएव। ततो मुद्गरपातानंतरंकपालावस्थाया एवेत्यादिव्यवस्था सिध्येत्। न च जलसंयोजनमृण्मृदुकरणादिकं दण्डचक्रादिकं मुद्गरपातनादिकञ्च पिंडघटकपालावस्थानामनुभवेषु वा तत्तादितरावस्थानामननुभवेषु वा करणानीत्युक्त्या तथा व्यवस्थानिर्वाहः । उदाहृततत्तत्कारणसमवधानेष्वतीतेष्वपि पिंडाद्यवस्थानामनुभवस्य तत्तत्प्रतिद्वंद्विव्यवस्थानामननुभवस्यचानुवृत्तिसत्त्वात् । तस्माद्यथानुभवं पूर्वं पिंडावस्थैव, मध्ये घटावस्थैव, ततःकपालावस्थैवेति व्यवस्थैवाङ्गीकर्तुं युक्ता । तथा सत्यवस्थानामागन्तुकत्वेनासत्कार्यवादः प्रसज्यत इति तत्परिहारार्थमिदंकल्प्यत इति चेत्, किमभिव्यक्तीनामागन्तुकत्वे स न प्रसज्यते, अभिव्यक्तीनामपि नित्यत्वे तु कथमपि त्वदुक्तव्यवस्थासिद्धिः । एवमवस्थानां तत्तदभिव्यक्तीनां वाऽऽगन्तुकत्वेवासत्कार्यवादस्याप्रतिक्षेप्यत्वस्थितौ द्रव्यमात्रे सत्कार्यवादाभ्युपगमस्य निष्प्रयोजनत्वात्। कुलालेन घटः कृतः, कलादेन कुंडलं कृतमिति कर्तृकार्ययोरिव मृत्पिंडेन घटः कृतः सुवर्णेन कुण्डलं कृतमिति समवायिकारणतत्समवेतकार्ययोरप्यबाधितभेदव्यवहारदर्शनात् कार्यकारणयोरवस्थाभेदवद्द्रव्यभेद उपगन्तुंयुक्तः। 'मृद्घटस्सुवर्णं कुण्डल'मित्यभेदव्यवहारेण भेदव्यवहारो बाधित इति चेत् न । मृत्त्वसुवर्णत्वयोरवयवावयविवृत्तिजातित्वेन तथा व्यवहारोपपत्त्या तेन भेदव्यवहारबाधनायोगात् । अत एव यत्रावयववृत्तिस्तन्तुत्वादिजातिर्नावयविपटादिवृत्तिः, न तत्र तन्तवः पट इत्यादिव्यवहारः । तस्मात्

सहावस्थाभिः कार्यकारणद्रव्ययोर्भेद एव युक्त इति लोके कार्यकारणभेद-नियमदर्शनात् जगद्ब्रह्मणोरनन्यत्वे ब्रह्मणोजगत्कारणत्वासम्भवात् जग-त्कारणे ब्रह्मणि समन्वय इत्येतन्नघटत इति एवंप्राप्ते सिद्धांतः—

तदनन्यत्वं परमकारणाद्ब्रह्मणोऽनन्यत्वमेव। जगतः तदुपपादयद्भ्यः आरम्भणशब्दादिभ्यः । तथा च छान्दोग्ये- 'श्वेतकेतुर्हारुणेय आस तं ह पितोवाचे' ति प्रस्तुत्य 'श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुली-नोऽननूच्य ब्रह्मबन्धुरिव भवती' ति पित्रा नियुक्तस्य तस्य गुरुकुलवासं प्रतिनिवृत्तिश्च 'सहद्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः पुनरेयाये' त्युक्त्वा तस्य वेदाभ्यासमूलमवलेपं पश्यतातमवलेपमपनीयतस्यब्रह्मजिज्ञासामुत्पिपाद-यिषता पित्रा स इत्थं पृष्ट इत्युक्तम्।'स्तब्धोस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मिति।येन श्रुतेन मतेन विज्ञातेन चेत्यर्थः। 'आत्मनि खल्वरे दृष्टे श्रुते मतेविज्ञाते इदं सर्वं विदितं भवती'ति श्रुत्य न्तरात् । एवं कृत्स्नस्य जगतो ब्रह्मैककारणकत्वं कारणात् कार्यस्यानन्यत्वं च हृदि निधाय ब्रह्मविज्ञानेन सर्वविज्ञाने प्रतिज्ञाते सति तदभिप्रायमजा-नता पुत्रेण कथमन्यविज्ञानेनान्यद्विज्ञातं भवतीति मन्यमानेन 'कथन्नु भगवस्स आदेश' इति पृष्टे पिता स्वप्रतिज्ञातमर्थमुपपादयितुं कारणात् कार्यस्यानन्यत्वे लौकिकदृष्टान्तमुवाचेति वर्णितम्- 'यथा सोम्यैकेन मृत्पिं-डेन सर्वं मृण्मयं विज्ञातं स्या' दिति। यथा एकमृत्पिंडारब्धघटशरावाद-यस्तदनतिरिक्तद्रव्यत्वात् तज्ज्ञानेन ज्ञाता भवन्तीत्यर्थः । अत्र वैशेषिक-प्रक्रियया कारणात्कार्यस्य बुद्धिशब्दान्तरादिभिर्द्रव्यान्तरत्वमाशंक्य लोक-प्रतीत्यैव कार्यकारणानन्यत्वमुपपादयितुं वाक्यशेषः 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति। अस्यार्थः– आरभ्यते आलभ्यते स्पृश्यत इत्यारम्भणम् । 'यत्पर्यपश्यत्सरिरस्य मध्य' इतिवत् रलयोरभेदाद्रेफः। आलम्भ इह स्पर्शः । 'आलम्भस्स्पर्शहिंसयो'रिति हि कोशकाराः। 'कृत्य-ल्युटो बहुळ' मिति कर्मणि ल्युट् । वाचा– 'घटेनोदकमाहरे' त्यादिवा-क्पूर्वकोदकाहरणादिव्यवहारेण हेतुनेत्यर्थः । वाक्पदेनाजहल्लक्षणया व्यव-

हारस्यापि संग्रहः । वाचेति हेतौ तृतीया, अध्ययनेन हेतुना वसतीति-वत् प्रयोजनस्य हेतुत्वविवक्षया प्रयोजनार्था । वाक्पूर्वकव्यवहारसिद्ध्यर्थं मृद्द्रव्येणैव पृथुबुध्नोदरत्वादिविकारस्संस्थानविशेषः तत्प्रयुक्तश्च घट इति नामधेयं स्पृश्यते । 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या' मिति विकारनामधेयोभयवर्तिन आरम्भणशब्दस्य नपुंसकशेषतैकवचनञ्च । उदकाहरणादिव्यवहारविशेषसिध्यर्थं मृद्द्रव्यमेवावस्थांतरनामधेयांतरभाग्भवति । अतो घटाद्यपि मृत्तिकेत्येव सत्यं प्रामाणिकं न तु द्रव्यांतरत्वेनेति । 'आरम्भणशब्दादिभ्य' इत्यादिशब्देन 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं, तदैक्षतबहुस्यांप्रजायेयेती' त्यादयः कार्यकारणयोर्जगद्ब्रह्मणोरनन्यत्वप्रतिपादकाश्शब्दागृह्यंते । एवञ्च यद्यपि बालस्थविररीत्या बुद्धिशब्दान्तरादयोऽवस्थाभेदेनेव घटरुचकादिरीत्या द्रव्यभेदेनाप्युपपद्यन्ते । द्रव्यभेद एव चात्यन्तसामञ्जस्यम् । तथाऽपि कार्यकारणानन्यत्वे मृद्घटादिकं दृष्टांतयंत्या श्रुत्याऽवस्थाभेद एव दर्शित इति अवस्थाभेदकृता एव बुद्धिशब्दान्तरादय इत्युररीकरणीयम् । न चावस्थानामागन्तुकतायामसत्कार्यवादापत्तिर्दोषः । सत एव द्रव्यस्योत्पत्तिर्हि सत्कार्यवादः, न त्ववस्थानामप्यनागन्तुकत्वं । न च प्रागपि सतो द्रव्यस्योत्पत्त्यनुपपत्तिः । न ह्यभूत्वा भवनमुत्पत्तिरित्यभ्युपेयते । किं त्ववस्थान्तरोत्पत्तिरुत्पत्तिः, पूर्वावस्थाप्रहाणं नाश इति । एवं च एकमृत्पिंडारब्धेषु घटशरावादिष्वेकत्वावस्थाप्रहाणेनानेकत्वावस्थापत्तिः । सांद्रतंत्वारब्धे पटे अनेकत्वावस्थाप्रहाणेनैकत्वावस्थापत्तिः । अतो विरळतंत्वारब्धे पटे पटगतैकत्वावस्थापत्तावपि न तंतुसतस्तन्तुत्वस्येवाऽनेकत्वस्यापि न प्रहाणम् । किन्तु तन्तुत्वावच्छेदेनानेकत्वानुवृत्तिः, पटत्वावच्छेदेनैकत्वापत्तिरित्यादयोपि विशेषा यथादर्शनमनुसन्धेयाः । ननु 'मृत्तिकेत्येवसत्य' मिति श्रुत्या घटशरावादिकं मृत्तिकेत्येव प्रामाणिकम्, न तु द्रव्यांतरत्वेनेत्येवमर्थया कार्यकारणद्रव्यानन्यत्वे प्रमाणांतरमप्यादर्शितामिति व्याख्यातम्, तत् किं प्रमाणांतरमिति चेत्— प्रत्यभिज्ञाप्रत्यक्षमिति ब्रूमः । मृत्पिंडावस्थासद्भावेपि हि घ-

टशरावादिद्रव्यसद्भावः प्रत्यभिज्ञाप्रत्यक्षेणोपलभ्यते। इदं घटशरावादिकं सर्वं पूर्वाह्णे मृत्पिंड एवासीदिति पूर्वाह्णस्थित एक एव मृत्कूटः एतावद्घटशरावादिरूप आसीदिति च प्रत्यभिज्ञा दृश्यते। नन्विदं घटशरावादिकं सर्वं पूर्वाह्णे नासीदित्यपि लोके व्यवहारो दृश्यते। श्रुतावपि 'असदेवेदमग्र आसी' दिति प्राग्जगदसत्त्वं व्यपदिश्यते। कथं प्रत्यक्षश्रुतिभ्यां लोकवेदयोः कार्यकारणानन्यत्वव्यवस्थासिद्धिरिति चेत् उच्यते— पृथुबुध्नोदरादिस्थूलत्वविरोधिसूक्ष्मत्वं यद्धर्मान्तरं ततोऽयमसद्व्यपदेशः। न तु प्राक्सर्वथैवाभावात्। कुतःश्रुतौ वाक्यशेषात् 'इदं वा अग्रेनैव किंच नासी' दित्यत्र हि 'तदसदेव सन्मनोऽकुरुत स्या' मितीत्यसतो मनस्काराख्यमानससङ्कल्पप्रतिपादको वाक्यशेषश्श्रूयते। लोकेऽपि तत एवासद्व्यपदेश इति युक्तितोऽवगम्यते। न हि सर्वत्र तत्तद्विरोधिधर्मव्यतिरेकेणाभावोनाम कश्चिदस्ति। कल्पनीयाभाववत् तद्विरोधिनः क्लृप्तभावरूपधर्मांतरस्यैवाभावव्यवहारालंबनतोपपत्तावतिरिक्ताभावकल्पने गौरवात्। लोकवेदयोरसद्व्यपदेशप्रतिद्वन्द्विनश्शब्दान्तराच्च 'सदेव सोम्येदमग्र आसीत' 'इदं घटशरावादिकं पूर्वाण्हे मृदेवासी' दित्येवंरूपात्तथाऽवगम्यते। असद्व्यपदेशात् सद्व्यपदेशस्य कार्यकारणानन्यत्वपर्यवसायिनो युक्तिसाहित्येन बलवत्त्वात्। युक्तिर्हि विरोधिभावधर्मव्यतिरेकेणाभावनामकं वस्त्वन्तरं न कल्पनीयमिति प्रागुपन्यस्ता। यथा तंतव एव व्यतिषंगविशेषभाजः पटइति नामरूपबुद्धिभेदादिकं भजन्ते। नहि व्यतिषक्ततन्तुव्यतिरेकेण पटनामकमवयविद्रव्यान्तरमस्ति। तस्य रूपादिराहित्ये चाक्षुषत्वाद्यभावप्रसंगात्। रूपान्तरादिमत्त्वेऽवयवरूपव्यतिरेकेण अवयविनि रूपान्तरस्य गुरुत्वद्वैगुण्यस्य चोपलब्धिप्रसंगात्। एवं व्यतिषक्ततन्तूनामेवपटभाववत् एकस्यैव वायोश्शरीरे वृत्तिविशेषेण प्राणापानादिभाववच्च ब्रह्मण एव विचित्रचराचररूपजगद्भावोपपत्तेर्न वस्तुभेदः कल्पनीय इत्यनयापि युक्त्या सद्व्यपदेशभ्योबलवत्त्वमवधारणीयम्। एवञ्च 'सुवर्णेन कुंडलं कृत' मित्यादिव्यवहारोऽप्यवस्थाभेदकृतेनैव कार्यकारणभावेन उपपादनीयः। अन्यथा कुंडलस्य सु-

वर्णे तोलयित्वार्पिते सुवर्णकारेण कुंडलं कृत्वा द्विगुणगुरुत्वेन तोलयित्वा प्रत्यर्पणीयत्वप्रसंगात् । तस्मान्मृत्पिंडघटशरावादीनामनन्यत्वात् तद्दृष्टांतेन ब्रह्मजगतोरप्युपादानोपादेयभूतयोरनन्यत्वमिति ॥

संग्रहकारिका ॥

कार्याणां बुद्धिशब्दाकृतिफलगणनाहेतुकालादिभेदा-
द्भिन्नत्वंकारणेभ्यस्स्थिरमिति न दशाभेदतस्स्यात्स भेदः ।
एकस्यैव ह्यनेका समुदयति दशा हेतुभिः कालभेदात्
सत्वासत्वादिरूपात्तदिदमपि जगद्ब्रह्मणोऽनन्यदेव ॥

इति आरम्भणाधिकरणम् ॥६॥

---

**इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥२१॥**

**अधिकन्तु भेदनिर्देशात् ॥२२॥**

**अश्मादिवच्च तदनुपपत्तिः ॥२३॥**

ब्रह्मणस्स्वानन्यजगत्स्रष्टृत्वे तस्य हिताकरणादयो दोषास्स्युरित्याक्षेपिकी संगतिः पूर्वपक्षश्च— न च प्रसाधितेन मृत्पिंडघटशरावादिदृष्टांतेन ब्रह्मणस्सूक्ष्मचिदाचित्प्रपञ्चविशिष्टरूपेण कारणत्वं, स्थूलचिदचित्प्रपञ्चरूपेण कार्यत्वमिति ब्रह्मण एव कार्यकारणभावेनानन्यत्वमुच्यते, न तु ब्रह्मजगतोरिति वाच्यम् । ब्रह्मणस्सर्वकारणस्य स्वविशेषणे चिदचिदात्मके जगद्रूपकार्येऽपि कारणत्वस्यावश्यवक्तव्यत्वात् । ततश्च ब्रह्मणस्तेनाप्यनन्यत्वं वाच्यमिति सर्वज्ञं सर्वशक्तिकं ब्रह्म स्वाभिन्नत्वेन जीवं पश्यदपि तस्य हितरूपं जगन्नसृजति, अहितरूपमेव जगत्सृजतीति स्वस्यैव हिताकरणादिदोषः प्रसज्यते । अतस्स्वस्मादनन्यदेव जगद्ब्रह्म सृजतीत्येतन्नयुक्तमिति । राद्धान्तस्तु —

जीवादधिकं ब्रह्म ततो भिन्नमेव । 'सत्यकामस्सत्यसङ्कल्पः, ज्ञाज्ञौ द्वावजावीशनीशौ, सकारणं करणाधिपाधिपः, अस्मान्मायी सृजते विश्वमेत-

तस्मिंश्चान्यो मायया सन्निरुद्धः' इत्यादि भेदनिर्देशात्। अनन्यत्वश्रुतयस्तु अपृथग्भावविषयाः। पृथग्भूतप्रकारो हि ब्रह्मणश्चिदचिदात्मकप्रपञ्चः। 'सदेवे' त्यादिश्रुतौ अग्रे 'इदं सर्वसदेवासी' दिति सामानाधिकरण्यनिर्देशेन जगतस्सूक्ष्मतादशायां सच्छब्दनिर्दिष्टब्रह्मविशेषणत्वस्य 'तदैक्षत बहु स्यां प्रजायेये'ति ब्रह्मणो बहुभवनसङ्कल्पाद्युक्त्या। स्थूलतादशायां तद्विशेषणत्वस्य च प्रतिपादनेन जगतः कदापि ब्रह्मपृथग्भावो नास्तीत्यवगमात् मृद्घटशरावादिष्वप्यपृथग्भावरूप एवानन्यत्वे दृष्टान्तः। स्वाभिन्नात् स्वस्य कदापि पृथग्भावासंभवात्। न चानन्यत्वश्रुतयः 'सर्वं खल्विदं ब्रह्म तत्त्वमसी' त्याद्यावा मुख्याभेदविषयाः, भेदश्रुतयस्तु तत्तद्विशेषणभेदादौपचारिकभेदविषया इत्यस्त्विति वाच्यम्। तथासति प्रसक्तहिताकरणादिदोषस्यैव परिहारालाभादश्मकाष्ठलोष्टादिवदत्यन्तहेयगुणानां जीवानां निर्दोषकल्याणगुणैकतानब्रह्माभेदासंभवाच्च। तस्मात् '**अवस्थितेरितिकाशकृत्स्न**' इत्यादि सूत्रोक्तप्रकारेणानन्यत्वश्रुतय एवापृथग्भूतप्रकारप्रकारिभावविषया इत्येव युक्तमिति॥

संग्रहकारिका॥

एवं जीवा अपि नियमतस्तत्त्वमस्यादिवाक्या-
द्ब्रह्माभिन्ना इति तदहितां नैव कुर्वीत सृष्टिम्।
मैवं वाक्यं न तदभिदया भेदनिर्देशदृष्टे-
स्तत्स्थत्वेनत्विति हि कथितःकाशकृत्स्नीयपक्षः॥

इति इतरव्यपदेशाधिकरणम्॥७॥

---

## उपसंहारदर्शनान्नेतिचेन्नक्षीरवद्धि ॥२४॥
## देवादिवदपि लोके ॥ २५ ॥

सत्यसङ्कल्पत्वादिभेदनिर्देशादनन्यत्वश्रुतयस्संत्वपृथग्भावमात्रविषयाः। नैवं सत्यसङ्कल्पत्वेऽपि सर्वशक्तिमत्त्वेऽपि सहकारिसाहितस्य ब्रह्मणो

जगदुपादानत्वतत्स्रष्टृत्वश्रुतयस्समर्थयितुंशक्यन्ते । शक्तस्यापि सहकारिरहितस्याकार्यकरत्वादित्युत्थानादवांतरसङ्गतिः । पूर्वपक्षश्च– ' सदेव सोम्येदमग्र आसी ' दित्यवधारणेन प्राक्सृष्टेस्सर्वसहकारिशून्यं खलु ब्रह्म श्रूयते । तत्कथं जगत्कारणभावमश्नुवीत । न च सर्वशक्तिकत्वेन कश्चिद्विशेषः । घटाद्युत्पादनशक्तएव हि कुलालादिस्सहकारिणः अपेक्ष्यैवं घटादिकमुत्पादयति । एवं ब्रह्मापि सर्वकार्योत्पादनशक्तश्चेत्, तत्तत्कार्योचितानि सहकारीण्यपेक्ष्यैव तानि तानि कार्याणि जनयेत् । न हि कुलालो घटोत्पादनशक्तइति सहकार्यनपेक्षः तमुत्पादयति । अशक्तस्सहकारिषु सत्स्वपि न तमुत्पादयतीत्येव शक्तस्याशक्ताद्विशेषः । तस्मात् सहकारिरहितं ब्रह्म न कारणं भवितुमर्हतीति पूर्वपक्षः । राद्धान्तस्तु —

ब्रह्मणस्सहकारिराहित्येऽपि क्षीरस्य दधिभावापत्तिवत् देवर्षिप्रभृतीनां स्वस्वभोगसाधनस्रष्टृत्ववत् जगदुपादानत्वं तत्स्रष्टृत्वञ्च उपपद्यते । न च क्षीरस्य दधिभावापत्तौ पाकातंचने सहकारिणी स्तः । न च ब्रह्मणो जगदुपादानत्वे किञ्चित्सहकार्यस्ति । देवादीनाञ्च योगप्रभावासादितैश्वर्यतया भूतवशिनां स्वसङ्कल्पाकृष्टैर्भूतैस्स्रष्टृत्वमुपपद्यते । न तथेश्वरस्य नित्यसिद्धस्य भूतवशितापादको योगप्रभावोऽस्तीतिचेत्– मैवं । विनापि पाकातंचनाभ्यां चिरेण दधिभावो भवत्येव । अचिरेण दधिभावापत्त्यर्थं रसविशेषार्थञ्च तयोरपेक्षा । योगाभ्यासादैश्वर्यावाप्तिश्च श्वेताश्वतरोपनिषदादिमन्त्रार्थवादेभ्योऽवगन्तव्या । ब्रह्मणोपि सङ्कल्पमात्रेण स्रष्टृत्वे मन्त्रार्थवादास्संतीति न कश्चिद्विशेषः । किंच सर्वस्यापि सङ्कल्पमात्रेण स्वशरीरव्यापारयितृत्वं दृष्टम् । कृत्स्नञ्जगत् ब्रह्मणश्शरीरमिति तस्य जगद्व्यापारे न काचिदनुपपत्तिः ॥

संग्रहकारिका ॥

अग्रे सदेकं सहकारिशून्यं कथं ह्युपादानतया जगत्स्यात् ।
सङ्कल्पमात्रेण कथं च कुर्यात् क्षीरादिदेवादिवदित्यवेहि ॥

इति उपसंहारदर्शनाधिकरणम् ॥८॥

---

**कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥२६॥**

**श्रुतेस्तु शब्दमूलत्वात् ॥२७॥**

**आत्मनि चैवं विचित्राश्च हि ॥२८॥**

**स्वपक्षदोषाच्च ॥२९॥**

**सर्वोपेता च तद्दर्शनात् ॥३०॥**

**विकरणत्वान्नेति चेत्तदुक्तम् ॥३१॥**

यदि क्षीरदृष्टांतेन ब्रह्मणोजगद्भावापत्तिः, तर्हि कात्स्नर्येन क्षीरस्य दधिभाववत् ब्रह्मणोऽपि कात्स्न्र्येन जगद्भाव आपद्येतेति आक्षेपिकी सङ्गतिः। पूर्वपक्षस्तु— क्षीरं दध्याकारेणेव ब्रह्म कात्स्नर्येन जगदाकारेण परिणमते, उत अग्निसंयुक्तैकभागोजतुपिंडोमुद्रिकाद्युपयुक्तैकदेशेनेव तत्तत्कार्योपयुक्तैकदेशेन परिणमते। नाद्यः। कृत्स्नस्य जगद्भावापत्त्या ब्रह्मावशेषाभावप्रसङ्गात्। न च सूक्ष्मचिदचित्प्रपञ्चविशिष्टं ब्रह्म कारणं, स्थूलचिदचित्प्रपञ्चविशिष्टं ब्रह्म कार्यमिति पक्षे नब्रह्मानवशेषदोषप्रसङ्गः, कार्यरूपतया ब्रह्मावस्थानादिति वाच्यम्। इदानीं कारणरूपेणापि ब्रह्मणस्सत्त्वस्य वक्तव्यत्वात्। अन्यथा कारणस्य ब्रह्मणस्सार्वदिकसत्ताबोधकानां तत्साक्षात्कारोपायविद्याविधायकानांच वाक्यानामानर्थक्यप्रसङ्गात्। सर्वोपादानस्य ब्रह्मणश्चिदचिद्रूपविशेषणांशेऽपि कारणत्वस्य वक्तव्यतया तत्र कृत्स्नस्य ब्रह्मण एककार्यात्मना परिणामे कार्यान्तरात्मना परिणामः कारणब्रह्मावशेषश्च न स्यादिति दूषणस्य वज्रलेपायमानत्वाच्च। तस्मादाद्यः पक्षो न युक्तः। नापि द्वितीयः। निरवयवस्यैकदेशेन परिणामायोगात् सावयवत्वमिष्यतामिति चेन्न। 'निष्कळं निष्क्रियं शांत' मित्यादिनिरवयवत्वश्रुतिव्याकोपप्रसङ्गात्। तस्माद्ब्रह्म जगदुपादानमित्येतन्नयुक्तमिति ॥ सिद्धांतस्तु—

नैवं शङ्कावकाशोऽस्ति। निरवयवमेव ब्रह्म जगदाकारेण परिणमते। स्वयञ्च यथापूर्वं परिपूर्णमवतिष्ठत इति श्रुत्यैव मुखतः प्रतिपादनात्। न

च श्रुतिप्रतिपन्नोऽर्थः कुतर्केणोपनयमर्हति । 'नैषा तर्केण मतिरापनेये' ति श्रुतेः। ननु श्रुतिरपि ग्रावप्लवनादिवत् प्रमाणांतरविरुद्धं प्रतिपादयितुं नशक्नोतीति चेत्, न। ब्रह्मणश्शब्दैकबोध्यत्वेन तद्वैलक्षण्यात्। प्रत्यक्षादियोग्येह्यर्थे तद्विरुद्धं श्रुतिरपि न बोधयति । श्रुत्येकगम्यस्त्वर्थो यथाश्रुत्येव सिध्यति । न तु तद्विषयत्वायोग्येन प्रमाणांतरेण बाधितुं शक्यम्। न हि रूपसाधनाक्षमस्य श्रोत्रस्य तद्बाधकत्वमस्ति । किंच जीवात्मन्याचिद्धर्मविलक्षणाः कर्तृत्वभोक्तृत्वादयोऽभ्युपेयन्ते। एवं परमात्मनि चिदाचिद्धर्मविलक्षणा धर्माः कुतो न स्युः। लोकेऽग्निजलादयोऽपि औष्ण्यशैत्यादिभिर्विचित्रा दृश्यन्ते। न खलु ते परस्परदृष्टांतेन परस्परविलक्षणधर्मशून्यास्स्वीक्रियंते। न च 'जातिर्व्यक्तौ नांशेन वर्तते निरवयवत्वात्। नापि परिसमाप्य वर्तते। व्यक्त्यन्तरे तदभावप्रसङ्गा'दिति कृत्स्नैकदेशवृत्तिविकल्पेन जातेर्व्यक्तौ वृत्तिर्निराक्रियते। स्वपक्षे च सांख्यस्य तुल्यमिदं दोषापादनम्, निरवयवं प्रधानं कथमिव महदादिविचित्रकार्यारंभकमिति । सत्त्वरजस्तमांसि तस्यावयवास्सन्तीति चेन्न। प्रधानातिरिक्तानां तेषां तदवयवानामभ्युपगमे तत्त्वानां चतुर्विंशतिसंख्याविरोधात्, तेषामपि कृत्स्नैकदेशविकल्पेन महदहङ्काराद्यारंभकत्वायोगाच्च । परमाण्वादिकारणवादिनामपि कृत्स्नैकदेशसंयोगादिविकल्पैर्द्व्यणुकाद्यारंभायोगाच्च । तस्मात् कल्प्यमपि प्रधानं कृत्स्नैकदेशवृत्तिविकल्पागोचरं मन्यमानस्य श्रुतिसिद्धे ब्रह्मणि का तद्गोचरत्वप्रत्याशा। किंच श्रुतिवशादिव सर्वशक्त्युपेतत्वादपि ब्रह्मणो निरवयवस्यापि विचित्रजगदाकारेण परिणामो घटते। सर्वशक्त्युपेतं हि ब्रह्म। 'परऽस्य शक्तिर्विविधैव श्रूयत' इत्यादिदर्शनात्। अल्पशक्तिमतामपि प्रपञ्चान्तर्गतचिदचितामतर्कणीया विविधा वैचित्री दृश्यते। सर्वशक्तिमतस्सा कथं न भवेत्। ननु शक्तिमतामपि करणकळेबरापेक्ष एव शक्त्युन्मेषो दृष्टः। अतस्तदनपेक्षं सदपि सर्वशक्तिमत्त्वमध्ययनानपेक्षं धीशक्तिमत्त्वमिवाप्रयोजकमिति चेत – अत्रोत्तरमुक्तमेव। शब्दैकप्रमाणकं वस्तु यथाशब्दमेव ग्राह्यम्। न तु लोकदृष्टकारणविरहेण प्रत्याख्यातुं शक्यम्। तथैव च

श्रुतिः—'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुस्सशृणोत्यकर्णः। न तस्य कार्यं करणंच विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्यशक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रियाचे'ति। अतश्श्रुत्या श्रुतिदर्शितयुक्त्युपोद्बलितया निरवयवमपि ब्रह्म जगदाकारेण परिणमते, तथैव परिपूर्णमवतिष्ठते चेति युक्तमेव ॥

संग्रहकारिके ॥

कृत्स्नं यदि परिणमते ब्रह्म तदा नावशिष्येत ।
नांशेन निरंशत्वाद्विशिष्टपक्षेऽपि तुल्यमिदम् ॥
एतादृशाः प्रधाने परमाण्वादौ च दोषास्स्युः ।
न ब्रह्मणि श्रुतिशतप्रतिपन्ने विविधशक्तियुते ॥

इति कृत्स्नप्रसक्त्याधिकरणम् ॥९॥

---

## न प्रयोजनवत्त्वात् ॥३२॥

## लोकवत्तु लीलाकैवल्यम् ॥३३॥

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥३४॥

## नकर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यतेच ॥३५॥

## सर्वधर्मोपपत्तेश्च ॥३६॥

युक्त्युपोद्बलितश्रुत्या कृत्स्नप्रसक्त्यादिदोषनिराकरणेन ब्रह्मण उपादानत्वसमर्थनेऽपि स्रष्टृत्वसमर्थनं न संभवति। प्रेक्षावत्प्रवृत्तेः प्रयोजनवत्त्वनियमादित्युत्थानात्संगतिः । पूर्वपक्षस्तु— ब्रह्मणो जगत्सृष्टिस्स्वार्था परार्था वा । नाद्यः । अवाप्तसमस्तकामस्यापेक्षितप्रयोजनाभावाच्च । न च प्रेक्षावतामपि निष्प्रयोजना कंतुकक्रीडादिप्रतीतिर्दृष्टेति शंक्यम् । ततोऽपि क्रीडापराणां तात्कालिकानन्दसत्त्वात् । न च ब्रह्मणो जगत्सृष्टावपि तादृशं

प्रयोजनं कल्प्यम् । अवाप्तसमस्तकामत्वश्रुतिविरोधात् । नन्ववाप्तसमस्त-कामानामपि राज्ञां कौतुकक्रीडादिप्रवृत्तिर्दृश्यत इति चेत्–न । अवाप्तभोगा-न्तरप्रयुक्तसकलकामानामप्यनवाप्तकौतुकक्रीडानन्दार्थमेव तत्र प्रवृत्तेः । न चैवं ब्रह्मणि वक्तुं शक्यम् । किंच स्वप्रयोजनार्थं जीवान् संसारदुःखे निम-ज्जयतश्च ब्रह्मणो वैषम्यनैर्घृण्ये स्यातां । तल्लीला चासमञ्जाख्यसगरतनय-लीलाकल्पा स्यात् । एतेन परार्थासृष्टिरिति द्वितीयपक्षोऽपि निरस्तः । सृ-ष्टेः पारार्थ्ये हि सर्वान् सुखिन एव सृजेत् । पक्षपातरूपेण वैषम्येण कां-श्चित्सुखिनः कांश्चिद्दुःखिनश्च न सृजेत् । दुःखिनस्सृजतश्च नैर्घृण्यं प्रस-ज्यते । न च कर्मक्षपणेन रक्षितुमेव पापिनो दुःखं प्रापयति ब्रह्म, यथा व्रणिनो रक्षितुमेव व्रणदाहच्छेददुःखं वैद्यः प्रापयतीति वाच्यम् । व्रणदा-हादिकमकृत्वा व्रणशांतिं कर्तुमशक्तस्य वैद्यस्य दाहादिदुःखप्रापकत्वेऽपि सर्वशक्तिकस्य ब्रह्मणोदुःखमप्रापय्यापि रक्षितुं शक्तस्य तत्प्रापकत्वायोगात् । न च तत्तत्कर्माण्यपेक्ष्य विषमसृष्टिकर्तुः पक्षपातित्वनैर्घृण्यदोषौ न प्रसज्ये-तेइति वाच्यम् । 'सदेव सोम्येदमग्र आसी' दिति ब्रह्ममात्रावशेषत्वेन श्रु-तायामाद्यसृष्टौ कर्माभावेन तदानींतनविषमसृष्ट्या वैषम्यनैर्घृण्यप्रसङ्गानि-वारणात् । तस्माद्ब्रह्मणो जगत्सृष्टृत्वं न युक्तमिति ॥ सिद्धान्तस्तु—

सत्यं । प्रयोजनार्थैव प्रेक्षावत्प्रवृत्तिः । इहाप्यस्त्येव सृष्ट्या ब्रह्मणो लीलारूपं प्रयोजनं राज्ञ इव बालस्येव चाक्षद्यूतादिना, 'क्रीडा हरेरिदं सर्वं क्षरमित्युपधार्यतां । क्रीडतो बालकस्येव चेष्टास्तस्य निशामये' त्यादिभग-वत्पराशरवचनात् । न चैवं सति ब्रह्मणोऽवाप्तसमस्तकामत्वविरोधः । यद्य-देप्सति तत्तदाऽवाप्तुं सामर्थ्यं ह्यवाप्तसमस्तकामत्वं सार्वभौमादिसाधारणं, न तु सर्वदा सर्वकामावाप्तिमत्वम् । शीतोष्णादिकालभेदेन सुरनरतिर्यगा-दिजन्मभेदेन चार्थनीयानां कामानां युगपदवाप्तेः कस्यापीष्टत्वाभावात् । न च विषमसृष्ट्या वैषम्यनैर्घृण्यदोषापत्तिः, 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने' ति श्रुतेः । कर्मविशेषमूलं जगद्वैषम्यमीश्वरस्तदुत्पत्तौ निमित्त-

मात्रं साधारणकारणम् । यथा सस्योत्पत्तौ पर्जन्यस्साधारणकारणम् । तद्भूयोऽल्पत्वव्रीहियवत्वादिवैषम्यं क्षेत्रबीजादिविशेषकृतमित्यभ्युपगमात् । यथोक्तं भगवता पराशरेण– 'निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि । प्रधानकारणीभूता यतो वै सृज्यशक्तय' इति । सृज्यशक्तयस्सृज्यकर्माणि । एवं च ब्रह्मणः प्रजानां व्यवहारदर्शने तदीययुक्तायुक्तवचनानुसारेणानुग्रहविशेषं कुर्वतो राज्ञ इव न निरवद्यत्वहानिः । प्रत्युत विषमकर्मणामेकरूपसृष्टावेव युक्तायुक्तवादिनामेकरूपानुग्रहे व्यवहारद्रष्टुरिव तद्धानिस्स्यात् । न च सृष्टेःप्रागेकत्वावधारणात् तदा जीवानामप्यभावेन तत्कर्मणामभावश्शङ्कनीय इति वाच्यम् । जीवानां तत्कर्मप्रवाहाणाञ्चानादित्वेनैकत्वावधारणस्य पृथग्व्यपदेशार्हविभक्तनामरूपात्मकस्थूलरूपाभावाभिप्रायत्वात् । अतो जीवतत्कर्मणामनादित्वेन सत्वेऽप्यविभाग उपपद्यते । अनादित्वं जीवानां तत्सृष्टिप्रवाहाणाञ्च 'न जायते म्रियते वा विपश्चित्, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पय' दित्यादिश्रुतिषूपलभ्यते । विचित्रसृष्टिप्रवाहानादित्वेनैव तत्कारणविचित्रकर्मप्रवाहानादित्वमप्यवसीयते । तस्माज्जगदुपादानत्वतत्स्रष्टृत्वोपयुक्तानां सर्वेषां धर्माणां ब्रह्मण्युपपत्तेः प्रधानपरमाण्वादिष्वेव उक्तवक्ष्यमाणन्यायैस्तदनुपपत्तेः ब्रह्म जगतो मूलकारणमित्येतद्युक्तमेवेति सिद्धम् ॥

संग्रहकारिकाः ॥

नावाप्तव्यं किमपि फलमस्त्याप्तकामस्य सृष्ट्या
लीलाऽप्येवं जगति वलते नासमञ्जेतराणाम् ।
तत्पारार्थ्ये कथमपि सृजेन्नैव कस्यापि दुःखं
कर्मापेक्षा परिहृतिरपि व्यापिका नाद्यसृष्टेः ॥
राज्ञइव द्यूतकृतिः लीलेयं ब्रह्मणो जगत्सृष्टेः ।
कर्मापेक्षानियमान्नविषमता नापि नैर्घृण्यम् ॥
तच्चास्ति प्रळयेष्वपि संसारभुजामनादित्वात् ।
श्रुतिषु सदेवेत्यवधृतिरविभागार्हास्तदाऽतइति ॥

कारणतानिर्वाहो यैस्स्यात्सर्वेऽपि ते धर्माः ।
उपपद्यन्ते ब्रह्मणि तद्वैकल्यं प्रधानादौ ॥

इति प्रयोजनवत्त्वाधिकरणम् ॥१०॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजि-द्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे द्वितीयस्याध्यायस्य

प्र थ मः पा दः ॥

---

श्रीमते हयवदनपरब्रह्मणे नमः ॥

---

॥ श्रीः ॥

**रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च ॥ १ ॥**

**पयोऽम्बुवच्चेत्तत्रापि ॥ २ ॥**

**व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ३ ॥**

**अन्यत्राभावाच्च न तृणादिवत् ॥ ४ ॥**

**पुरुषाश्मवदिति चेत्तथाऽपि ॥ ५ ॥**

**अंगित्वानुपपत्तेश्च ॥ ६ ॥**

**अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात् ॥ ७ ॥**

**अभ्युपगमेऽप्यर्थाभावात् ॥ ८ ॥**

**विप्रतिषेधाच्चासमंजसम् ॥ ९ ॥**

प्रथमाध्यायप्रतिपादिते ब्रह्मणो जगत्कारणत्वे प्रधानपरमाणुकारण-वादिभिस्सांख्यवैशेषिकादिभिः केवलतर्कमवष्टभ्यापादितानि दूषणानीति प्रथमपादेन निराकृतानि । तत्रापि प्रणेतृगौरवेण तेषां तर्काणामुपादेयत्व-

शङ्कास्मृत्यधिकरणयोगाधिकरणाभ्यांनिराकृता। तत्तत्तर्कस्वरूपपर्यालोचनया तेषामुपादेयत्वशङ्का नविलक्षणत्वाधिकरणमारभ्य निराकृता। एवमाद्याधिकरणयोस्तृतीयादीनामष्टानामधिकरणानाञ्चावान्तरार्थभेदेऽपि ब्रह्मवादप्रतिक्षेपकतर्कनिराकरणार्थत्वेनैकार्थ्यं, अस्मिन्पादे शुष्कतर्कालम्बनास्सांख्यादिपक्षास्तथाभूतैरेव तर्कैर्दूष्यन्ते। अन्यथा प्रधानादिकारणत्वप्रतिष्ठापकानां परपक्षाणां तर्काभासमूलत्वं जानतां मन्दधियां तेषु प्रामाणिकत्वशङ्कया ब्रह्मवादश्रद्धा शिथिलीभवेत्। एवं स्वपक्षस्थापनार्थः प्रथमपादः। परपक्षप्रतिक्षेपार्थोऽयं पादः। स्वपक्षस्थापनस्याभ्यर्हितत्वात् प्रथमं कृतमिति तदानन्तर्यमस्य। यद्यपि तृतीयचतुर्थपादयोरपि कार्यगोचरश्रुतिविरोधपरिहारेण स्वपक्षस्थापनं क्रियते, तथाऽपि कारणविषयत्वेन प्रथमाद्वितीयपादयोरैकार्थ्येन अवान्तरसङ्गतिः। तत्र वैदिकानुमतसत्कार्यवादाद्यभ्युपगमेन सांख्यमतस्योपादेयत्वसम्भावनास्पदत्वातिरेकात् प्रथमं तन्निराकरणं क्रियते। सांख्याः स्वतन्त्रतर्कैः स्वमतं प्रसाध्य स्वमतानुगुण्येन श्रुतिवाक्यानां नयनं कुर्वन्ति। तैः कृतनयनमीक्षत्याद्यधिकरणेषु निराकृतम्। इदानीं तदीयास्स्वतन्त्रतर्का निराक्रियन्त इति न पौनरुक्त्यम्। एषा सांख्यानां प्रक्रिया-'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त। षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः'। तत्र मूलप्रकृतिः सत्त्वरजस्तमोगुणरूपाणां द्रव्याणां साम्यावस्था। साचैका स्वयमचेतना सकलचेतनभोगापवर्गार्था नित्या सर्वगता च स्वयं प्रकृतिरेव न कस्यचिद्विकृतिः। महदाद्याः प्रकृतेर्महान् महतोऽहङ्कारः अहङ्कारात् पञ्च तन्मात्राणि शब्दस्पर्शरूपरसगन्धात्मकानीत्येतास्सप्त स्वस्वकार्यापेक्षया प्रकृतयः स्वस्वकारणापेक्षया विकृतयश्च। आकाशादीनि पञ्च महाभूतानि श्रोत्रादीनि पञ्च ज्ञानेन्द्रियाणि वागादीनि पञ्च कर्मेन्द्रियाणीति षोडशको गुणो विकृतिरेव न कस्यचित्तत्त्वान्तरस्य प्रकृतिः पुरुषस्त्वपरिणामित्वान्नकस्याचित्प्रकृतिः। नित्यत्वान्नकस्यचिद्विकृतिः। निर्धर्मकश्चैतन्यमात्रवपुः सर्वगतः प्रतिशरीरं भिन्नश्च। निर्विकारत्वान्नकर्ता, नापि भोक्ता। एवंभूतेऽपि तत्त्वे मूढाः प्रकृतिपुरुषसन्निधि-

मात्रेण पुरुषस्य चैतन्यं प्रकृतावध्यस्यन्ति। तेन चैतन्ययोगात् कर्तृशक्ति-मत्त्वाच्च ज्ञातृत्वम्। प्रकृतेरेवान्तःकरणरूपापन्नायाः तस्याश्च कर्तृत्वं पुरुषेऽध्यस्यन्ति। एवमन्योन्याध्यासादहंकर्ता अहंभोक्तेत्यभिमानात्मकोभोगस्त-त्वज्ञानादपवर्गइत्येवं पञ्चविंशतिस्तत्वानीति। तत्र सकलमूलकारणत्वाभिमत-स्वतन्त्रप्रधानानुमाननिरसनेन तन्मतं सर्वं निरस्तं भवतीति तदिह निरस्यते। इदमिह तेषामनुमानं—सर्वं कार्यं सुखदुःखमोहात्मकद्रव्यप्रकृतिकं, तत्समन्वि-तत्वात्। सामान्यव्याप्तौ घटादिवदिति। यद्वा सर्वं कार्यं सत्प्रकृतिकंकार्यत्वात्। विशेषव्याप्तौ घटवदिति। आद्यानुमाने सुखदुःखमोहात्मकानि द्रव्याणि का-र्याणां कारणत्वेन सिध्यंति सत्वरजस्तमांस्येव पर्यवस्यंति, तेषान्तथात्वात्। उ-क्तंतत्वसंग्रहे—'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्था' इति। अय-मर्थः— सत्वरजस्तमोगुणाः प्रीत्यप्रीतिविषादात्मकाः क्रमात्सुखदुःखमोहा-त्मकाः क्रमादेव प्रकाशप्रवृत्तिनियमप्रयोजनाश्च। स्वच्छं सत्वं प्रकाशयति, रजोगुणः प्रकाशकार्ये सत्वं प्रवर्तयति, लघोस्सत्वगुणस्य चलनस्वभावेन र-जसा सर्वत्र प्रवर्तने प्रसक्ते यथाकार्यं गुरुस्तमोगुणो नियच्छतीति। नचा-द्यहेतोरसिद्धिः। कार्याणां सुखदुःखमोहान्वितत्वस्य लोकसिद्धत्वात्। त-थाहि— घटो येन प्राप्यते तं प्रति सत्वगुणोद्भवात् घटस्सुखात्मकोभवति। यदीयस्सोन्येनापह्रियते तं प्रति रजोगुणोद्भवात् दुःखात्मकोभवति। यस्य तस्मिन्नुपेक्षया दर्शनमेव नोदेति तं प्रति तमोगुणोद्भवात् मोहात्मकोभवति। 'मुहवैचित्त्य' इतिधातुः। नच गुणानां पुरुषभेदव्यवस्थयोद्भवे विनिगम-नाविरहः। तत्तत्पुरुषभोगरूपप्रयोजनवशादुद्भवासिद्धेः। तद्यथा—सत्वं रज-स्तमसी कञ्चित्प्रति कदाचिदभिभूय शान्तां स्ववृत्तिं लभते, एवं रजस्सत्व-तमसी अभिभूय घोरां स्ववृत्तिं, तमः सत्वरजसीअभिभूय मूढां स्ववृत्तिमिति। नच द्वितीयानुमानस्य परमाण्वादिकारणकत्वेनार्थान्तरं, लाघवादेककारण-कत्वसिद्धेः। नच तथापि ब्रह्मप्रकृतिकत्वेनार्थान्तरं जडं सुखदुःखमोहात्मकं कार्यजातं प्रत्यतथाभूतस्य कारणत्वेन सिध्यनवकाशादिति। एवंरूपस्य साङ्ख्यानुमानस्य दूषणानुमानमुच्यते। प्रधानं न जगद्रचनायां समर्थम्।

अचेतनत्वे सति चेतनानधिष्ठितत्वात् । यदेवं तदेवम् । यथा चेतनानधिष्ठितं मृद्दार्वादिकम् । न च व्याप्त्यसिद्धिः, चेतनानधिष्ठितस्य कार्यारम्भकत्वानुपपत्तेः, चेतनाधिष्ठितस्यैव कार्यारम्भप्रवृत्तेस्सर्वत्र दर्शनाच्च । ननु सिद्धान्ते पक्षासिद्धिः । न च 'प्रधानक्षेत्रज्ञपतिर्गुणेश' इति श्रुतिसिद्धं प्रधानं सिद्धान्तेऽप्यस्तीति वाच्यम् । तस्यानुमानगम्यत्वाभावेन कर्मव्युत्पन्नसूत्रानुमानपदनिर्देश्यत्वायोगात् । साध्यस्य च बाधः, प्रधानस्य सिद्धान्तेऽपि जगद्रचनासामर्थ्याभ्युपगमात् । हेतोश्चासिद्धिः, तस्य सिद्धान्ते चेतनाधिष्ठानसत्त्वादिति चेत्-- सत्यं । परप्रक्रियया परो दूषणीय इति परसिद्धं पक्षादिकं परिगृह्य इदमनुमानमुक्तम् । यद्वा परानुमानस्य प्रतिकूलतर्करूपं दूषणानुमानमुक्तम् । यदि प्रधानं अचेतनत्वेसति चेतनानधिष्ठितं स्यात्, जगद्रचनायामसमर्थं स्यात् । अथवा हेतोर्विशेष्यांशस्य साध्ये प्रतियोगिविशेषणतयाऽन्वयः, ततश्च प्रधानं न चेतनानधिष्ठितं कार्यजनकं, अचेतनत्वात् घटगृहादिजनकमृद्दार्वादिवदित्यनुमानशरीरम् । नचानुमानिकप्रधानानभ्युपगमादाश्रयासिद्धिः । महदादिकं सप्रकृतिकं कार्यत्वाद्घटवदित्यनुमानस्य विरोधाभावेन सिद्धान्तेऽभ्युपगन्तुं शक्यत्वात्, साध्ये स्वातंत्र्याप्रवेशात्, तस्येश्वरपारतंत्र्यमात्रे श्रुत्यपेक्षणात् । ननु अचेतनस्य चेतनाधिष्ठितस्यैव प्रवृत्तिरिति न नियमः, वत्सवृध्यर्थं धेनुगतस्य क्षीरस्य स्वयमेव प्रस्रवदर्शनात् । सस्यवृध्यर्थं वारिदमुक्तस्य जलस्य स्वयमेव निस्सरणदर्शनात् । एवं पुरुषस्य भोगापवर्गार्थं चेतनानधिष्ठितस्यापि प्रधानस्य प्रवृत्तिसम्भवादिति चेन्न । क्षीरजलयोरप्यचेतनत्वाच्चेतनाधिष्ठानाभावे प्रवृत्त्यसम्भवतौल्येन पक्ष इव पक्षतौल्येऽपि व्यभिचाराभावात् । एतेन धेन्वाद्युपयुक्ततृणादेः क्षीरादिभावापत्तिरपि व्याख्याता । तत्रापि चेतनाधिष्ठानावश्यम्भावेन पक्षतौल्यात् । अन्यथा चेतनविशेषसङ्कल्पस्य नियामकस्याभावे अनडुहाद्युपयुक्तस्यापि तृणादेः क्षीरादिभावप्रसङ्गात् । न च धैनवजाठराग्निसंयोगे कश्चित्पाके विशेषः । अग्निसंयोगमात्रस्य पाकहेतुत्वात्, तस्य अनडुहादिजठरसंयोगेऽप्यविशेषात् । पाचकसङ्कल्पविशेषात्

पाकविशेषस्तु लोके दृष्टः । ननु अप्रयोजकमिदं चेतनाधिष्ठानानुमानं, यथा प्रवृत्तिशक्तियुक्तोऽन्धः दृक्छक्तियुक्तपंगुसन्निधानात्प्रवर्तते, यथा च अयस्कान्तमणिसन्निधानादयः प्रवर्तते, तथा चैतन्यवपुषः पुरुषस्य सन्निधानात् प्रधानस्य प्रवृत्त्युपपत्तेरिति चेत्, एवं दृष्टान्तोपादानेऽपि प्रधानस्य प्रवृत्त्यसम्भवरूपदोषस्तदवस्थः । अस्ति हि पंगोर्गमनशक्तिविकलस्य अंधेनोह्यमानस्य स्वयं मार्गदर्शनं, वोढारमन्धं प्रति तदुपदेश इति च व्यापारः, अयस्कांतमणेरप्ययस्समीपागमनं तदभिमुखीभावइत्यस्ति व्यापारः । पुरुषस्य तु निष्क्रियस्य न तादृशः कश्चिद्व्यापारः । अयःप्रवृत्तावपि चेतनाधिष्ठानावश्यम्भावान्नव्यभिचारोऽपि । तस्मान्निर्दोषं दूषणानुमानम् । सांख्यानुमानमेव च प्रतिकूलतर्कपराहतम् । पुरुषसन्निधानमात्रेण प्रधानस्य परिणामित्वे सर्गव्यतिरेकः प्रळयः कदाऽपि न स्यात्, नित्यस्य पुरुषसन्निधानस्य सर्वदाऽप्यविशिष्टत्वादिति । तस्मादधिष्ठातुरीश्वरस्यैव सङ्कल्पविशेषास्सर्गप्रळयनियामका इत्यभ्युपेयम् । न च धर्माधर्मावेव तन्नियामकौ स्यातामिति वाच्यम् । धर्माधर्मयोः परमपुरुषाराधनतद्विपर्ययरूपतयैव सकलश्रुतिप्रसिद्धयोस्तदनभ्युपगतावात्मलाभाभावात् । यदि च गुणानां कदाचित्साम्येनावस्थानमभ्युपेत्य तदा गुणानामुत्कर्षापकर्षनिबन्धनाङ्गाङ्गिभावाभावात् तन्निमित्ता जगत्प्रसूतिर्नास्तीति प्रळय उपपाद्यते, तदा प्रळयावस्थायां साम्येनावस्थितानां गुणानां क्षोभकपुरुषव्यापाराभावेन स्वयमेव वैषम्यावस्थां प्राप्तुमक्षमाणामङ्गाङ्गिभावानुपपत्तेः कदाचिदपि जगत्सर्गो न स्यात् । यदि सुखदुःखमोहात्मकवैषम्यावस्थं जगत् दृष्ट्वा यथाकार्यं वैषम्यावस्थापन्नमेव त्रिगुणमनुमीयते, तदा धर्मिग्राहकमानासिद्धाया वैषम्यावस्थायास्सदानुवृत्तेस्सदासर्गएव स्यात् । यद्युच्येत त्रिगुणं न वैषम्यावस्थं नापि साम्यावस्थमनुमीयते, येन सदा सर्गः प्रळयो वा स्यात् । किं तु अनादिसृष्टिप्रळयप्रवाहमूलद्विविधसंस्कारानुवृत्तिसद्भावात्तत्तत्संस्कारोद्बोधानुसारतः साम्यवैषम्यभागुभयस्वभावमनुमीयत इति । नैतदपि युक्तम् । अन्धस्य मार्गोपदेशकपंगुसन्निधानात् मार्गज्ञातृत्ववत् प्रधानस्य निर्व्यापार-

पुरुषसन्निधानात् चिच्छायापत्त्या ज्ञातृत्वासम्भवस्य उक्तत्वात्, तदसम्भवेचाचेतनस्य चेतनाधिष्ठानं विना प्रवृत्त्ययोगात् । किं च प्रधानाभ्युपगमे यदि प्रयोजनं किंचित्स्यात् तदा यथाकथंचिदभ्युपगच्छेम । न किमपि प्रयोजनमस्ति । पुरुषस्य भोगापवर्गौ हि प्रयोजनमितीष्यते । भोगश्च सुखदुःखानुभवरूपः प्रधानपरिणामरूपाया बुद्धेर्धर्मः । पुरुषस्य तु बुद्धिच्छायापत्त्या तदैक्यमिवापन्नस्य तद्दर्शनं भोगः । तेन तस्य विवेकाग्रहात् आध्यासिकं भोक्तृत्वं, भोक्तृत्वाध्यासस्य तद्विवेकख्यात्या निवृत्तिर्मोक्ष इति सांख्यैरिष्यते । न च निर्विकारचैतन्यमात्रवपुषः पुरुषस्य सविकारबुध्यैक्याभिमानः तदीयभोगदर्शनं तद्विवेकानुसन्धानं वा सम्भवति । ननु सांख्यैरेव बुध्यादिष्वचेतनेष्वसम्भाविताभ्यां भोक्तृत्वमोक्षोपायश्रवणादिप्रवृत्तिभ्यां बुध्याद्यतिरिक्तो भोक्ता श्रवणादिप्रवृत्तिमांश्च पुरुषस्साधितः 'पुरुषोऽस्ति भोक्तृभावात्कैवल्यार्थप्रवृत्ते' श्चेति । प्रकृतेः पुरुषभोगार्थत्वं च तत्स्वरूपदर्शने सति तदैव पुरुषस्यापवर्गश्चेत्येतदुभयमपि बहुधा प्रपञ्चितम् । 'नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः । गुणवत्यगुणस्य सतः तस्यार्थमपार्थकं चरति ॥ रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात् । पुरुषस्य तथाऽऽत्मानं प्रकाश्य विनिवर्तते प्रकृतिः ॥ प्रकृतेस्सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति । या दृष्टास्तीति पुनर्नदर्शनमुपैति पुरुषस्ये'ति ॥ तस्मादस्त्येव तन्मते पुरुषस्य प्रकृतिभोक्तृत्वं तद्याथार्थ्यदर्शमार्थश्रवणादिकर्तृत्वंच । अतः कथं तन्मते प्रयोजनासंभवइति चेत् तर्हि परस्परविरुद्धार्थकथनादेव तन्मतमसमंजसं । तत्वसंग्रह एव हि ' तस्मान्नबध्यते नापि मुच्यते नापि संसरति कश्चित् । संसरति बध्यते मुच्यते च नानाश्रया प्रकृति ' रित्यादिभिः प्रकृतेरेव बंधमोक्षाविति प्रपंचितं । किञ्च जगतः कारणं सिध्यत् लाघवादेकमेव प्रकृतिरूपं सिध्यतीति वदद्भिरेव गुणत्रयसंघातएव प्रकृतिः नतु तद्व्यतिरिक्ता प्रकृतिर्नामास्तीत्यभ्युपगतं, ततोपि तन्मतं विप्रतिषिद्धं । पंचविंशतिस्तत्वानीत्युक्त्वैव गुणाः परस्परभिन्नाइत्यप्युक्तं, तदपि विप्रतिषिद्धं । गुणभेदे हि सप्तविंशतिस्तत्वानि

स्युः । अर्थविप्रतिषिद्धं चेदं दर्शितं । न हि पटलाभादिगतां सुखदुःखमोहाभवंतीति विषयाणामपि सुखदुःखमोहान्वयकल्पनं युक्तं । रजतभुजगादिदर्शिनामिच्छाद्वेषाद्युदयेन विषयाणामपि तद्वत्त्वकल्पनापत्तेः । विषयाणां सुखदुःखाद्यन्वयेन च तत्कारणं कुतस्सुखदुःखमोहात्मकं सिध्यति । न खलु शौक्ल्यगोत्वादिकं विषयान्वितमिति तत्कारणमपि शौक्ल्यगोत्वादिरूपं भवति । विषयान्वितं द्रव्यं घटान्वितमृन्न्यायेन कारणं भवतीति चेन्न । सत्वरजस्तमसां द्रव्यत्वासिद्धेः । पृथिव्यादिद्रव्यगतलघुत्वप्रकाशादिहेतवस्तद्गुणा एव हि सत्वादयः । अतएव गुणा इत्येव तेषां प्रसिद्धिः । तस्मात्परस्परविप्रतिषेधार्थविप्रतिषेधाभ्यामप्यसमञ्जसं सांख्यमतम् ॥

इति रचनानुपपत्त्यधिकरणम् ॥१॥

---

**महद्दीर्घवद्वा ह्रस्वपरिमंडलाभ्याम् ॥१०॥**

**उभयथाऽपि न कर्मातस्तदभावः ॥११॥**

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥१२॥**

**नित्यमेव च भावात् ॥१३॥**

**रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥१४॥**

**उभयथा च दोषात् ॥१५॥**

**अपरिग्रहाच्चात्यन्तमनपेक्षा ॥१६॥**

आनुमानिकप्रधानकारणवादवत् आनुमानिकपरमाणुकारणवादोऽपि न युक्त इति समर्थित इति दृष्टान्तसङ्गतिः । ईश्वरानङ्गीकारात् चेतनाधिष्ठानाभावेन प्रधानकारणवादे रचनानुपपत्तिवत् न परमाणुकारणवादे साऽस्ति । वैशेषिकैरीश्वरस्याङ्गीकृतत्वात् । अतएव प्रळयानुपपत्तिदोषोऽपि नास्ति । सृष्टिस्थापकप्राणिकर्मविशेषोपहितत्वेन सिसृक्षारूपाया ईश्वरेच्छायास्तदानीमभावस्य वक्तुं शक्यत्वादिति प्रत्युदाहरणसंगतिश्च ॥ इयमिह परमाणुवा-

दिनां प्रक्रिया । प्रलीने जगति प्राणिकर्मोन्मेषविशेषोपधानादीश्वरस्य इच्छायां सिसृक्षारूपायां सत्यां निश्चलेषु निरवयवेषु परमाणुषु आद्यं कर्मोत्पद्यते । तेन कर्मणा परमाणुद्वयं संयुज्यते । संयुक्तेन परमाणुद्वयेन द्व्यणुकमारभ्यते । त्रिभिर्द्व्यणुकैस्त्र्यणुकमित्यादिक्रमेण सर्वं जगदुत्पद्यत इति । तत्र परमाणूनां निरवयवत्वं तावदयुक्तम् । यथांगुळिद्वयं प्रत्येकं दशदिक्सम्बन्धिदशप्रदेशावच्छिन्नं परस्परं संश्लेष्यमाणमेकया महादिशा विदिग्द्वयेन चावच्छिन्नैः प्रत्येकं त्रिभिस्त्रिभिः प्रदेशैः संश्लिष्यत इत्येवं षड्भिः पार्श्वैस्संयुज्यते, एवं पटारम्भकास्तन्तवस्संश्लेष्यमाणाष्षड्भिः पार्श्वैस्संयुज्यमानाः प्रत्येकमसंयुक्तसप्तपार्श्वयुक्तास्सन्तः स्वाधिकपरिमाणं पटमारभन्त इति दृष्टम् । एवं परमाणवोऽपि षड्भिः पार्श्वैस्संयुज्यमाना एव पारिमंडल्याख्यस्वपरिमाणाधिकपरिमाणमणुत्वह्रस्वत्वयुक्तद्व्यणुकमहत्त्वदीर्घत्वयुक्त-त्र्यणुकादिकार्यमारभन्त इति वक्तव्यमिति परमाणूनां प्रदेशभेदोऽवश्यमंगीकर्तव्यः । अन्यथा परिमण्डलात् परमाणोरणुह्रस्वस्य द्व्यणुकस्य द्व्यणुकान्महतो दीर्घस्य त्र्यणुकस्य च प्रथिमानुपपत्तेः । न च वाच्यं माभूत्परमाणुतः प्रथिमा द्व्यणुकस्य, द्व्यणुकात् त्र्यणुकस्य तु प्रथिमा कारणबहुत्वाद्भविष्यतीति चेन्न । तथासति परमाणोः पारिमाण्डल्यं परिमाणं द्व्यणुकस्याणुत्वह्रस्वत्वे इति विभागाभावप्रसङ्गात् । परमाणुद्वयसंयोगस्य व्याप्यवृत्तित्वे द्व्यणुकस्यापि परिमण्डलत्वापत्तेः, द्व्यणुकोत्पादकं परमाण्वोस्संयोगमभ्युपगच्छतः तेनैव तयोः प्रदेशसिद्धेश्च । न हि परमाणू संयुज्यमानौ द्वावपि समानदेशौ संतौ संयुज्येते । मूर्तानां समानदेशताविरोधात् । अतः प्राक्प्रत्यग्भावेन, दक्षिणोत्तरभावेन, ऊर्ध्वाधरभावेन वा, भिन्नदेशस्थितौ संयुज्येते इत्येव वक्तव्यम् । तथासति यद्देशस्थितः परमाणुः येन परमाण्वन्तरेण संयुज्यते स तद्देशान्यदेशावच्छिन्नेनापि तेन किं संयोक्तुमर्हति, अनर्हत्वे वा कथं तस्मिन् प्रदेशभेदो न भवेदिति त्वमेवं परिभावय । ननु परमाणूनां निरवयवत्वेऽपि तत्तद्दिगवच्छेदलभ्यः प्रदेशभेदो वक्तुं शक्य इति तत एव परमाणुद्वयसंयोगस्य प्रादेशिकत्वं द्व्यणुके परिमाणोत्कर्षश्च

भविष्यतीति चेन्न– दिग्विशेषसंयोगस्यापि परमाणावव्याप्यवृत्तित्वोपपादकांशाभावेन व्याप्यवृत्तित्वापत्त्या तस्य परमाण्वंतरसंयोगाव्याप्यवृत्तित्वोपपादकत्वायोगात् । न हि कपिसंयोगतदभावावच्छेदकवृक्षमूलाग्रवत् व्यवस्थितदेशावच्छेदकाभावेऽपि यथाकथंचिदवच्छेदकभेदसद्भावमात्रेण परमाणुद्वयसंयोगस्याव्याप्यवृत्तित्वं घटत इति वक्तुं शक्यं । सर्वदिक्संयोगानामपि व्याप्यवृत्तित्वाविशेषे किं दिक्संयोगः परमाण्वंतरसंयोगावच्छेदकइति अत्रैव नियामकाभावेन सर्वदिक्संयोगानामपि तदवच्छेदकत्वप्राप्तौ अवच्छेदकभेदाभावात्, यथाकथंचिदवच्छेदकभेदलाभेऽपि व्यवस्थितदेशत्वाभावे तयोरव्याप्यवृत्तित्वानुपपादकत्वाच्च । अन्यथा पृथिव्यास्संख्यावत्त्वे द्रव्यत्वमवच्छेदकं गंधवत्त्वे प्रथिवीत्वमित्याद्यवच्छेदकभेदसत्त्वेन संख्यादीनामव्याप्यवृत्तित्वव्यवहारप्रसंगात् । तस्माद्व्यणुकोत्पादकसंयोगनिर्वाहार्थं परमाणुष्ववयवरूपप्रदेशभेदोऽवश्यमभ्युपेयः । तथा त्र्यणुकोत्पादकद्व्यणुकत्रयसंयोगनिर्वाहार्थमपि सोऽभ्युपेयः । स हि कायपुस्तकसंयोगोहस्तपुस्तकसंयोगेनेव द्व्यणुकस्य द्व्यणुकांतरारंभकपरमाणुना सह संयोगो निर्वाह्यः । कारणाकारणसंयोगात् कार्याकार्यसंयोग इति त्वयाऽभ्युपगतत्वात् । तथा च द्व्यणुकारंभकपरमाणौ तदारंभकपरमाण्वंतरसंयोगे प्राक्सिद्धे स्थिते प्रदेशभेदं विना कथं त्र्यणुकोत्पत्तिसमये द्व्यणुकांतरसंयोगोऽपि स्यात्, मूर्तानां समानदेशताविरोधादेवं । यदितु मूर्तत्वेपि परमाणुषु समानदेशताविरोधमर्यादा नेष्यते, तदा षण्णां परमाणूनां पिंडरूपं त्र्यणुकं परमाणुमात्रं भवेत् । तदाहुः– 'षट्केन युगपद्योगात् परमाणोष्षडंशता । षण्णां समानदेशत्वे पिंडस्स्यादणुमात्रक' इति । प्रागाद्यूर्ध्वाधारदेशवर्तिभिः षड्भिः परमाणुभिः संबध्यमानोमध्यस्थः परमाणुष्षडंशः प्राप्नोति । भिन्नदेशत्वात्संबन्धानां । अथ समानदेशास्सर्वे संबंधाः, तदा सर्वेषामेषां पिंडः परमाणुमात्रः प्राप्नोतीत्यर्थः।समानमिदं दूषणं द्व्यणुकेभ्यस्त्र्यणुकोत्पत्तावपि। तस्मात्द्व्यणुकत्र्यणुकादिजननतत्परिभाणातिशयसिध्यर्थं परमाणु षडंशत्वमनिच्छद्भिरपि परमाणुवादिभिरंगीकार्यः । ननु तदंगीकारे तत्तदंशा-

नामपि उक्तन्यायेन सांशतायामनवस्था प्रसज्यते । तथाचानन्तावयवारब्धत्वाविशेषात् मेरुसर्षपयोस्तुल्यपरिमाणत्वप्रसंगः । अतस्सांशत्वमपि नांगीकारार्हमिति चेत्, तर्हि सांशत्वे त्वनवस्था निरंशत्वे द्व्यणुकोत्पत्त्याद्यनुपपत्तिरिति पक्षद्वयेऽपि समापतद्दोषं परमाणुकारणवादव्यसनमेव त्यक्त्वा सुखीभव । किं च परमाणूनां सांशतायां नास्ति दोषः मेरुसिद्धार्थयोरनन्तावयवारब्धत्वेऽपि आनन्त्याविशेषात्परिमाणविशेषोपपत्तेः । न हि पाद्मकल्पात्पूर्वं वाराहकल्पात्परं पाताळादूर्ध्वं रविमण्डलादधश्च अवच्छेद्यदेशानन्त्ययोर्द्रव्यत्वपृथिवीत्वादिपरापरजात्याधारव्यक्त्यानन्त्ययो र्मेरुमन्दरान्तर्गतपरमाण्वानन्त्ययोश्च न तारतम्यम् । यदि तु परमाणोस्सावयवतायामनित्यत्वापत्त्या स्वाभ्युपगतमूलकारणत्वासिद्धिप्रसंगात् सांशत्वं नेष्यते, तदा द्व्यणुकादिजननतत्प्रथिमानुपपत्तिरनिवार्या । तस्मादनवस्था । परमाण्वनित्यत्वद्व्यणुकादिजननतत्प्रथिमानुपपत्त्यन्यतरदूषणाक्रान्तः परमाणुकारणवाद एव हेयः । किं च प्रळये निश्चलेषु परमाणुषु सर्गाद्यकालद्व्यणुकारम्भकसंयोगोत्पादककर्मासम्भवेन तत्संयोगासम्भवादपि सहेयः । ननु 'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनं अणुमनसोश्चाद्यं कर्मेत्येतानि अदृष्टकारितानी'त्यभ्युपेयते । अतोऽदृष्टवशादुत्पन्नेन कर्मणा संयोगस्सम्भवतीति चेन्न । तददृष्टं यदि प्राणिषु समवेतं, यदि वा परमाणुषु, उभयथाऽपि तत्कर्म न भविष्यति । तस्य तत्कर्मकारणत्वे पूर्वकल्पोपार्जितस्य तस्य प्रळयेऽपि सत्त्वेन तदानीमपि ततस्तत्कर्मोत्पत्त्या जगत्कल्पनाप्रसंगात् । अथ 'विपाकादृष्टं कर्म कारणं कर्मेश्वररूपोभयविधजगत्कारणसाफल्यप्रतिपादनार्थस्येश्वरः कारणं पुरुषकर्मसाफल्यदर्शना'दित्याक्षपादसूत्रजातस्य व्याख्यानावसरे वार्तिककृता 'न ब्रूमः कर्मानपेक्ष ईश्वरः कारणमिति कर्म पुरुषस्य ईश्वरोऽनुगृह्णाति कोऽनुग्रहार्थः यद्यथाभूतं यस्य च यदा पाककालः तत्तदा तथा च विनियुक्त'मिति प्रतिपादनात् अतो नायं दोष इति चेन्न । हरीतक्यादिद्रव्यस्येव आत्मगुणस्यादृष्टस्य विपाकासम्भवात् । फलकालागमो विपाकः सतु सर्गाद्यकालागम एवेति चेन्न । अनंतैः प्राणिभिरयुगपदनु-

ष्ठितविविधकर्मजनितादृष्टानां सर्गाद्यकालएव फलकालः, नतु ततः प्राग्द्विप-रार्धात्मके प्रळये न कोपि क्षणइति कल्पनस्य अप्रामाणिकत्वात्। ननु सर्ग-कालरूपेऽहनि निरंतरगतागतखिन्नानां प्राणिनां तत्समानपरिमाणं कालं शर्वरीरूपं कृत्वा तस्मिन् तान् महासुषुप्तिं प्रापय्य विशिश्रमयिषोरीश्व-रस्य इच्छया प्रळयमध्ये समागतफलकालान्यपि कर्माणि प्रतिबद्धशक्ति-कानि भवंति। अत एव ब्रह्महंतुस्तद्देहपातानंतरं कल्पपर्यंतं यातनानुभवः ततः परं सप्तसु जन्मसु क्षयरोगादितच्चिह्नानुवृत्तिरिति चोदितं फलं प्रळ-याव्यवहितपूर्वकाले कृतब्रह्महननस्य पुंसः तद्देहपातानंतरमेव न भवतीति चेन्न। त्वन्मते नित्यायाईश्वरेच्छायाः प्रळयेपि सत्वात्। न च परमाणुकर्मो-त्पादकादृष्टोपधानाभावादीश्वरेच्छा परमाणुकर्मोत्पिपादयिषारूपा नभव-तीति त्वया वक्तुं शक्यं। तस्यापि प्रळये सत्त्वात्। ममतु प्रळये प्राक्-सिद्धानां प्राण्यदृष्टानामीश्वरस्येच्छांतराणांच सत्वेपि 'बहुस्यां प्रजायेय, ता-सां त्रिवृतं त्रिवृतमेकैकां करवाणि, नामरूपे व्याकरवाणी' ति तदा-नीन्तनसृष्टिसंकल्परूपाणां भाविनीनामीश्वरेच्छानामभावात् सर्गाभावः। एवं तर्हि यस्मिन् काले तथा सङ्कल्परूपेश्वरेच्छा भवतीति त्वयेष्यते, तत्कालो-पहितैव नित्येश्वरेच्छा मम परमाणुकर्मोत्पिपादयिषा भविष्यतीति चेत् उ-च्यते— मया कश्चित् तादृक्संकल्पकालः स्वमनीषिकाकल्पितो न प-रिगृह्यते, किंतु 'सदेवसोम्येदमग्रआसी' दित्यादिश्रुतितदुपबृंहणपुराणेति-हासादिप्रमाणक द्विपरार्धात्मकमहाशर्वर्यंतरकालः परिगृह्यते। न च त-वेश्वरं तदीयसृष्ट्यादिव्यापारं च युक्तिभिरेव कल्पयितुमिच्छतः एतस्मिन् काले बहुभवनसंकल्पः ततोभूतानां क्रमेण सृष्टिः ततस्त्रिवृत्करणसंकल्प-स्त्रिवृत्करणं च ततोनामरूपव्याकरणसंकल्पः तद्व्याकरणं चेत्यादिकं यु-क्तिपथत्वमवतरति। न हि रामचरितादिकं रामायणादिप्रतिपन्नं युक्तिभिः कल्पयितुं शक्यं। यद्येश्वरे कालविशेषावच्छिन्नसृष्ट्यादिव्यापारे श्रुति-श्शरणीकरणीया, तदेश्वरेपि सैव शरणीकर्तुं युक्तेति यथाश्रुत्यनंतकल्याण-गुणाकरस्तदातदोदित्वरैस्सङ्कल्पविशेषैर्जगद्व्यापारलीलां कुर्वन्नेवेश्वरोऽभ्युपेयः,

ननु श्रुतिषु स्वानभिमतांशं परित्यज्य नित्यज्ञानेच्छाप्रयत्नमात्रवान् स्वाभिमतसृष्टिव्यापारमात्रकर्ताऽभ्युपेयः । दूषितश्चानुमानिकेश्वरः शास्त्रयोनित्वाधिकरणे । तेनापि तस्य परमाणुकर्मोत्पादनप्रक्रियया स्रष्टृत्वं त्वदभिमतं निरस्तप्रायं । अतोऽप्रामाणिकपरमाणुकारणवादाभ्युपगमादसमंजसं वैशेषिकमतं । तथा समवायाभ्युपगमादप्यसमंजसं । अयुतसिद्धेष्ववयविगुणक्रियाजातिषु अयुतसिध्युपपादनार्थं हि समवायोभ्युपगम्यते, तदा समवायस्यापि संबंधांतरमपेक्षणीयं । अयुतसिद्धिसाम्यात् । एवं तस्य तस्यापि संबंधांतरस्यायुतसिध्युपपादकं संबंधांतरमपेक्षणीयमित्यनवस्थानात् । समवायस्याभावादिवत् स्वरूपसंबंधइष्यत इति चेत्, अवयव्यादिष्वपि स एवास्तु । ननु अवयव्यादीनामनंतत्वात् लाघवेन सर्वानुगतएकसमवायः कल्प्यतइति चेन्न । एकस्य बहूनां च कल्प्यत्वे हि लाघवादेकस्यकल्पनं । इह बहूनां क्लृप्तत्वात् किमर्थमेकस्यापि कल्पनं । ननु बहूनां क्लृप्तत्वेपि तेषु संबंधत्वं कल्प्यं तत्तु नैकं कल्पयितुं शक्यं । अवयव्यादिस्वरूपानुगतैकसंबंधत्वानिर्वचनात् । अतोनंतसंबंधत्वकल्पनात् एकस्य समवायस्य तद्गतस्यैकस्य संबंधत्वस्य च कल्पनं लघ्विति चेन्न । अवयव्यादिषु तत्तदभावादिकं प्रति संबंधत्वस्यापि क्लृप्तत्वात्, तेष्ववयवादि निरूपितसंबंधत्वक्लृप्तिर्नास्तीति तान्यनंतानि कल्प्यानीतिचेन्न । निरूपकभेदेन संबंधत्वभेदे समवायेपि तद्भेदेन तान्यनंतानि कल्प्यानि समवायश्च कल्प्य इति समवायपक्ष एव गौरवापत्तेः । अवयवगुणक्रियाजातीस्तद्गतश्चायुतसिद्धत्वेन क्रोडीकृत्य अयुतसिद्धनिरूपितसंबंधत्वमेकमेव समवाये कल्प्यत इति चेन्न । एवं ताः क्रोडीकृत्य तेष्वेकसंबंधत्वकल्पनोपपत्तौ समवायकल्पनएव गौरवात् । किंच अवयवावयव्यादिषु समवायाभ्युपगमेऽपि स्वरूपसंबंधाभ्युपगमआवश्यकः । अन्यथा समवायविशेषण अवयवावयव्यादिषु आधाराधेयव्यवस्थित्यभावप्रसंगात् । तस्मादवयवादिष्ववयव्यादिनिरूपितमाधारत्वरूपं स्वरूपसंबंधत्वमेकं अवयव्यादिषु अवयवादिनिरूपितमाधेयत्वरूपं तदन्यादिति स्वरूपसंबंधद्वयेन विषयीभूतेन 'इह तंतुषु पट'

इत्यादिप्रत्ययोनिर्वाह्यः । समवायेन तन्निर्वहणे वायौ रूपसमवायसत्त्वेन वायौ रूपमिति प्रतीत्यापत्तेः । अतस्समवायस्थलेऽपि स्वरूपसंबंधस्याव-श्यकत्वे तेनैवाधाराधेयभावप्रतीतेः निर्वहणीयत्वे च किं समवायेन । एतेन यदुक्तं काणादसूत्रे– 'इहेति यतः कार्यकारणयोस्ससमवाय'इति त-न्निरस्तं । इहप्रत्ययस्य सर्वत्राधाराधेयभावरूपस्वरूपसंबंधद्वयविषयत्वा-वश्यंभावेन तेनैव विशिष्टप्रत्ययचारितार्थ्यात् । स्यादेतत् इह सूत्रे वर्णित-प्रत्ययनिर्वाहकत्वेन समवायसिद्धिरुक्तेति सत्यं– नतु तन्निर्वाहकत्वं विषय-तया विवक्षितं । तन्मते समवायस्याप्रत्यक्षत्वात् । किंतु कारणतया अव-यवक्रियादिविशिष्टबुद्धीनामनुगतं किञ्चित्कारणं यत्सिध्यति ससमवायइति । मैवं– अवयवादिविशिष्टबुद्धीनां स्वयमननुगतत्वेनानुगतकारणापेक्षाभावात् विशिष्टबुद्धित्वेनानुगमे 'दंडी पुरुषः, घटस्य ज्ञानं, घटस्याभावः'इत्यादिषु विशिष्टबुद्धिष्वतिप्रसंगात् । स्फुटतरविवेकरहितसंबंधिद्वयगोचरविशिष्टप्रत्य-क्षत्वेनानतिप्रसक्तेनानुगमइति चेत् तर्हि स्फुटतरविवेकराहित्यत्वेनानुगती-कृतानामवयवावयव्यादीनामेव तत्र कारणत्वमस्तु कृतं समवायकल्पनया । अतिप्रसक्तंचेदमुक्तविशिष्टबुद्धित्वं अभावाधिकरणयोर्विशिष्टबुद्धौ, पीतं सु-वर्णमिति तदुपष्टंभकयोर्विशिष्टबुद्धावपि । ननु दंडादिविशिष्टबुद्धिसाधारण्येन प्रत्यक्षविशिष्टबुद्धिमात्रे अनुगतं कारणं कल्प्यमानं नित्यत्वादेकत्वाच्च सर्वत्र संभवन् समवायएवेति सिध्यति । विषयभावं विनापि सर्वासु तासु तस्य कारणत्वसंभवादिति चेन्न । संयोगस्यानुगतकारणस्यसंभवात् । सं-तिहि चाक्षुषादिविशिष्टप्रत्यक्षेपु तत्तद्द्रव्येंद्रियसंयोगाः कारणत्वेन क्लृप्ताः । शब्दप्रत्यक्षत्वेप्यस्ति श्रोत्रमनस्संयोगः । तेषामेव संयोगत्वेनास्तु कार-णता । किंच विशिष्टज्ञानत्वं विशेषणज्ञानकार्यतावच्छेदकं प्रत्यक्षत्वं इंद्रि-यकार्यतावच्छेदकमिति अवच्छेदकांतरोपपन्नकार्यताधिकरणवृत्तित्वात् नील-घटत्ववदर्थवशसंपन्नं विशिष्टप्रत्यक्षत्वं न कार्यतावच्छेदकमिति नतदवच्छेदे-नानुगतकारणापेक्षास्ति । एतेन तंत्वादिनाशे तन्निष्ठावयवगुणादिकं यन्नश्यति तत्र तन्निष्ठावयव्यादिनाशत्वस्याननुगमात्, तत्संबंधिनाशत्वस्य तत्संयु-

क्तृणादिनाशेऽतिप्रसक्तत्वात् तावदनुगतस्संबंधः सिध्यन् समवायः पर्यवस्येदिति चेन्न । समवायांगीकारेपि तंतुनाशे तंतुसमवायवतामंशूनां नाशप्रसंगानिवारणात् । न च समवायवत्त्वे सत्याधेयत्वरूपं समवेतत्वमवच्छेदके निवेशनीयं, तथापि तंत्वाश्रिततृणादिनाशप्रसंगतादवस्थ्यात् , समवायस्यैकत्वेन तंतुसमवायस्य तृणेपि सत्त्वात्, अयुतसिद्धाधेयत्वस्यैव अक्लिष्टस्य क्लृप्तस्य कार्यतावच्छेदके निवेशयितुं युक्तत्वाच्च । नच तथासति तदयुतसिद्धाधेयस्य पटध्वंसादेर्नाशप्रसंगः । परपक्षेपि तंतुसमवेतजात्यादिनाशप्रसंगतौल्यात् । तंतुनाशे तत्समवेतकार्यनाश इति नियमश्चेत्तर्हि तन्नाशे तदयुतसिद्धाधेयस्य विनाशिनोनाशइति नियमोस्तु । नच ध्वंसनाशेनापि किञ्चिदनिष्टमापद्यते । प्रागभावध्वंसस्य घटस्येव तद्ध्वंसस्यापि ध्वंसोपपत्तेः । घटतद्ध्वंसयोरुभयोरपि प्रागभावप्रध्वंसत्वांगीकारेण प्रागभावानुन्मज्जनसमर्थने घटतद्ध्वंसपरंपराया घटध्वंसत्वांगीकारेण घटानुन्मज्जनसमर्थनोपपत्तेः । तदेवं समवायासिद्धौ तद्घटितस्य समवायिकारणत्वस्यासिध्या त्र्यणुकद्व्यणुकसमवायिकारणत्वेन द्व्यणुकपरमाण्वनुमानं न प्रवर्ततइत्यतोप्यसमञ्जसः परमाणुकारणवादः । किञ्च समवायस्य नित्यत्वाभ्युपगमात् तदाश्रयाणामपि नित्यत्वमभ्युपगंतव्यं । अन्यथा संबन्धिनाशे संयोगवत् समवायस्यापि नाशप्रसङ्गात् । अतस्समवायाश्रयतया त्र्यणुकस्यापि नित्यत्वं त्वया वक्तव्यं स्यादित्यतोपि तत्कारणतया द्व्यणुकाद्यनुमानासिद्धिः । यद्युच्येत संबन्धिनाशनाश्यत्वे संयोगत्वं प्रयोजकं । लाघवात् । न संबन्धत्वमुपाधित्वादिति, तदेत्थं लाघवमनुसरता जगन्मूलकारणानुमानेप्यैक्यलाघवमनुसरणीयमिति तेन ब्रह्मणः प्रधानस्य वा सिद्धेर्न तेन परमाणुसिद्धिः । नच कार्यद्रव्यस्यावयवसंयोगारभ्यत्वनियमस्य पटादिषु दृष्टत्वान्नैकस्माद्द्रव्योत्पत्तिस्संभवतीति लाघवमिहाकिंचित्करमिति वाच्यं । एकावयविरूपेण क्षीरेण दध्यारंभे नियमभङ्गात् क्षीरारंभकावयवाःपरस्परं संयुज्य पुनस्संयोगांतरं लब्ध्वा दध्यारभंत इति कल्पनायां प्रमाणाभावात् क्षीरनाशकारणानुपलब्धिवत् दध्युत्पत्तिवच्च तदुपपत्तिः न पयसः परिणामो गुणांतरप्रादुर्भावादि-

त्याद्यक्षपादसूत्राणां प्रमाणमूलत्वाभावात् स्थितेपि द्रव्ये पार्थिवपरमाणूना-मिव गुणांतरप्रादुर्भावोपपत्तेः । तंतुसंयोगपटयोः कुविन्दव्यापारादिरूप-सामग्र्यैक्येन समकालोत्पत्तिकतया पटस्य तंतुसंयोगारम्भ्यत्वासम्प्रतिपत्तेश्च । न च तंतुसंयोगनाशे पटनाशदर्शनात् अकारणनाशेन अकार्यनाशासम्भ-वात् पटतंतुसंयोगयोः कार्यकारणभावो वक्तव्य इति वाच्यम् । नाशयोरपि सामग्र्यैक्येन समकालत्वोपपत्तेः । किं च यदि जगन्मूलकारणं रूपादिम-त्स्यात् तदा तत्र नित्यत्वनिरवयवत्वयोर्विपर्ययस्स्यात् । रूपादिमतामनि-त्यत्वसावयवत्वदर्शनादिति तर्कानुगृहीतेन त्र्यणुकमूलकारणं रूपादिरहितं नित्यत्वान्निरवयवत्वादित्यनुमानेन पराहतत्वादपि न रूपादिवत्परमाणु-रूपकारणसिद्धिः । विपक्षे बाधकाभावात् व्याप्त्यसिध्या प्रशिथिलमूलस्त-र्कइति चेत् त्र्यणुकं समवायिकारणारभ्यं महत्वेसति चाक्षुषत्वात् । तदपि त्र्यणुकसमवायिकारणं समवायिकारणारभ्यं महदारम्भकत्वादिति द्व्यणुकप-रमाणुसाधकानुमानयोः को विपक्षबाधको दृष्टः । येन मदनुमानस्य दौर्बल्यं त्वदनुमानयोः प्राबल्यञ्च स्यात् । ननु त्र्यणुकसाधकानुमानेऽस्ति विपक्ष-बाधकतर्कः । तथा हि महत्त्वपरिमाणस्य जन्यत्वे महत्त्वावान्तरजातिरूपा-पकर्षमात्रं प्रयोजकम् । नतूत्कर्षापकर्षरूपतदवान्तरजातिद्वयं, गौरवात् । तथा च त्र्यणुकमहत्त्वस्य अपकृष्टमहत्त्वरूपतया जन्यत्वेन कारणापेक्षायां महत्त्वे स्वाश्रयसमवायिकारणगतसंख्यापरिमाणसंयोगविशेषाणामेव कारण-त्वात् त्र्यणुकस्य समवायिकारणत्वमवश्यमभ्युपेयमिति, एवं तद्युक्तरीत्यैव तर्कमूलव्याप्तावप्यस्ति विपक्षबाधकतर्कः । रूपादीनां जन्यत्वे रूपत्वादिकं प्रयोजकं अनुगतत्वाल्लघुत्वाच्च । न तु कार्यगतरूपत्वादिकम् । पार्थिवपर-माणुरूपाद्यननुगतत्वात् गुरुत्वाच्च । तथा च परमाणुषु रूपाङ्गीकारे अग्नि-संयोगाजन्या रूपादयः स्वाश्रयकारणगतरूपादिजन्या इति त्वद्रीत्यैव जल-परमाणुगतरूपादीनां पार्थिवपरमाणुश्यामत्वस्य चोत्पत्तावपेक्षितानां रूपा-दीनामाश्रयत्वेन परमाणूनामवयवास्सिध्यन्तो न निवारयितुं शक्याः । सा-वयवत्वेचानित्यत्वमप्यनिवार्यमिति रूपादीनां जन्यत्वे रूपत्वादिकं

प्रयोजकमित्येतत् त्वयाऽप्यवश्यमेष्टव्यम् । अन्यथा त्र्यणुककारणत्वेन अनुमीयमानेषु द्व्यणुकेषु रूपाद्यसिद्धिप्रसङ्गात् । तेषु रूपादिमत्त्वानुमाने हि रूपादीनां कारणगुणपूर्वकत्वनियममूलएवहि तत्र विपक्षबाधकतर्कएष्टव्यः । किञ्च महत्त्वस्य जन्यत्वे परिमाणापकर्षः प्रयोजको युक्तः । अतएव आकाशादिगतपरममहत्त्वव्यावृत्तिसिद्धेः । नतु महत्वापकर्षः, विशेषरूपत्वात् दैर्घ्याननुगतत्वाच्च । तथा च यदि त्र्यणुकमूलकारणे अपकृष्टपरिमाणमभ्युपगम्येत तदा तस्य जन्यत्वेन कारणपरिमाणापेक्षया मूलकारणस्य सावयवत्वं प्रसज्येतेति तत्परिहाराय तस्मिन् परममहत्त्वमेवाभ्युपगंतव्यम् । न च कार्यद्रव्यस्य स्वन्यूनपरिमाणद्रव्यारभ्यत्वनियमात् दीर्घैस्तंतुभिर्दृढतरावर्तितैस्तन्न्यूनदैर्ध्यस्य विशालैः पटैरावर्तितैस्तन्न्यूनवैपुल्यस्य च सूत्रस्यारम्भदर्शनात् । तस्माद्बलवत्प्रत्यनुमानपराहतं रूपादिवज्जगन्मूलकारणानुमानम् । तथा यद्यनित्यत्वादिपरिहाराय परमाणूनां रूपादिशून्यत्वमुच्येत, तदा कार्यगुणानां कारणगुणपूर्वकत्वनियमासिद्धिः । तत्सिद्धये रूपादिमत्वांगीकारे च अनित्यत्वाद्यापत्तिरिति उभयथाऽपि दुष्टः परमाणुकारणवाद इति असमञ्जसं वैशेषिकमतम् । अतस्सांख्यपक्षस्य श्रुतिन्यायविरुद्धस्यापि सत्कार्यवादादौ क्वचिदंशे वैदिकपरिग्रहोऽस्ति । वैशेषिकपक्षस्य तु केनाप्यंशेन अपरिग्रहादत्यन्तमनपेक्षैव कार्या ॥

संग्रहकारिकाः ॥ अल्पानां संयोगाद्विपुलस्योत्पत्तिरीक्षिता लोके ।

तस्मादणवः कारणमनवयवास्तेऽनवस्थितेश्शान्त्यै ॥
तेषां प्रदेशभेदैस्संयोगे क्वानवस्थितेश्शान्तिः ।
नोचेत्तदयुतयोगेऽप्यस्तु प्रथिमा कथं कार्ये ॥
समवायिकारणञ्च त्रसरेणोर्नैव शक्यमनुमातुम् ।
बहुबाधकसद्भावात् समवायस्यैव निष्प्रमाणत्वात् ॥
तन्मूलकारणत्वस्य च रूपित्वादावनित्यतापत्तेः ।
रूपादिमतां लोके ह्यवयववत्त्वादनित्यता दृष्टा ॥

इति महद्दीर्घाधिकरणम् ॥२॥

समुदायउभयहेतुकेऽपि तदप्राप्तिः ॥१७॥

इतरेतरप्रत्ययत्वादुपपन्नमितिचेन्न संघातभावा-
निमित्तत्वात् ॥ १८ ॥

उत्तरोत्पादेचपूर्वनिरोधात् ॥ १९ ॥

असतिप्रतिज्ञोपरोधोयौगपद्यमन्यथा ॥२०॥

प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥२१॥

उभयथाचदोषात् ॥ २२ ॥

आकाशेचाविशेषात् ॥२३॥

अनुस्मृतेश्च ॥२४॥

नासतोदृष्टत्वात्॥२५॥

उदासीनानामपि चैवं सिद्धिः ॥२६॥

माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाश्चतुर्विधा बौद्धाः । ते सर्वेऽप्यादिबुद्धस्य शिष्याः क्रमेण सर्वशून्यत्वबाह्यार्थशून्यत्वबाह्यार्थानु-मेयत्वबाह्यार्थप्रत्यक्षत्ववादिनः । तत्र 'बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते । अतो निरभिलप्यास्ते निस्स्वभावाश्च दर्शिताः ॥ यथा यथा विचार्यन्ते तथा तथे'त्यादिन्यायैः गुरुणा सर्वशून्यत्वं बोधितेषु शिष्येषु ये गुरूक्तं तथैवांगीकृत्य पर्यनुयोगं नाकुर्वन् ते गुरूक्तस्य श्रद्धयांगीकरणादु-त्तमाः, तत उपरि पर्यनुयोगाकरणादधमाश्चेत्युत्तमाधमत्वयोगात् मध्यमां स्थितिमास्थिता माध्यमिकाः । ये तु बाह्यार्थानां शून्यत्वमंगीकृत्य कथं विज्ञानस्यापि शून्यत्वं, जगदान्ध्यप्रसंगादिति पर्यनुयोगमकुर्वन्, ते गुरू-क्तांगीकरणस्य आचारसंज्ञया तन्मते परिभाषितस्य तत उपरि पर्यनुयोगस्य योगसंज्ञया तन्मते परिभाषितस्य च सद्भावात् योगाचाराः । गुरुणा तान् प्रत्यान्तरं विज्ञानमात्रमस्ति, तदेव नीलाद्याकारं न तु तद्व्यतिरेकेण बाह्यं

नीलादिकमस्ति सहोपलम्भनियमेन नीलादीनां तद्विज्ञानानाञ्चाभेदसिद्धेः, भेदे गवाश्ववत्तन्नियमाभावप्रसङ्गात्, तदेव विज्ञानाकारात्मकं नीलादिकमनादिवासनावशात् बहिर्वदवभासत इति बोधिते कथं सर्वथैव बाह्यार्थस्य शून्यत्वं, बाह्यस्य नीलादेरवभासात् । अहमुल्लेखेन विज्ञानस्यान्तरतया इदमुल्लेखेन नीलादेर्बाह्यतया च भेदेऽवभासमाने सहोपलम्भनियममात्रस्याप्रयोजकस्याभेदसाधनाक्षमत्वात्, सहत्वोक्त्यैव भेदानुमतेश्चेति यैः पर्यनुयुक्तं, तान् प्रति सत्यमस्ति बाह्यं नीलादिकं न तु तत्प्रत्यक्षं अनुत्पन्नस्याविद्यमानस्य प्रत्यक्षत्वायोगात्, उत्पन्नस्य क्षणिकस्य स्थित्यभावात् ।

किंतु उत्पद्यमानं नीलादिविज्ञाने स्वाकारं समर्प्य नश्यति । ततो विज्ञानगताकारेणातीतन्नीलादिकमनुमीयतइति बोधिते सति तैरित्थं शिष्यप्रश्नानुरोधेन कियत्पर्यंत मुपदेशसूत्रं प्रवर्तिष्यतइति सूत्रस्यांते पृष्टे गुरुणाऽभिहितं– भवन्तस्सूत्रस्यांतं पृष्टवन्तस्सौत्रांतिकाभवन्त्विति । अतस्ते सौत्रांतिकाः । ततो विज्ञानेनानुमेयं बाह्यमितीयं विरुद्धाभाषा । तस्यैव विज्ञानस्य तद्विषयप्रत्यक्षत्वात् प्रत्यक्षस्य कस्यचिदप्यर्थस्याभावे व्याप्तिसंवेदनस्थानाभावेन अनुमानाप्रवृत्तेश्चेति यैः पर्यनुयुक्तं ते वैभाषिकाः । तान् प्रति बाह्यप्रत्यक्षत्वमप्युपदिष्टं । एवं यथाश्रुतं स्व स्व प्रश्नोत्तरवाक्यार्थं श्रद्धानास्ते तथैव मतभेदानास्थिषत । तत्र वैभाषिकादिक्रमेण चतुर्विधानपि बौद्धान् निरसितुं क्रमेण चत्वार्यधिकरणानि । ततः क्षपणकान्निरासितुमेकमधिकरणम् । वैदिककापिलकणभुङ्निराकरणानन्तरमवैदिकास्ते निरस्यन्तइति अर्धवैनाशिकनिरासानन्तरं सर्ववैनाशिका निरस्यन्त इति पूर्वाधिकरणेन पेटिकासङ्गतिः वैभाषिकाद्यधिकरणानां त्रयाणां केषांचित् क्षणिकत्वमभ्युपगच्छन्तस्तार्किकाः अर्धवैनाशिकाः । ते हि जाठराग्निना पच्यमानानां भुक्तपीताहारावयवानां प्रतिक्षणमुपचयापचयवैषम्यात् अचयविशरीरमपि प्रतिक्षणमुपचयापचयवदन्यदन्यद्भवति । यद्यपि शरीरस्य प्रतिक्षणमुपचयापचयदर्शनं नास्ति, तथाऽपि वर्षधारानिपातैस्तटाकजलस्येव घटीयंत्रोक्षेपणैः कूपजलस्येव चान्ते तद्दर्शनात् यौक्तिकं प्रतिक्षणं किंचित्किंचिदुपचयापच-

यज्ञानमस्त्येव । आहारावयवानां शरीरावयवत्वप्राप्त्या तदपचयोपचया-भ्यां शरीरापचयोपचयावश्यम्भावात् । यथा हि चन्द्रतारकादीनां मुहूर्तादि-कालव्यवधानेन बहुदेशान्तरप्राप्तिदर्शनात् प्रतिक्षणं स्वल्पदेशांतरप्राप्ति-ज्ञानं यौक्तिकमस्तीत्यभ्युपगच्छन्ति । एवं प्रतिक्षणमवश्यम्भाविभिः खननपू-रणादिभिः भूगोळकस्य, नदीजलसंसर्गशीकरोत्पतनैस्समुद्रस्यचउपचयापच-यवत्त्वेन क्षणिकत्वमभ्युपगच्छन्ति।अतस्तेऽर्धवैनाशिकाः । बौद्धास्तु सर्वस्या-पि प्रपञ्चस्य क्षणिकत्वमभ्युपगच्छन्तस्सर्ववैनाशिकाः । बौद्धेष्वपि वैभाषिक-सौत्रान्तिकाः परमाणुवादिनइति काणादप्रत्यासत्त्या तदुभयसाधारणैस्सौत्रा-न्तिकासाधारणैश्चदूषणैरुभयेषां प्रथमाधिकरणे निरासः, द्वितीयाधिकरणे क्षणिकवादसाम्यात्योगाचाराणां, ततो बौद्धत्वसाम्यात् माध्यमिकानां, तद-नन्तरमवैदिकत्वसाम्यात् क्षपणकानामितिविवेकः । यद्यपि क्षपणकाअपि पर-माणुवादिनः,तथापि वैभाषिकसौत्रांतिकैः खरस्नेहोष्णतेरणस्वभावाश्चतुर्विधाः परमाणवस्तैरभ्युपगम्यंते । परमाणूनां तार्किकैः स्थिरत्वैकांत्यवत् क्षणिकत्वैकां त्यंतैरभ्युपगम्यते। क्षपणकास्तु परमाण्वैकविध्यवादिनः स्थैर्याद्यनैकांत्यवादि-नश्चेति वैभाषिकसौत्रांतिकानां तार्किकप्रत्यासत्त्यतिशयोस्तीति संगतिविशे-षोद्रष्टव्यः । तत्र परमाणुवादिनोवैभाषिकसौत्रांतिकाएवमाहुः— रूपरसगंध-स्पर्शस्वभावाः पार्थिवाः परमाणवः रूपरसस्पर्शस्वभावाआप्याः, रूपस्पर्श-स्वभावास्तैजसाः, स्पर्शस्वभावावायवीयाः, भूभूधरसमुद्रवडबानलमहो-वाय्वात्मकभूतरूपेण संहन्यंते । तेभ्यश्च पृथिव्यादिभ्यः शरीरेंद्रियघटादि-विषयरूपभौतिकसंघाताभवंति । सर्वत्र संघातः अवयवसमुदायएव । न तद्व्यतिरेकेण अवयविद्रव्यांतरोत्पत्तिरस्ति तदुत्पत्तौ तत्र चाक्षुषत्वाद्यर्थं पृ-थग्रूपादिमत्त्वस्य अभ्युपगंतव्यत्वात् । अवयवरूपादिव्यतिरिक्तस्य च अ-वयविनि रूपादेरनुपलंभात् । नहि नानावर्णैस्तंतुभिरारब्धे पटे तंतुगतना-नारूपव्यतिरेकेण पटे रूपांतरं, अवयवभेदव्यवस्थितमधुराम्लरसव्यतिरे-केण आम्रफले रसांतरं अतिपक्वाल्पपक्वभागभेदव्यवस्थितपूतिगंधसुरभिगंध-व्यतिरेकेण नागवल्लीपर्णे गंधांतरं, भागभेदव्यवस्थितकठिनसुकुमारस्पर्शव्य-

तिरेकेणकदळीदळेस्पर्शांतरं,मूलमध्याग्रभागव्यवस्थितमहदल्पाल्पतरपरिमा-
णव्यतिरेकेण वृक्षे परिमाणांतरञ्च उपलभामहे । नानावर्णतंत्वारब्धेषु पटेषु
चित्राख्यं रूपांतरं कैश्चिदभ्युपगतमिति चेत् तदन्यैर्दूषितमेव । 'चित्रं
चेदेकता नस्यात् एकंचेच्चित्रता कथं । एकंच तच्च चित्रंचेत्येतच्चित्रतरं
मह' दिति । रसादिषु तु अव्याप्यवृत्तित्वं केनापि नाभ्युपगतं । तस्मा-
दणुहेतुको भूतसमुदायः भूतहेतुकोभौतिकसमुदायइत्येवमणुभूतहेतुकसमुदा-
यद्वयरूपएव वाह्यार्थः। सेयं प्रक्रियाऽनुपपन्ना । यतोऽणुभूतहेतुकसमुदायद्वये
ऽभ्युपगम्यमाने जगदात्मकसमुदायभावः चेतनस्य तद्विषयव्यवहारश्च न
प्राप्नोति। कुतः । अणूनां भूतानांच मेळनार्थव्यापारं विना हेतुत्वे सदा कार्यो-
त्पत्त्यापत्तेः, मेळनहेतुव्यापारविशिष्टानामणूनां भूतानांच भूतभौतिकहेतुत्वं
वक्तव्यं। न च तत्क्षणिकत्वे घटते। येषां व्यापारावेशः, तेषां मेळनक्षणे नष्ट-
त्वात्। येषां मेळनं तेषां व्यापारक्षणानुत्पन्नत्वात्। यस्यचेतनस्येंद्रियसन्निकर्षः
तस्य ज्ञानोत्पत्तिकाले, यस्य ज्ञानोत्पत्तिः तस्य हानादिव्यवहारकाले च नष्ट-
त्वात् । केषांचिन्मेळनहेतुव्यापारेणान्येषां मेळनाभ्युपगमे कस्यचिदिंद्रिय-
सन्निकर्षादिनाऽन्यस्य वेदनाद्यभ्युपगमे चातिप्रसंगात् । नच व्यापारवतां
मेळनवतांचाणुभूतानामेकसंतानवर्तित्वात् इंद्रियसन्निकर्षवतो वेदनादिमतश्चे-
तनस्य एकसंतानवर्तित्वाच्चानतिप्रसंगः । क्षणिकसंतानव्यतिरिक्तस्य स्थिर-
स्य संतानस्य क्षणिकत्ववादिभिरनभ्युपगमात् । नन्वस्थिरेष्वपि स्थिरत्व-
भ्रांतिरूपाविद्याऽस्ति, साच रागादिहेतुः, रागादिपारवश्यंचाविद्याहेतुरिति
अविद्यारागादेः प्रवाहस्तावदनुभवसिद्धः । तस्य शरीरेन्द्रियविषयादि-
रूपसमुदायभावाभावे अनुपपत्तेः तदाक्षिप्तसमुदायसिद्धिरप्रतिक्षेप्येति
चेन्न । कारणाभावेन समुदायभावानुपपत्तावुक्तायां कारणोक्त्या हि तदुप-
पत्तिस्समर्थनीया । नचाविद्यारागादिः परमाण्वादिव्यापारानिरपेक्षस्समुदाय-
हेतुः । शुक्तिरजतभ्रांतिरूपाविद्यारजतरागादिनाऽपि शुक्तेश्शुक्तिरूपस-
मुदायताप्रहाणेन रजतरूपसमुदायतापत्तिप्रसंगात् । अन्यस्याविद्ययान्यस्य
रागादिजननेऽतिप्रसंगेनाविद्यारागादिप्रवाहानुपपत्तेश्च । स्यादेतदन्यस्य

23

कर्मणा अन्यत्र संयोगजनने ऽतिप्रसंगइतिदोषो न बौद्धमते प्रसरति । न हि तैः क्षणिकेषु परमाण्वादिषु कर्मसंयोगावभ्युपगम्येते । किंतु देशांतरस्थेन देशान्तरस्थस्योत्पादः सकर्मप्रत्ययस्यालम्बनं, विप्रकृष्टदेशेन सन्निकृष्टदेशस्य उत्पादः ससंयोगप्रत्ययस्य । ततश्च यथा न्यायमते नानादिक्प्रभवशब्दमूलकशब्दपरम्पराजननक्रमेण बहूनां शब्दानां मेळने सति कोलाहलप्रत्ययः, एवं बहूनां परमाणूनां तथा पुञ्जीभावेसति भूभूधरादिप्रत्ययः । दृष्टंह्येकैकस्य केशस्य दूरे दृश्यत्वाभावेऽपि बहूनां केशानां कबर्यादिरूपेण पुञ्जीभावे सति तत्समुदायस्य दृश्यत्वं । न चादृश्यसमुदायस्यादृश्यत्वनियमः । अप्रयोजकत्वात् । एकैकस्य तन्तोस्स्यवनाकर्षणशक्त्यभावेऽपि तत्समुदायस्य तदाकर्षणशक्तिवत् एकैकस्य परमाणोरदृश्यत्वेऽपि तत्समुदायस्य दृश्यत्वोपपत्तेः । तदाहुः– 'प्रत्येकं दृष्ट्ययोग्यत्वेऽप्यणूनां दृश्यता भवेत् । मेळनेसति तन्तूनां नौकाद्याकृष्टिशक्तिव' दिति । तस्मान्न हेत्वसम्भवेन समुदायभावानुपपत्तिरिति चेत् एवमपि हेतुहेतुमद्भावो नोपपद्यते । उत्तरघटक्षणोत्पत्तिदशायां पूर्वघटक्षणस्य विनष्टत्वेन तस्य उत्तरघटक्षणं प्रति हेतुत्वानुपपत्तेः । बौद्धमते वस्तुतः कालो नास्ति । उद्यन्नेव स्वरसभंगुरो घटादिः क्षणकल्पनामात्रनिमित्तं भवति । स च घटादिः स्वोदयविनाशपरिकल्पितक्षणवत्त्वात् क्षणिक इत्युपचर्यते, वपुष्मान् शिलापुत्रक इतिवदिति तेषां प्रक्रिया । अतस्तन्मतमर्यादया घटएव क्षण इति सामानाधिकरण्येन घटः क्षण इति ग्रन्थेषु व्यवहारः । ननु नष्टस्य हेतुत्वासम्भवः, उक्तं हि तेषां तत्वसंग्रहे– 'भावानां कारणत्वं न नष्टतया अवस्थिततया वा । अपितु भूततया । भूतश्च स्थितो वा भवतु, नष्टो वा । कारणान्तरपौष्कल्ये सति स्वकार्यमविळम्बेन करोती' ति । दृष्टं हि बीजकृतदोहळसंस्कारस्य कालान्तरभाविपुष्पफलादिगतवर्णरसविशेषहेतुत्वं तस्मान्नष्टत्वेन हेतुत्वानापत्तिरिति चेत् । मैवं । यदि कार्यदशायामसदपि यदा कदाचित्पूर्वसत्त्वमात्रेण हेतुस्स्यात् तदा सर्वदा सर्वत्र सर्वस्याप्युत्पत्तिस्स्यात् । घटोत्पत्तिदशायामंकुरादेरपि उत्पत्तिस्स्यात् । अनादौ कालप्रवाहे नष्टस्य बी-

जादेस्सत्वात् । न च क्षेत्रतत्कर्षणादिसहकार्यभावश्शङ्कनीयः । तस्यापि नष्टस्य पूर्वसत्त्वाविशेषात् । दोहळद्रव्याणां तु यावत्कार्योत्पत्तिसूक्ष्मरूपेणानुवृत्तिरस्त्येव वृक्षायुर्वेदादिदोहळशास्त्रप्रसिद्धा । स्यादेतच्चिरनष्टस्य निर्व्यापारस्य माभूद्धेतुत्वं, स्वरूपेण स्वव्यापाररूपेण वा पूर्वक्षणवर्तिनस्तु स्यात् । अवश्यञ्च कारणस्य पूर्ववृत्तित्वं वाच्यम् । तेनैव कारणत्वोपपत्तौ किं कार्यकालवर्तित्वेन । लोके च विनष्टस्य बीजस्य अंकुरे, क्षीरस्य दध्नि, मृत्पिंडस्य घटे च कारणत्वं दृष्टम् । यदि तु कारणस्य कार्यकालवृत्तित्वमपेक्ष्येत, तदा बीजादीनां विनाशोंकुरादिकारणं पूर्वघटक्षणविनाश उत्तरघटक्षणकारणमित्यस्त्विति चेत् । यद्येवं कार्यकालासतः कारणत्वमिष्यते, 'अधिपतिसहकार्यालम्बनसमनन्तरप्रत्ययाः चत्वारः चित्तचैत्तहेतव' इति हि बौद्धानां प्रतिज्ञा । तथा हि बुद्धसूत्रम्– 'चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्त्या उत्पद्यन्त' इति । अधिपतिरिंद्रियं । तद्धि ज्ञानस्य रूपादिषु पञ्चसु एकैकमात्रविषयत्वनियामकम् । नियामकश्च लोके अधिपतिरुच्यते । सहकारि आलोकादिकं । आलम्बनं घटादिकं । समनन्तरप्रत्ययः पूर्वज्ञानम् । एतान् चतुर्विधान् हेतून् प्राप्य चित्तं ज्ञानं चैत्याः तदभिन्नास्सुखादयश्च जायन्त इति प्रतिज्ञार्थः । इयं हीयेत प्रतिज्ञा । पूर्वक्षणवृत्तित्वाभावे कारणत्वायोगात् । उत्तरक्षणवृत्तित्वाभावे वर्तमानत्वग्राहिप्रत्यक्षविषयत्वायोगात् । अन्यथा कारणस्य विषयतासिध्यर्थं तस्यापि कार्योत्पत्तिक्षणे स्थित्यभ्युपगमे घटद्वये यौगपद्यं प्रसज्यते । अथैतद्दोषपरिजिहीर्षया कारणस्य कार्योत्पत्तिक्षणे स्थितिमनभ्युपगम्य कारणक्षण एव तस्य विषयत्वमप्यभ्युपगम्येत, तदा संप्रयोगज्ञानयोर्हेतुहेतुमतोः यौगपद्यं स्यात् । एतेन पूर्वक्षणविनाशस्योत्तरक्षणकारणत्वमपि निरस्तम् । तथा सत्यधिपत्यादिकारणत्वप्रतिज्ञाविरोधात् । किं च पराभिमतो निरोधाख्यो विनाश एव न संभवति । एवं हि ते कल्पयन्ति । सर्वत्र निरन्वयो निरनुवृत्तिक एव स निरोधशब्देनोच्यते, स द्विविधः स्थूलस्सूक्ष्मश्च । मुद्गरपातानन्तरं सर्वैरुपलभ्यमानो घटनाशस्स्थूलः प्रतिसंख्यानिरोधः, प्रतिसंख्या विषयत्वप्रतिकूला तदसत्त्व-

ग्राहिणी लौकिकानां बुद्धिः, तद्विपरीतः अप्रतिसंख्यानिरोधस्सूक्ष्मः, लौकिकोपलब्ध्ययोग्योयुक्त्या साध्यमानः प्रतिक्षणविनाश इति द्विविधोऽप्ययं निरन्वयविनाशो न सम्भवति। अविच्छेदात्। सदैवाविच्छिन्नतयाऽनुवर्तमानस्य द्रव्यस्य पूर्वावस्थाप्रहाणोत्तरावस्थापत्तिभ्यामेव नाशोत्पत्तिव्यवहारः। न तु द्रव्यस्य क्वचिदपि निरन्वयविनाशोऽस्तीत्यारम्भणाधिकरणे समर्थितत्वात्। अतो विनाशस्य कारणत्वं न सम्भवति। 'आकाशं द्वौ निरोधौ च नित्यं त्रयमसंस्कृतम्। बुद्धिबोध्यं त्रयादन्यत् संस्कृतं क्षणिकञ्च त' दिति बौद्धैः'संस्कृतं कार्यमेवानित्यं, असंस्कृतमकार्यमाकाशादित्रयं तु नित्य' मिति नित्यत्वेनाभ्युपगतस्य निरोधद्वयस्य कारणत्वानुपपत्तेश्च, अविच्छेदेनानुवर्तमानस्य कारणत्वे सदा सर्वत्र सर्वकार्योत्पत्तिप्रसङ्गात्। तत्सहकारित्वेनाभिमतानामपि निरोधद्वयस्य नित्यत्वात्। किं च निरोधद्वयं आकाशं चेति त्रयमवस्थात्मकं तुच्छमिति बौद्धा मन्यन्ते। तत्र तुच्छात् कथं जगदुत्पत्तिः? तुच्छादुत्पत्तौ तुच्छस्य निर्विशेषत्वेन कारणविशेषकृतकार्यविशेषव्यवस्थित्यसम्भवात् घटक्षणानन्तरं सर्वस्य जगत उत्पत्तिस्स्यात्। तुच्छादुत्पद्यमानञ्च कार्यं तुच्छमेव स्यात्। तस्य सद्रूपतया प्रतीतिर्न स्यात्। सुवर्णरुचकादिन्यायेन कारणानुसारित्वात् कार्यस्य। अपिच- आकाशमपि तुच्छमिति बौद्धैरुच्यते। तत्कथमुपपद्यते। प्रतीयते हि स्पष्टमाकाशं 'अत्र श्येनः पतति, अत्र गृध्र'इति श्येनादिपतनदेशत्वेन। नन्वियं प्रतीतिश्चन्द्रसूर्यालोकविषयत्वेनोपपद्यते। महान्धकारे 'खद्योत इह पतती' ति प्रतीतिः खद्योतप्रकाशविषयत्वेनोपपद्यते। 'इह चन्द्र इह सूर्य' इति प्रतीतिरपि तत्तदालोकविषयत्वेनोपपद्यते। तदाश्रितस्याप्यालोकस्य स्वरूपसम्बन्धविशेषेण तदाधारतया प्रतीतिरप्युपपद्यते। 'वने तिलक'इति वृक्षसमुदायरूपस्य वनस्य स्वरूपसम्बन्धविशेषेण तिलकवृक्षाधारत्वप्रतीतिदर्शनात्। आकाशस्यापि हि श्येनाधारता स्वरूपसम्बन्धविशेषेणैवोपपादनीया। निबिडमूर्तद्रव्यस्य भूतलादेरिव तस्य मुख्यतया गुरुद्रव्याधारत्वासम्भवात्। किं च- 'इह पक्षी, नेह पक्षी' ति आधारत्वानाधारत्वप्रतीतिद्वयं अवयव-

भेदावच्छेदेन शक्यमुपपादयितुमालोके। नत्वाकाशे । तस्य निरवयवत्वात् । न चाकाशेऽपि तत्तदधःक्षितिभागभेद एव अवच्छेदकभेदस्स्यादिति वाच्यं। ऊर्ध्वाधरदेशयोः 'इह पक्षी, नेह पक्षी' ति प्रतीत्योस्तदभावात् । तस्माच्छ्येनपतनादिप्रतीतेरालोकविषयत्वसम्भवात् आकाशे सा न प्रमाणमिति चेत् उच्यते— अस्तितावत् 'प्राग्भागे श्येनः पतति प्रत्यग्भागे गृध्र' इत्यादिप्रतीतिः । तस्यां प्राग्देशादिरूपाधारः प्रतीयते । स एवाकाशः । तद्व्यतिरेकेण दिशोऽनंगीकारात् । तस्यैव तत्तदुपाधिभेदेन प्रागादिरूपत्वोपपत्तेः। न च वाच्यं तत्तदुपाधिसम्बन्धेन आलोक एव प्राग्भागादिरूपोऽस्त्विति । 'प्राग्भागे चन्द्रालोकः प्रत्यग्भागे तम' इत्यादिप्रतीतिष्वपि आलोकादेरप्याधारत्वेन प्रागादिदेशप्रतीतेः । एवं तर्हि प्राग्भागेऽवकाशोऽस्तीत्यादिव्यवहारेण अवकाशात्मकादाकाशादप्यन्यस्तदाधारो देशस्स्यादिति चेत् न । तत्रावकाशशब्दस्य निबिडमूर्तद्रव्यावस्थानविरोधिमूर्तद्रव्यान्तरनिरोधाभावपरत्वात् । अत एव 'प्राग्भागेऽवकाशोऽस्ति न प्रत्यग्भागे भुञ्जानैर्निबिड'इति क्वचिद्देशे अवकाशनिषेधोऽपि दृश्यते । न ह्याकाशस्य तत्र निषेधस्सम्भवति । सर्वगतत्वात् । असर्वगतत्वे चावरणापायेऽप्यवकाशाभावप्रसङ्गात् । न हि पूर्वमसन्नाकाशः । एवं च मूर्तद्रव्याभाव एवावकाशः तत्तदुपाध्यवच्छिन्नः प्रागादिव्यवहारालम्बनमस्तीत्यपि शङ्का निरस्ता । तस्य देशाधेयत्वेन प्रतीतेः, 'प्राग्भागेऽवकाशो नास्ति तत्र नीरन्ध्रमासते द्विजा'इति आवरणाभावरूपावकाशप्रतिषेधेऽपि प्रागादिदेशसत्त्वव्यवहाराच्च । नचैवमावरणाभावरूपावकाशस्येव प्राग्भागादिरूपदेशस्यापि देशाधेयत्वेन व्यवहारोऽस्ति । येन ततोऽपि व्यतिरिक्तो देशस्सिध्येत् । अयं प्राग्देश इत्यादिरेव हि व्यवहारः । न त्वस्मिन् देशे प्राग्देश इत्यादिरूपः । 'इहाकाश' इत्यपि लौकिकप्रतीतेस्तद्व्यतिरिक्तो देशस्स्यादिति चेन्न । लौकिकानामाकाशप्रतीतेरुपरि परितश्चावाङ्मुखेन्द्रनीलमहाकटाहवदवभासमाने मेरुशिखररत्नप्रभाविशेषत्वेनागमसिद्धे नीलद्रव्य एव व्यवस्थितत्वात तस्य दिग्विशेषाधेयत्वेन प्रतीत्यविरोधात् । देशरूपस्याकाशस्य 'इदानीमिह घट'इत्यादि

प्रतीतिषु कालवत् पदार्थविषयत्वेन भानंविना क्वचिदपि लौकिकप्रतीतौ स्वातंत्र्येण भानानङ्गीकारात् । तस्मादाकाशस्य प्रामाणिकत्वात् 'आकाशं निरोधद्वयमिति तुच्छत्रयमेव नित्यं, सद्रूपमन्यत्सर्वं क्षणिक'मित्येतदयुक्तं । ननु क्षणिकत्वं प्रामाणिकं कथं प्रत्याख्यायते । प्रत्यक्षं हि वर्तमानवस्तुविषयं, अवर्तमानादतीतात् पूर्वक्षणवर्तिनोऽनागताच्चोत्तरक्षणवर्तिनस्स्वविषयं व्यावृत्तमवगमयति । यथा 'नीलो घट' इति नैल्यविशिष्टप्रत्यक्षं अरुणादिव्यावृत्तं घटमवगमयतीतिचेत् उच्यते– उदाहृतमभिज्ञाज्ञानं घटस्य वर्तमानकालसम्बन्धमिव 'सोऽयं घट' इति प्रत्यभिज्ञानं तस्यावर्तमानकालसम्बन्धमपि विषयीकरोति । अतस्तदनुसारादेकस्य वर्तमानावर्तमानकालद्वयसंबंधसिद्धौ क्रमिकत्वेन कालद्वयस्याविरोधोपपत्तेश्च वर्तमानकालसंबंधविषयं ज्ञानमयोगव्यवच्छेदमवगमयेत् नान्ययोगव्यवच्छेदं स्वावच्छेदेन वाऽन्ययोगव्यवच्छेदं । न तु सर्वात्मना । अत एव चित्रपटे नैल्यज्ञानं नानीलव्यावृत्तिं गमयति । प्रदेशविशेषावच्छेदेन वा तां गमयति । न हि धर्मयोरविरोधो धर्मिभेदेनैवोपपादनीयः । अपि तु सामानाधिकरण्यप्रमित्यनुदयेनापि । तदुदये तु स्वमनीषिकामात्रकल्पितो विरोधो न प्रामाणिकानां हृदयंगमः । ननु स्मृतिप्रत्यक्षयोः क्लृप्तकारणाभ्यां 'स' इति 'अयं घट' इति च स्मृत्यनुभवरूपं ज्ञानद्वयमेव भवितु मर्हति । न प्रत्यभिज्ञारूपमेकज्ञानमिति चेन्न । तदिदं मया निहितं रजतमिति तदर्थिन इदमर्थे प्रवृत्तिदर्शनेन प्रत्यभिज्ञानस्यैकज्ञानत्वसिद्धौ तत्र कार्यबलात् तत्र संस्कारप्रत्यासत्तिसहितमिन्द्रियं कारणमिति कल्पनोपपत्तेः । ननु तथाऽपि प्रत्यभिज्ञाभ्रान्तिरूपैव क्रमसंवर्धमानेषु तरुगुल्मलतादिषु सन्ततसन्तन्यमानावयवोपचयापचयवत्सु गिरिसमुद्रादिष्वत्यन्तविलक्षणेषु बालवार्धक्यापन्नशरीरेष्वपि दृश्यते । अतः कूटसाक्षिणी प्रत्यभिज्ञा न क्वापि प्रमाणमिति चेन्न । उदाहृतप्रत्यभिज्ञानस्यावस्थाभेदेऽप्यवस्थावद्द्रव्यैक्यविषयत्वेन प्रामाण्योपपत्तेः । न हि प्रत्यभिज्ञानस्य अवस्थैक्यं विषयः येनाप्रामाण्यं भवेत् । किंत्ववस्थावद्द्रव्यैक्यमेव । न च आगमापाय्यवस्थातिरेकेणानेकावस्थानुयायि-

द्रव्यमेव नास्तीति वाच्यम्। तस्मिन्नन्तत उदाहृतप्रत्यभिज्ञानामेव प्रामाण्यसिध्या तत्प्रत्याख्यानायोगात्। ज्वालालूनपुनर्जातकेशनखादिप्रत्यभिज्ञामात्रस्य सादृश्यनिबन्धनभ्रान्तित्वकल्पनमपि न युक्तम्। बाधितज्ञानदृष्टान्तेन अबाधितज्ञानानामप्यप्रामाण्यकल्पने प्रमाणेन वस्तुसिद्धिमात्रस्य लोपप्रसङ्गात्। एतेन यद्बौद्धा वदन्ति— 'स्मृतिः पूर्वानुभूतेऽर्थे दर्शनं वार्तमानिके। तयोरत्यन्तभेदे च केनाभेदः प्रतीयताम्॥ रूपशक्त्यादिभेदेन बालाद्वृद्धोऽतिभेदवान्। परस्मिन्पूर्वरूपस्य न लेशोऽप्युपलभ्यते॥ परस्यापि न पूर्वत्र कथमेकन्तु तद्भवेत्। अवस्थानामयं भेदो नावस्थानवतो यदि॥ अवस्था एव दृश्यन्ते न स्वप्नेऽपि ततो पर' मिति। ननु इदं सर्वं क्षणिकत्वनिराकरणहेतुजालं वैभाषिकमत इव न सौत्रान्तिकमते प्रवर्तते। तत्र यत्प्रत्यक्षविषयस्य तत्कारणत्वं न स्यादिति प्रत्यभिज्ञाविरोधापादनं तत्तावन्नप्रवर्तते। सा हि प्रतिज्ञा बाह्यार्थप्रत्यक्षत्ववादिनामेव। यच्च क्षणिकत्वकल्पनस्य प्रत्यभिज्ञाप्रत्यक्षेण बाधवचनं न तदपि प्रवर्तते। बाह्यार्थेषु प्रत्यक्षप्रत्यभिज्ञायामसिद्धेः। एवञ्च 'घटादि क्षणिकं अर्थक्रियाकारित्वात् शरीरादिवदिति बौद्धानां क्षणिकत्वानुमानमपि प्रत्यभिज्ञानबाधासिध्या निरुपद्रवं। अस्ति चात्रविपक्षबाधकतर्कस्सत्वोच्छित्तिप्रसंगः। अर्थक्रियाकार्यत्वमेव हि सत्त्वं। न ततोन्यज्जात्यादिरूपं। प्रमाणाभावात्। तच्चस्थायित्वपक्षे न संभवति। तथा हि— स्थायी भावः स्वीयामर्थक्रियां क्रमेण कुर्यात् युगपद्वा। आद्ये कालांतरभाविनीं प्रत्यपि इदानीं समर्थो वा न वा। प्रथमेतावदिदानीमेव कुर्यात्। समर्थस्य क्षेपायोगात्। द्वितीये कालांतरेपि न कुर्यात्। नहीदानीमसमर्थः कालांतरे समर्थो भवति। युगपदिति पक्षे त्विदानीमेव कर्तव्यस्य सर्वस्य कृतत्वात् कालांतरे तस्यासत्त्वं भवेत्। ननु इह क्षणिकत्वानुमाने अस्ति प्रबलः प्रतिकूलतर्कः। क्षणिकत्वे हि त्वदुक्तविपक्षबाधकतर्कोपि न प्रवर्तते। तदुपयोग्याप्याद्यापादकभूयस्सहचारदर्शनोपाध्यभावावधारणव्याप्तिग्रहणादीनामैकाधिकरण्यनियमात्। मैवं। एवमादीनामैकाधिकरण्यानियमे क्षणिकत्ववादिनामसंप्रतिपत्तेः। अतिप्रसं-

गशंका तु कार्यकारणभावस्य नियामकत्वेन निवारणीया। चैत्रमैत्रादयोहि प्रत्येकं कार्यकारणभावापन्ननिरंतरसन्तन्यमानालयविज्ञानक्षणनिचयात्मकाः। तस्मात् सौत्रांतिकपक्षे न कोपि दोष इत्यधिकयः प्रत्यवतिष्ठमानानां सौत्रांतिकानां मतमित्थं— ज्ञानगतैर्नीलाद्याकारैः बाह्यार्थगतास्तेऽनुमीयंते। इंद्रियसन्निकृष्टेन नीलाद्यर्थेन जायमानं हि ज्ञानं स्वयमप्यर्थवन्नीलाद्याकारं भवति। तज्ज्ञानं स्वप्रकाशतया स्वात्मानं विषयीकुर्वत् स्वगतं नीलाद्याकारमपि विषयीकरोतीति ज्ञानस्य नीलादिषु नापरोक्ष्यानुभवः। नीलाद्यर्थिनो बहिः प्रवृत्तिस्तु नापरोक्षज्ञानात्। किंतु तदनन्तरभाविन आनुमानिकज्ञानात्। यथा वायुनिषेवणार्थिनश्शाखाचलनं दृष्ट्वा वृक्षमूले प्रवृत्तिः। न चाक्षुषशाखाचलनज्ञानात्। किंतु तल्लिंगवायुसञ्चारविषयानुमानिकज्ञानादिति। तत्रेदं दूषणं— इंद्रियसन्निकृष्टभावक्षणानन्तरक्षणे हि ज्ञानं जायते। तत्र तस्य भावक्षणस्य स्वधर्मसंक्रमणनिमित्तत्वं न युज्यते। असतः कुसुमादेः स्फटिकादिषु स्वधर्मसंक्रमणनिमित्तत्वादर्शनात्। तथाऽपि नीलादिसंक्रमणाभ्युपगमे तद्गतं पुरोवर्तित्व-नेदीयस्त्व-दवीयस्त्व-जडत्वादिकमपि संक्रामति न वा। संक्रामतिचेत्, आन्तरत्वज्ञानत्वादेस्तद्विरोधिनोऽवभासो न स्यात्। स्फटिके लौहित्यसंक्रान्तौ शौक्ल्यस्येव। अथ न संक्रामति दर्पणे मुखगतप्राङ्मुखत्वनेदीयस्त्वादिवत् तदा लिंगाभावात्तदवभासो न स्यात्। अतः क्षणिकवादे बाह्यार्थप्रत्यक्षस्येव तदनुमानस्यासम्भवात् अतस्तेषां व्यवहारसिध्यर्थं स्थायित्वमेवाङ्गीकरणीयम्। क्षणिकत्वेन भावानां यानीष्टप्राप्त्यनिष्टपरिहारार्थानि लौकिकानि विहितानि च कर्माणि तेषां यः कर्ता स न तत्फलभोक्ता। किंत्वन्य एवेत्यापत्तेरुदासीनानामपि फलसिद्धिस्स्यात्। कस्यापि कर्मसु प्रवृत्तिर्न स्यात्। भाविभोक्त्रैक्यभ्रमात् प्रवृत्तिरिति चेन्न। क्षणिकत्वनिश्चयवतःप्रवृत्त्यनुपपत्तेः। ननु भेदग्रहेऽपि पुत्रपौत्रादिपरम्परानुभाव्यफलेच्छया कर्मसु प्रवृत्तिदर्शनात्तथेहापि प्रवृत्तिस्स्यात्। तत्र कार्यकारणभावस्य नियामकत्वक्लृप्तेरिति चेत्। तर्हि पितृकृतानां सर्वेषां कर्मणां फलं पित्रनुभवादिफलस्मरणादिकञ्च पुत्रपौत्रादिपरम्परायां

भवेत् । कार्यकारणभावस्य स्वकीयविज्ञानसन्तान इव तस्यामपि सत्त्वात् । तस्मात् कार्यकारणभावस्यानियामकत्वात् फलादिव्यवस्थासिद्धये प्रत्यभिज्ञाप्रामाण्यनिर्वाहाय च आत्मनोऽन्येषां च स्थैर्यमेवाङ्गीकार्यम् । क्षणिकत्वानुमानस्य विपक्षबाधकतर्कस्तु न प्रवर्तते । समर्थस्यापि सहकारिसमवधानक्रमात् कार्यक्रमोपपत्तेरित्यादिक्षणिकत्वनिराकरणप्रपञ्चोऽन्यत्र द्रष्टव्यः ॥

संग्रहकारिका ॥

उक्ते वैभाषिकेण क्षणभवसमुदायद्वये सन्निकर्ष-
ज्ञानोपादानहानक्षितिजलदहनाद्युद्भवा नो घटन्ते ।
ज्ञानाकारानुमेयं तदसदपि तदा वक्ति सौत्रान्तिकाख्यो
नष्टार्थाकारसंक्रान्त्यघटनवचसा बोधनीयस्समन्दः ॥

इति समुदायाधिकरणम् ॥३॥

---

## नाभाव उपलब्धेः ॥२७॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥२८॥

## नभावोऽनुपलब्धेः ॥२९॥

क्षणिकत्वे नीलाद्यर्थानां प्रत्यक्षत्वमनुमेयत्वं वा न घटत इति वैशेषिकसौत्रांतिकमतयोरुक्तं दूषणं न योगाचारमते प्रवर्तते । नीलाद्यर्थानामान्तरविज्ञानरूपत्वेन स्वप्रकाशैस्तैरेव तत्प्रत्यक्षीकरणसंभवात् तदिति प्रत्यवस्थानात् सङ्गतिः । इदानीमिह योगाचारमतं घटपटादिज्ञानानां तत्तदर्थसाधारण्यं तत्तदर्थसारूप्यमन्तरेण न घटत इत्यवश्यं ज्ञानेऽर्थसरूपं रूपमास्थेयम् । तावतैव सर्वव्यवहारोपपत्तेः । ज्ञानाकारनीलादिव्यतिरेकेण बाह्यार्थकल्पना नीलादीनां विज्ञानाकारत्वे च 'नीलादिकं ज्ञानाभिन्नं भासमानत्वात् ज्ञानसहोपलम्भनियतत्वात् ज्ञानव' दित्यनुमानञ्च । न च सहत्वस्य भेदगर्भत्वाद्द्वितीयहेतुर्विरुद्ध इति वाच्यम् । ज्ञानोपलम्भव्याप्योपलम्भविषयत्वस्य तदर्थत्वात्, तदविनाभावरूपस्य च व्याप्यत्वस्याभेदेऽपि सत्त्वात् । न

चाभेदे 'इदं जानामी' ति क्रियाकर्मभावरूपभेदावभासविरोधः । तस्य द्विचन्द्रज्ञानवद्भ्रान्तित्वात् । तदाहुः 'सहोपलम्भनियमादभेदो भेदतद्धियोः । भेदस्तु भ्रान्तिविज्ञानैः दृश्यश्चन्द्रइवाद्वय' इति । बाह्यस्य नीलादेः कथमान्तरज्ञानभेदावभासो भ्रम इति चेत्, बाह्यत्वावभासोऽपि भ्रम एव । उपरि स्थितानां नक्षत्रादीनामुद्यतां भूमिस्थत्वावभासवत् । एतेन 'अहं जानामी' ति कर्तृकर्मभावेन भेदावभासोऽपि व्याख्यातः । तदप्याहुः— 'अविभागोऽपि बुध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यत' इति । ननु वस्तुत एकस्य ज्ञानस्य 'अहमिदं जानामी' ति कर्तृकर्मक्रियात्मतया भेदेनैव स्फुरणं कथमिति चेत्, पूर्वपूर्ववासनावशात् । घटाकारज्ञानोत्पत्त्यनंतरं कपालाकारज्ञानोत्पत्तिस्तु वासनावैचित्र्यादिति । इदमयुक्तं । कर्तुः क्रियाकर्मतया बाह्यत्वेन प्रत्यक्षायां नीलाद्युपलब्धौ जाग्रत्यां तेषां ज्ञानाभेदानुमानानामनुत्थानात् । न च वाच्यं 'बाह्यं नीलादिकमुपयद्भिरपि ज्ञानानां नीलाद्याकारत्वमनुभवसिद्धमंगीकार्यं । तेनैव सर्वव्यवहारोपपत्तौ किं बाह्यार्थकल्पनया । न हि नीलाद्याकारद्वयमुपलभ्यत' इति । यतो नीलाद्यर्थविशेषविषयेच्छादिव्यवहारानुगुण्यमेव ज्ञानस्य नीलाद्याकारः । नतु बाह्यार्थस्येव मुख्यं नीलाद्याकारत्वमस्ति । नीलशीतोष्णादिसमूहालंबनानां परस्परविरुद्धानेकरूपत्वापत्तेः । स्वप्नदृष्टांतेन ज्ञानानां बाह्यार्थशून्यत्वकल्पनमपि नयुक्तं । बाधाबाधाभ्यां स्वप्नजागरितज्ञानयोर्वैधर्म्यात्, अर्थशून्यस्य ज्ञानस्य क्वचिदप्यनुपलब्ध्या स्वप्नज्ञानानामपि तादात्विकविषयत्वाच्च । वासनावैचित्र्यात् विचित्रज्ञानोदयसमर्थनमप्ययुक्तं, निरन्वयविनाशवादे वासनाधानस्याप्यसंभवात् ।

संग्रहकारिका ॥

विज्ञानमेव त्रिपुटं योगाचारस्य जल्पतः ।
निह्नुतिर्वेद्यवेदित्रोः उपलब्ध्यैव वार्यते ॥

इति उपलब्ध्यधिकरणम् ॥ ४ ॥

## सर्वथाऽनुपपत्तेश्च॥३०॥

विज्ञानमात्रास्तित्ववादियोगाचारमतनिराकरणानंतरं तदप्यपलपतां माध्यमिकानां मतं निराक्रियत इति संगतिः । ते खलु एवमाहुः– ' नेष्टन्तदपि धीराणां विज्ञानं पारमार्थिकं । एकानेकस्वभावेन वियोगाद्वियदब्जवत् ॥ विज्ञानानामपि नीलपीतशीतोष्णाद्येकानेकस्वभावत्वविकल्पदौस्थ्यान्न परमार्थसत् अतस्तुच्छत्वमेव तत्व ' मिति । इदमयुक्तं । तुच्छत्वं प्रतिजानानस्य तत्तुच्छत्वं सत्त्वरूपमिति वा असत्त्वरूपमिति वा प्रकारांतरमिति वा अभिप्रायः । सर्वथाऽपि नसंभवति । लोके सत्त्वासत्वयोः नित्यानुवर्तमानद्रव्यावस्थाविशेषत्वेन आरंभणाधिकरणे प्रतिपादिततया तुच्छत्वं सत्त्वमेवेति वा, असत्त्वमेवेति वा, प्रकारांतरमिति वा, उपपादनासंभवात् सर्वेष्वपि कार्येषु सतएव कारणत्वेन केवलादसतः प्रकारांतरापन्नाद्वा कार्योत्पत्त्यभावात् । एतेन अभावात्मकत्वमेव तुच्छत्वं, चतुष्कोटिविनिर्मुक्तत्वं वा तुच्छत्वं । 'नसन्नासन्नसदसत् नचाप्यनुभयात्मकं । चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिकाविदु ' रितिवचनादिति निरस्तं । भावातिरिक्ताभावानंगीकारेण अभावकारणतोक्तेः सत्कारणवादएव पर्यवसानात् । सद्बुद्धिशब्दवत् सत्त्वानिषेधादिबुद्धिशब्दानामपि देशकालपरिच्छिन्नवस्तुविषयत्वेन ततस्तुच्छत्वासिद्धेः । इदमिदानीमस्ति इदमेवंरूपंभवतीति सत्त्वबुद्धिशब्दयोरपि देशकालवस्तुपरिच्छिन्नसत्त्वाविषयत्त्वेनैव लोके प्रसिद्धतया क्वचिदपि निरुपाधिकनिषेधासिद्धेः ॥

संग्रहकारिका ॥

सर्वशून्यत्ववादस्तु सर्वथानोपपद्यते ।
यस्मात्सदसदित्युक्ती वस्त्ववस्थातदाश्रये ॥

इति सर्वथानुपपत्त्यधिकरणम् ॥९॥

---

## नैकस्मिन्नसंभवात् ॥३१॥

## एवञ्चात्माकात्स्न्यर्म् ॥ ३२ ॥

**न च पर्यायादप्यविरोधोविकारादिभ्यः ॥ ३३ ॥**

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३४ ॥**

निरस्तास्सौगताः। जैनानिरस्यन्ते। ते किलमन्यंते— जीवधर्माधर्मपुद्गलकालाकाशाख्यषड्द्रव्यात्मकंजगत्निरीश्वरं। तत्र जीवा बद्धयोगासिद्धमुक्तास्त्रिविधाः। धर्मो गतिमतां गतिहेतुर्व्यापी द्रव्यविशेषः। अधर्मस्स्थितिहेतुर्व्यापी द्रव्यविशेषः। पुद्गलस्त्वणुभूधरसमुद्रादिः। 'अभूदस्ति भविष्यती'ति व्यवहारहेतुरणुद्रव्यविशेषः कालः। आकाशोऽप्येकः। किंत्वनन्तप्रदेश इति। पुनश्चापरमपि संग्रहं कुर्वंति। जीवाजीवास्रवबन्धनिर्जरसंवरमोक्षा इति। जीवा उक्ताः। अजीवो जीवभोग्यं सर्वं वस्तुजातं। आस्रवत्यनेन जीवो घटादिज्ञानरूपेणेत्यास्रव इंद्रियसंघातः। केचित्वास्रवति जीवे गच्छतिसति सर्वत्रानुगच्छतीति कर्मबंध आस्रव इत्याहुः। तदाह जिनदत्तः 'आस्रवः कर्मणा बंधो निर्जरस्तद्विमोचन'मिति। बंधः घातिकर्मचतुष्काघातिकर्मचतुष्कभेदेनाष्टविधः। तत्राद्यचतुष्कं जीवस्य ज्ञानदर्शनसुखवीर्यगुणानां मोक्षदशायामाविर्भविष्यतां प्रतिघातकं प्रवाहानादिपापरूपम्। द्वितीयचतुष्कं शरीर संस्थानतदभिमानतात्स्थिति तत्प्रयुक्तसुखादि निमित्तपुण्यामिश्रितत्वात् पुण्यरूपम्। निर्जरो निश्शेषं जीर्यत्यनेन कामक्रोधादिरिति व्युत्पत्त्या केशोल्लुंछनतप्तशिलारोहणादिरूपं तपः। संवर इंद्रियनिरोधः। स्वाभाविकात्मस्वरूपाविर्भावो मोक्षः। केचित्तु सततोर्ध्वगमनं मोक्षः। बंधमुक्तस्य ह्यूर्ध्वगमनं स्वभावः। यथा पञ्जरमुक्तशुकस्य, यथा वा निर्भिन्नस्य परिणतैरण्डबीजस्य, यथावा दृढपङ्कलिप्तस्य जलनिमज्जनप्रक्षीणपङ्कलेपस्य शुष्कालाबुफलस्य। इहत्वनादिकालप्रवृत्तबंधविगमात् सततोर्ध्वगमनं सर्वेषां लोकानामुपरि स्थितो निरवधिरलोकाकाशस्सततोर्ध्वगमनस्यावकाश इत्याहुः। तथा पठन्ति— 'गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः। अद्यापि न निवर्तन्ते त्वलोकाकाशमार्गगा' इति॥ अपरेत्वाविर्भूतज्ञानादिगुणस्योपरिदेशावस्थानं मोक्षइत्याहुः। सर्वमेतद्वस्तुजातं सप्तभङ्गीनयेन योजयन्ति।

'स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यं, स्यादस्ति चावक्तव्यञ्च, स्यान्नास्तिचावक्तव्यञ्च, स्यादस्ति च नास्तिचावक्तव्यञ्चे'ति। अत्र सत्वासत्व-सदसत्व सदसद्विलक्षणत्व-रूपानिर्वचनीयत्व विषयाश्चत्वारः प्रकाराः। पुनश्चानिर्वचनीयत्वेन सह सत्वासत्वसदसत्वसंयोजनेन त्रयः प्रकारा इत्येवं सप्तप्रकारावादिभिरुत्प्रेक्षितुं शक्याः। ते सर्वेऽपि प्रकारा जैनैरीषदीषत्स्वाङ्गीकृतेषु सर्वेष्वपि पदार्थेषु वर्ण्यते। स्याच्छब्द ईषदर्थ इति केचित्। अनैकान्त्यार्थ इत्यन्ये। उभयथाऽपि तिङन्तप्रतिरूपकमव्ययम्। सत्वे प्रदर्शितः सप्तभङ्गीनयस्स्यान्नित्यं स्यादनित्यमित्यादिरूपेण नित्यत्वभिन्नत्वादिधर्मेष्वपि समान इति तदिदं जैनमतमपि न युक्तम्। एकस्मिन्विनोपाधिभेदं विरुद्धानेकधर्मसमावेशासम्भवात्। नन्वेकस्मिन्नपि देशकालाद्युपाधिभेदेन विरुद्धधर्मसमावेशोऽभ्युपगम्यते। स न तत्रोपाधिभेदस्सम्भवतीत्येतावताऽभ्युपगम्यते। किं तु प्रमाणवत्त्वेन। अत एव पिंडत्वघटत्वयोः कालोपाधिभेदेन समावेशमभ्युपगच्छताऽपि सिद्धान्तिना जीवत्वेश्वरत्वादीनां तथा समावेशे प्रमाणन्नास्तीति तेषां यत्किंचिदुपाधिभेदेन समावेशो नाभ्युपगम्यते। एवञ्च प्रमाणाधीन एव धर्मसमावेशः। न तूपाधिसम्भवाधीन इति स्थिते सत्यत्वादिकं व्यवस्थापयाद्भिस्तैस्तैर्वादिभिरुपपादितानि सत्वासत्वसदसत्त्वादिषु प्रमाणानीति तेषां समावेशः कुतो न स्यादिति चेन्न। तैस्तैर्वादिभिरुत्प्रेक्षितानां सर्वेषां प्रामाण्यासंभवात् परस्परविरोधित्वेन केषांचिदाभासत्वावश्यंभावात्। अन्यथा प्रपंचसत्त्वादिवादिभिस्तदसत्यत्वादौ दोषाणामप्युच्यमानत्वेन तेषामप्यारोप्यत्वापत्त्याऽनैकांत्यवादिनस्तत्तद्वाद्युक्तदोषभाक्त्वस्यापि प्रसंगात्। एतेन यदुक्तं स्याद्वादमंजर्या— 'अन्योन्यपक्षप्रतिपक्षभावाद्यथापरे मत्सरिणः प्रवादाः। नयानशेषानविशेषमिच्छन्नपक्षपाती समयस्तथान' इति, तन्निरस्तं। अपक्षपातेन सकलसमयोक्तसत्त्वादिसंग्रहे तत्तदुक्तासत्वदोषाणामपि संग्रहापत्तेः। ननु तर्हि लोकाविरोधेनैव सप्तभंगीनयं समर्थयामहे। सर्वसंप्रातिपन्नेन तावदेकस्य कालभेदेन सत्वासत्वे। अतस्तयोस्स्वस्वकालविवक्षया अस्तीति

नास्तीति च भंगद्वयं क्रमविवक्षया सदसदिदमिति तृतीयभंगः युगपत्सत्वा-सत्वविवक्षयाऽनिर्वचनीयमिति चतुर्थभंगः । न हि युगपदेकस्य सत्वमसत्वं च निर्वक्तुंशक्यं । युगपत्सत्वासत्वयोरनिर्वचनीयत्वेन सह सत्वस्यासत्वस्य क्रमिकोभयस्य च मेळनेऽवशिष्टं भंगत्रयमिति । तदाहानंतवीर्यः– 'तद्विधानाविवक्षायां स्यादस्तीति गतिर्भवेत् । स्यान्नास्तीति प्रयोगस्स्यात् तन्निषेधे विवक्षिते ॥ क्रमेणोभयवांछायां प्रयोगस्समुदायभाक् । युगपत्तद्विवक्षायां स्यादवाच्यमशक्तितः ॥ आद्यावाच्यविवक्षायां पंचमो भंग इष्यते । अंत्यावाच्यविवक्षायां षष्ठभंगस्समुद्भवी ॥ समुच्चयेन युक्तश्च सप्तमो भंग उच्यत ' इति । तस्मादविरोधेन सप्तभंगीनय उपपद्यत इति चेत्, यद्येवं पारिभाषिकोयं सप्तभंगीनयः तदास्वीक्रियत एव । घटादिस्स्वदेशेऽस्ति-अन्यदेशे नास्ति, स्वकालेऽस्ति-अन्यकाले नास्ति, स्वात्मनास्ति- अन्यात्मना नास्तीति देशकालप्रतियोगिभेदेन सत्वासत्वसमावेशे लौकिकपरीक्षकाणां विप्रतिपत्त्यभावात् । न चैतावता जैनाभिमतवस्त्वनैकांत्यसिद्धिः । स्वकाले सदेव अन्यकाले असदेवेत्यादिनियमक्षत्यभावात् । ननु सर्वधर्मानैकांत्यवादिनामेकत्वमपि न व्यवस्थितं । अतः ' स्यादनेक ' मित्यनेकत्वपर्यायमादाय सत्वासत्वादिसमावेश उपपाद्यत इति चेन्न । प्रथमापेक्षितस्यैकत्वानेकत्वसमावेशस्याप्यविरोधेनोपपादयितुमशक्यत्वात् । संख्यैकांत्यानङ्गीकारे जीवधर्माधर्मादीनि षड्द्रव्याणीति स्वसिद्धान्तास्थित्युपन्यासायोगाच्च । किं बहुना । सर्वानैकान्त्यवादिनां 'अयमस्याः पुत्रः, अयमस्याः पतिः, अयमस्याः पिते'त्यादिव्यवस्थाया अप्यसिध्या तस्यां पुत्रादीनां मातृत्वाद्युचितव्यवहारा अपि न व्यवतिष्ठेरन् । तस्मात् सर्वबहिष्कार्योऽयमनेकान्तवादः । किं चात्मा देहपरिमाण इति जैनैरिष्यते । तदप्ययुक्तम् । मातङ्गशरीरं व्याप्य स्थितस्यात्मनो मशकशरीरप्रवेशे वैकल्यप्रसङ्गात् । मशकशरीरान्मातंगशरीरं प्रविशतस्तद्व्यापनसमर्थपरिणामाभावेन तत्र तस्य सर्वांगीणसुखानुभवाभावप्रसंगाच्च । ननु संकोचविकासवानात्मा तत्तच्छरीरानुसारेण संकोचरूपं विकासरूपं वा पर्यायमवस्थांतरमापद्यत इत्य-

भ्युपेयते । अतो न दोष इति चेन्न । तथासत्यात्मनो विकार तत्प्रयुक्ता-नित्यत्वादिप्रसंगात् । तस्मान्मोक्षदशायामात्मनो यदंत्यं परिमाणं तस्य त-थैवावस्थानं जैनैरपि वक्तव्यं । तदनंतरं देहांतराभावेन तदुचितपरिमा-णाप्रसक्तेः । अतो मोक्षदशावस्थितात्मस्वरूपवत् तत्परिमाणस्यापि नि-त्यत्वाविशेषात् तदेवात्मनस्स्वाभाविकं परिमाणमित्यंगीकर्तुं युक्तं । न तु संकोचविकासवत्त्वम् ॥

संग्रहकारिका ॥

सप्तभंगीनये कार्या न प्रत्याशा दिगंबरैः ।
सत्वासत्वादियुगपत् नन्वेकस्मिन्नसंभवि ॥

इति एकस्मिन्नसंभवाधिकरणं ॥६॥

---

## पत्युरसामञ्जस्यात् ॥३५॥

## अधिष्ठानानुपपत्तेश्च ॥ ३६ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ ३७ ॥

## अन्तवत्वमसर्वज्ञता वा ॥३८॥

सत्वासत्वादिविरोधाज्जैनानां मतमिव परस्परविरोधाद्वेदविरोधाच्च शैवानां मतमप्यसमंजसमित्युपपाद्यत इति संगतिः । कापाल-काळामुख-पाशुपत- सिद्धांतशैवाख्यचतुर्विधशैवमध्ये कापालानां काळामुखानांच मतं भाष्ये प्रदर्शितं । पाशुपतास्त्वित्थमाहुः- कार्यकारणयोगविधिदुःखांताः पंच पदार्थाः पशुपाशविमोक्षाय बोद्धव्याः । तत्र कार्याणि पृथिव्यादीनि पञ्चभूतानि, रूपादयः पञ्च गुणाश्चेति दशविधानि । करणानि ज्ञानेन्द्रियाणि पञ्च, कर्मेन्द्रियाणि पञ्च, मनोबुध्यहङ्काररूपाणि त्रीण्यन्तःकरणानीति त्रयोदशविधानि । ध्यानादिरूपो योगः । धर्मार्थव्यापारो विधिः । स व्रतद्वाररूपेण द्विविधः । भस्मस्नानभस्मशयनोपहारादिव्रतम् । भस्मस्नानं द्वि-विधम् । त्रिषवणकर्तव्यं जलस्नानप्रतिनिधिरूपं नित्यमेकम् । मलमूत्रोत्स-

र्जनक्षुतनिष्ठीवनादिषु कर्तव्यं जलशुद्धिप्रतिनिधिरूपानुस्नानाख्यं नैमित्तिक-मन्यद्भस्मस्नानम् । भस्मशयनञ्च गृहस्थगृहेष्वन्नवह्निक्षितेन भस्मना कार्यं। उपहारष्षड्विधः– हसितगीतनृत्तहुडुकारनमस्कारजपभेदेन । तत्र हसित-मट्टहासः । गीतं नृत्तञ्च यथारुचि गान्धर्वशास्त्रानादरेण । हुडुकारो जिह्वा तालुसंयोगेन निष्पाद्यमानो वृषभनादसदृशो नादः । यत्र लौकिका नभवंति तत्र चत्वार्येतानि गूढं प्रयोक्तव्यानि । जपः पञ्चब्रह्ममन्त्राणां नमस्कारः प्रसिद्धः । द्वाराणि कायनस्पन्दनमन्दयानशृङ्गारणापितत्करणापितद्भाषण भेदेन षड्विधानि । असुप्तस्येव सुप्तलिङ्गप्रदर्शनं कायनम् । वातव्याध्यभि भूतस्येव शरीरावयवानां कम्पनं स्पन्दनम् । उपहतपादेन्द्रियस्येव गमनं मन्दयानम् । रूपयौवनसम्पन्नां कामिनीमवलोक्यात्मानं कामुकमिव यैर्वि-लासैः प्रदर्शयति, तदाचरणं शृङ्गारणम् । कार्याकार्यविवेकविकलस्येव लोकनिन्दितकर्मकरणमपितत्करणम् । व्याहतापार्थकादिशब्दोच्चारणमपि तद्भाषणम् । दुःखान्तो द्विविधः । अनात्मकस्सात्मकश्च । अनात्मकस्सर्व-दुःखानामत्यन्तोच्छेदः । सात्मकस्तु दृक्क्रियाशक्तिबललक्षणमैश्वर्यम् । तत्र दृक्छक्तिरेकाऽपि विषयभेदात्पञ्चधोपचर्यते । दर्शनं श्रवणं मननं विज्ञानं सर्वज्ञत्वं चेति । सूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पार्शनादिविषयं ज्ञानं दर्शनम्। अशेषशब्दविषयं ज्ञानं श्रवणम् । निरवशेषशास्त्रविषयं ज्ञानं मननम् । ग्रन्थतोऽर्थतश्चासन्दिग्धं ज्ञानं विज्ञानम् । सर्वज्ञत्वं प्रसिद्धम् । क्रियाशक्तिरेकाऽपि त्रिविधोपचर्यते– मनोजवत्वं कामिरूपत्वं विकरणध-र्मित्वञ्चेति । निरतिशयशीघ्रगामित्वं मनोजवित्वम् । कर्मानपेक्ष्य स्वेच्छयै-वानन्तशरीरेन्द्रियाधिष्ठातृत्वं कामिरूपित्वम् । उपसंहृतशरीरेन्द्रियस्यापि निरतिशयैश्वर्यशालित्वं विकरणधर्मित्वम् । पशुपतिस्तु परमेश्वरस्सर्वत्रापि कार्ये निमित्तम् । पशूनां कर्मानपेक्ष्य स्वेच्छयैव फलप्रदः । निरतिशयस्वा-तंत्र्यशालित्वात् । न चैवं कर्मवैयर्थ्यम् । ईश्वरेच्छानुगृहीतकर्मणस्साफ-ल्यात् , तदननुगृहीतस्य कर्मणः पर्जन्याननुगृहीतकृषिकर्मण इव वैफ-ल्येऽपि दोषाभावात् , तदनुग्रहसम्भावनया कर्मसु प्रवृत्त्युपपत्तेः ।

सृष्टिक्रमोऽपि तादात्विकेश्वरेच्छाधीनः । न तु नियमेनाकाशादिरिति। एवंविधस्य पाशुपतमतस्य कापालकाळामुखमताभ्यां विरोधस्स्पष्टः। भस्मस्नानादेः क्रियातस्साम्येपि शवभस्मवत् किंचिद्भस्माभिक्षितं भस्मेति ग्राह्यभस्मस्वरूपेऽस्ति विरोधः। वेदेनचास्ति विरोधः। न हुडुकारादिकं वेदेषु तदुपबृह्मणेषु स्पष्टमस्ति। शृङ्गारणं भस्मस्नानानुस्नानाभ्यां प्रत्याम्नानतया जलस्नानं जलशुद्धिनिवर्तनं प्राणिकर्मनियतसृज्यक्रमानपेक्षणश्चात्यंतं वेदमार्गविरुद्धं। एवं कापालादिशैवत्रयं परस्परविरोधाद्वेदविरोधाच्चासमंजसमिति सिद्धं। यद्यपि सिद्धांतशैवस्य नात्यंतं वेदविरोधोस्ति। वेदविरोधाभावे च कामिकादिवातुळांतानामष्टाविंशतितंत्ररूपाणामवांतरभेदानां परस्परविरोधस्त्वागमसिद्धांतदिव्यसिद्धांततंत्रसिद्धांततंत्रांतरसिद्धांतरूपपांचरात्रावांतरतंत्रभेदपरस्पराविरोधवत् तत्तत्तंत्रदीक्षिताधिकारिभेदेन समाधातुं शक्यः। कामिकादिषु शिवागमस्य वेदादुत्कर्षोक्तिश्च पांचरात्रस्य तत उत्कर्षोक्तिवत् समाधातुं शक्या । तथापि वेदप्रामाण्यमंगीकृत्यापि वेदं प्रच्छाद्य सिद्धांतशैवतंत्रेषु यदनुमानेनैवेश्वरप्रसाधनं कृतं तन्नूनं यथावेदमीश्वराभ्युपगमे प्रायः कारणवाक्येषु पुरुषोत्तमासाधारणेन नारायणनाम्ना कारणवस्तुनिर्देशात् स एव जगत्कारणं परब्रह्म भवेदिति तत्प्रच्छादनार्थमित्यवसीयते। अतस्तेषामनुमानेनेश्वरप्रसाधनमात्रस्यासामञ्जस्यमुद्भावयामः। लोके कुलालमृत्पिण्डादिभेददर्शनेन हि श्रुतिसिद्धजगन्निमित्तोपादानाभेदमविगणय्यानुमानेन केवलनिमित्तेश्वरः प्रसाध्यते। तर्हि लोकदर्शनेनैव शरीरित्वमप्यंगीकरणीयं। शरीरिण एव कुलालादेः कर्तृत्वदर्शनात्। न चाधिष्ठेयं मायादिकमेव तस्य शरीरं भवेत, स्वशरीरव्यापारे नियम्यातिरिक्तशरीरानपेक्षणस्य दृष्टत्वादिति वाच्यं। न हि शरीरमात्रमापादयामः। किं तु भोगाश्रयरूपं। भोगार्थं तथाभूतं शरीरमधितिष्ठतो हि सुखार्थं दुःखपरिहारार्थं वा काचित्कत्वं दृष्टं । तथा च कर्तृत्वनिर्वाहार्थं भोगाश्रयशरीराभ्युपगमे तन्मूलपुण्यपापवत्वं, शरीरस्यानित्यत्वनियमात् अंतवत्वं, जननमरणावृत्तिमतां किंचिज्ज्ञत्वदृष्टेरसर्वज्ञत्वं च, स्यात्। अतोऽ

नुमानेनेश्वरसिद्धिमिच्छतां यथाभिमतरूप ईश्वरो नसिध्येदिति । यत्तु शास्त्रयोनित्वाधिकरणे अनुमानेनेश्वरसिद्धौ ईश्वरानेकत्वादिकमपि सिध्येदिति दूषणमुक्तं, तदप्यत्रत्यदूषणमेव । अत्रैव सूत्रकारस्यानुमानदूषणकंठोक्तिदर्शनात् । तत्र तु सूत्रकृतां 'तंत्वौपनिषदमि'त्यादिश्रुतितात्पर्यविचारेणैव परमेश्वरस्य शास्त्रयोनित्वं व्यवस्थापितं । अतो न तेन पौनरुक्त्यं । 'रचनानुपपत्ते'श्चेति सांख्याधिकरणे मृद्धटादिन्यायेन सुखदुःखमोहात्मकस्य जगतस्तत्सरूपेण कारणेन भवितव्यमित्यनुमिमानं सांख्यं प्रति तर्हि तद्दृष्टांतेनैव चेतनाधिष्ठानेनैव भाव्यमित्येतावन्मात्रमापादितं । न तु स्वतंत्रमीश्वरानुमानमनवद्यमिति तेनेश्वरः प्रसाधितः । अतस्तत्रेश्वरानुमानमनुमोदितं । इह दूषितमिति न विरोधः ।

संग्रहकारिका ॥

पत्युर्मतं नादरणीयमेव परस्परेण श्रुतितोऽपि बाधात् ।
निमित्तमात्रेश्वरकल्पनाया मधिष्ठितेरप्यसमंजसत्वात् ॥

इति पशुपत्यधिकरणं ॥७॥

---

## उत्पत्त्यसंभवात् ॥३९॥

## न च कर्तुः करणम् ॥४०॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥४१॥

## विप्रतिषेधाच्च ॥४२॥

पाशुपतवत् पाञ्चरात्रस्यापि तंत्रत्वेनाप्रामाण्यमाशंक्य निरस्यत इति संगतिः । पाञ्चरात्रिणो भागवता मन्यन्ते— भगवान्नारायणः परंब्रह्म स वासुदेवादिचतुर्व्यूहात्मनाऽवतिष्ठते । तत्र वासुदेवः परिपूर्णषाड्गुण्यशाली । षड्गुणास्तु ज्ञानबलैश्वर्यवीर्यशक्तितेजांसि । तत्र चेतनाचेतनात्मकसकलप्रपञ्चगताशेषविशेषोल्लेखिततया सकलवस्तुगोचरं तस्य ज्ञानं ज्ञानमुच्यते । जगत्प्रकृतिभावश्शक्तिः । जगत्सृजतोऽस्य श्रमाभावस्तिलकाळकवदप्रयत्नेन स्व-

सृष्टसकलजगद्धरणञ्च बलम् । अप्रतिहतेच्छत्वमैश्वर्यम् । जगत्प्रकृतित्वेऽपि पयसो दधिभावेनेव विकारविरहो वीर्यम् । जगत्सृष्टौ सहकार्यनपेक्षत्वं पराभिभवसामर्थ्यञ्च तेजः । ततो ज्ञानबलोन्मेषेण सङ्कर्षणरूपः प्रादुर्भवति । ततो वीर्यैश्वर्योन्मेषेण प्रद्युम्नरूपः । ततश्शक्तितेजस्समुन्मेषेणानिरुद्धरूपः ।। सङ्कर्षणादयश्च जीवमनोऽहङ्काररूपाः । एवं चतुर्व्यूहं भगवन्तं प्रत्यहं पाञ्चकालिकेनाभिगमनादिपञ्चकेन वार्षशतिकादिव्रतेन समाराध्य पुरुषः क्लेशैर्मुच्यते । तत्राभिगमनं प्रातर्भगवन्मन्त्रजपस्तुतिनमस्कारादिकम् । ततः पूजार्थपुष्पादिसम्पादनमुपादानम् । ततः पूजनमिज्या । ततो भगवच्छास्त्रतदनुगुणपुराणागमश्रवणादिकं स्वाध्यायः । ततस्सायंसन्ध्यानन्तरं भगवति चित्तसमाधानं योग इति । तदिदमयुक्तमिति पूर्वपक्षः । तथा हि— पाञ्चरात्रे जीवस्योत्पत्तिराम्नायते । 'वासुदेवात्सङ्कर्षणो नाम जीवो जायते । सङ्कर्षणात्प्रद्युम्नसंज्ञं मनो जायते । तस्मादनिरुद्धसंज्ञोऽहङ्कारो जायत' इति । न च जीवस्यानादेरुत्पत्तिस्सम्भवति । न च सङ्कर्षणादीनां जीवाद्यभिमानित्वमनेनोच्यत इति वाच्यम् । तथा सति 'सङ्कर्षणो नाम जीव' इत्याद्यनुपपत्तेः । अनेन हि प्रसिद्धानामेव जीवमनोऽहङ्काराणां पाञ्चरात्रपरिभाषया सङ्कर्षणप्रद्युम्नानिरुद्धनामानि विधीयन्ते । ततश्च सङ्कर्षणादिनामभिरनूद्य तस्मिन् शास्त्रे यद्विग्रहायुधादिविधानं तत्ककाराद्यक्षराणां वर्णविशेषविधानवत् तेषामेव ध्यानार्थमिति सिध्यति । न तु मनोऽभिमानिनो देवाः तत्तद्विग्रहायुधादिविशिष्टा इति । किं च जीवस्योत्पत्तिरिव जीवात् कर्तुः मन आदिकरणोत्पत्तिश्च न सम्भवति । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि चे'ति परस्मादेव ब्रह्मणो मनआद्युत्पत्तिश्रवणात् । तस्मात् पाञ्चरात्रस्यापि वेदविरोधादप्रामाण्यमिति ।।

सिद्धान्तस्तु— पाञ्चरात्रे वासुदेवाज्जीवस्य जीवादिभ्यो मन आदीनामुत्पत्तिश्च नोक्ता । किंतु जीवाद्यधिष्ठातॄणां सङ्कर्षणादिव्यूहानां प्रादुर्भाव एव 'अजायमानो बहुधा विजायत' इति श्रुतिसिद्ध उक्तः । 'जनीप्रादुर्भाव' इति च धातुः । न तु प्रसिद्धानां जीवादीनां सङ्कर्षणादिसंज्ञा

उक्ताः । तत्र जीवादिशब्दानां नियाम्यवाचिनां तत्तन्नियन्तृव्यूहविशेषपरत्वाच्छरीरवाचिनां शरीरिपर्यन्तत्वस्यापृथक्सिद्धप्रकारवाचिनां प्रकारिपर्यंतत्वस्य च द्वितीयाध्याये व्युत्पादयिष्यमाणत्वात् , पाञ्चरात्र एव जीवं प्रकृत्य 'सह्यनादिरनन्तश्च पारमार्थ्येन निश्चित' इति तस्योत्पत्तिप्रतिषेधाच्च । तस्माद्भगवता वासुदेवेन प्रणीतं पाञ्चरात्रं प्रमाणमूर्धन्यमेवेति ॥

संग्रहकारिका ॥

जीवोत्पत्त्यभिधानान्नग्राह्यं पाञ्चरात्रमिति चेन्न ।
व्यूहाभिव्यक्त्युक्तेस्तत्र निषेधाच्च जीवजनेः ॥

इति उत्पत्त्यसम्भवाधिकरणम् ॥८॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे द्वितीयस्याध्यायस्य

द्वि ती यः पा दः ॥

---

श्रीमते हयवदनपरब्रह्मणे नमः ॥

---

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

## ॥ द्वितीयस्याध्यायस्य तृतीयःपादः ॥

सांख्यादितंत्राणां न्यायाभासमूलत्वाद्विप्रतिषेधाच्चासामंजस्यमुक्तं । इदानीं स्वपक्षस्यापि वियदुत्पत्त्यनुत्पत्त्यादिविषयश्रुतिविप्रतिषेधदोषोस्तीति प्रतिबंदीं मनसि विपरिवर्तमानां निरासितुं तदभावख्यापनाय ब्रह्मकार्यस्य प्रपञ्चस्य कार्यताप्रकारः पादद्वयेन विशोध्यते । नन्वेवं सति वियदादि कार्यत्वप्रसाधनस्य परोक्तदोषपरिहारार्थेन प्रथमपादेन संगत्या तदानंतर्य

स्यात् । कारणविषयपादद्वयानंतरं कार्यविषयपादद्वयारंभ इति चेत् तर्हि कार्यविषयस्यास्य पादद्वयस्याध्यायसंगतिरेव न स्यात् । प्रथमाध्यायनिरूपिते वेदांतानां जगत्कारणब्रह्मसमन्वये परिपंथिनो विरोधस्य समाधानं हि द्वितीयाध्यायार्थ इति चेत् उच्यते– कारणविषयश्रुतीनां ब्रह्मणि समन्वयो वियदाद्युत्पत्तिश्रुतीनां स्वार्थसमन्वयमपेक्षते । अन्यथा वियन्नित्यत्वे पवनादीनां वियदादिजन्यत्वे च ब्रह्म कथं वियदादिकस्य कारणं भवेत् । कथंच ब्रह्म सर्वस्य कार्यस्य कारणं स्यात् । अतो वियदाद्युत्पत्तिश्रुतिसमन्वयचिंता, तदनुबंधेन जीवनित्यत्वज्ञातृत्वाणुत्वादिचिंता । अथवा ' विप्रतिषेधाच्चासमंजस ' मित्यादिसूत्रैस्सांख्यादिदर्शनानां परस्परविरोधादप्रामाण्ये समर्थिते वेदांतेष्वपि वियदादेर्जीवस्यचोत्पत्त्यनुत्पत्तिश्रुतीनां जीवस्य ज्ञातृत्वज्ञानरूपत्वादिश्रुतीनां च परस्परविरोधेनाप्रामाण्ये तेषां कारणविषयेप्यप्रामाण्यशंकया निर्विचिकित्सं प्रामाण्यं नसिध्येदिति प्रथमाध्यायनिरूपितकारणविषयश्रुतिसमन्वयाक्षेपकतया ज्ञातृत्वादिविचारस्यापि साक्षादेव संगतिरनुसंधेया । इह प्रथमं वियदुत्पत्तिस्समर्थ्यते–

**नवियदश्रुतेः ॥१॥**

**अस्तितु ॥२॥**

**गौण्यसंभवाच्छब्दाच्च ॥ ३ ॥**

**स्याच्चैकस्य ब्रह्मशब्दवत् ॥४॥**

**प्रतिज्ञाहानिरव्यतिरेकात् ॥ ५ ॥**

**शब्देभ्यः ॥६॥**

**यावद्विकारंतु विभागो लोकवत् ॥७॥**

**एतेन मातरिश्वा व्याख्यातः ॥८॥**

**असंभवस्तु सतोऽनुपपत्तेः ॥९॥**

वियदुत्पद्यते नवेति तदुत्पत्तिप्रतिपादनक्षमश्रुतिसंभवासंभवाभ्यां संशये पूर्वपक्षः– वियन्नोत्पद्यते। तदुत्पत्तिप्रतिपादनक्षमश्रुत्यभावात्। छांदोग्ये तावत् तद्विषया श्रुतिरेव नास्ति । तैत्तरीयकाथर्वणादिषु सत्यपि सा न तदुत्पत्तिप्रतिपादनक्षमा। निरवयवत्वेन सर्वगतत्वेन च तस्य नित्यत्वावगमात्। नच द्वितीयहेतोरसिद्धिः। क्वचिदपि तदभावस्य बुध्यारोहासंभवात्। अत्र वियन्नास्तीति निषेधस्य व्याहतत्वात्। यत्र निषिध्यते तस्यैव देशस्य वियद्रूपत्वात्। अतस्तैत्तिरीयकश्रुतौ वियतिश्रुता संभूतश्रुतिः 'एतस्माज्जायते प्राणोमनस्सर्वेंद्रियाणि च। खंवायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' त्याथर्वणे वियत्यनुषक्ता जायतेश्रुतिश्च गौण्येव वाच्या। नच श्रुतानुषक्तयोस्सम्भूतशब्दयोर्जायतेशब्दयोश्चार्थभेदे कश्चिद्दोषः। आथर्वणएव 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत' इति श्रुतयोरपि ब्रह्मशब्दयोर्मुख्यामुख्यत्वदर्शनात् वियदुत्पत्तिवादिनाऽपि 'आकाशवत्सर्वगतश्च नित्य' इति श्रुतौ सकृच्छ्रुतयोर्नित्यसर्वगतशब्दयोः एकत्र मुख्यत्वस्य अन्यत्रामुख्यत्वस्य च अङ्गीकर्तव्यत्वाच्चेति। एवं प्राप्ते सिद्धान्तः–

यत्र तेजसः प्राथम्यं श्रुतं, तत्रैव छान्दोग्ये मृत्पिण्डादिदृष्टान्तपूर्वकं एकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तस्याहानिः आकाशस्यापि ब्रह्मकार्यत्वेन तदव्यतिरेकादेव भवति। तेनाकाशस्य ब्रह्मकार्यत्वं छान्दोग्यश्रुतेरप्यनुमतमवसीयते। 'सदेव सोम्येदमग्रआसी'दिति सृष्टेःप्रागेकत्वावधारणं 'ऐतदात्म्यमिदं सर्व' मिति सर्वस्य ब्रह्मात्मत्वप्रतिपादनमित्यादिशब्दैश्च तथाऽवसीयते। एवंचैभिश्शब्दैराकाशस्यापि साधारण्येन ब्रह्मविकारत्वेऽध्यवसिते तस्य विशिष्यापि ब्रह्मणो विभागरूपोत्पत्तिरुक्तैव भवति। यथा लोके 'सर्व एते देवदत्तस्य पुत्रा' इति सामान्येनाभिधाय केषांचिद्विशिष्य तत उत्पत्तिवचनेन सर्वेषामपि तत उत्पत्तिरुक्तैव भवति। एवं सति छान्दोग्ये तेजस्सृष्टिप्राथम्यश्रवणं कथमितिचेत् न खलु ब्रह्मणा तेजःप्रथमं सृष्टमिति श्रुतम्। येन श्रुतिप्राप्तं तत्प्राथम्यं स्यात्। किंतु

तेजस्सृष्टिः प्रथमपठितेति स्थानप्रमाणतस्तत्प्राथम्यं प्राप्नोति। नच स्थानप्रमाणं 'आकाशस्सम्भूत' इति सम्भूतश्रुतेरीष्टे। आकाशस्य नित्यत्वसाधको निरवयवत्वहेतुरप्रयोजकः। श्रुत्युदाहृतैकमृत्पिण्डारब्धघटशरावादिन्यायेन परिणामवादे निरवयवस्याप्यनित्यत्वोपपत्तेः। नच इह वियत् नास्तीति निषेधस्य व्याहत्या सर्वगतत्वसिद्धिः। तत्र इहप्रत्ययवेद्यस्य निबिडमूर्तद्रव्याभावरूपावकाशपरत्वोपपत्तेः। इह अवकाशे स्थातव्यमित्यादिव्यवहारेषु तस्यापि इहप्रत्ययवेद्यत्वात्। एवं सति 'वायुश्चान्तरिक्षं चैतदमृत' मिति वियदमृतत्वश्रुतेः का गतिरिति चेत्, वाय्वमृतत्वश्रुतेर्या गतिः सैव। स्पष्टोत्पत्तिकस्य वायोरपि ह्यमृतत्वं श्रूयते। किं वहुना। ब्रह्मव्यतिरिक्तं यद्यावदस्ति अव्यक्तमहदहङ्कारतेजःप्रभृतिकं, तत्सर्वमपि वियद्वायुवदुत्पत्तिमदेव। सर्वविज्ञानप्रतिज्ञाद्यनुरोधात्॥

संग्रहकारिकाः॥

वियन्नित्यं निरंशत्वादमृतत्वस्य च श्रुतेः।<br>
सृष्टौ च तेजःप्राथम्याद्गौणी तज्जननश्रुतिः॥<br>
असाधकं निरंशत्वममृतत्वममर्त्यवत्।<br>
श्रुतं न तेजःप्राथम्यं बाधः पाठेन कल्पने॥<br>
तस्माज्जनिमदाकाशं मरुच्च महदादिभिः।<br>
एवं हि सर्वविज्ञानप्रतिज्ञाद्युपपद्यते॥

इति वियदधिकरणम्॥१॥

---

**तेजोऽतस्तथाह्याह॥१०॥**

**आपः॥११॥**

**पृथिवी॥१२॥**

**अधिकाररूपशब्दान्तरेभ्यः॥१३॥**

**तदभिध्यानादेव तु तल्लिङ्गात्सः॥१४॥**

**विपर्ययेण तु क्रमोऽतउपपद्यते च ॥१५॥**

**अन्तराविज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १६ ॥**

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशोभाक्तस्तद्भाव-भावित्वात् ॥ १७ ॥**

ब्रह्मव्यतिरिक्तं सर्वं ब्रह्मकार्यमिति निर्णीतम् । इहेदं चिन्त्यते— किं तेजःप्रभृतीनां पूर्वपूर्वस्माद्वाय्वादेरुत्पत्तिः, तेषां ब्रह्मकार्यत्वं तु परम्परया, उत पूर्वपूर्वशरीरकात्परमात्मनस्तेषामुत्पत्तिरिति । तत्र पूर्वःपक्षः । पूर्वपूर्वस्मादेवोत्पत्तिः । 'वायोरग्निः, अग्नेरापः, अद्भ्यःपृथिवी' ति श्रुतिराह । ननु 'तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत तदपोऽसृजत ता आप ऐक्षन्त ता अन्नमसृजन्ते' ति ईक्षापूर्वकं तेजःप्रभृतीनां स्रष्टृत्वं श्रूयते । नचेक्षणमचेतनानां सम्भवति । अत ईक्षणलिंगात् तेजआदिशब्दाः तत्तच्छरीरकपरमात्मपरा इति तेजश्शरीरात् परमात्मनोऽपां अप्छरीरकात् ततः पृथिव्याश्चोत्पत्तिर्वक्तुं युक्ता । न च 'ता अन्नमसृजन्ते' ति अन्नशब्देन कथं पृथिव्यभिधीयत इति वाच्यम् । महाभूतसृष्ट्यधिकारात् । 'यदग्नेरोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये'ति त्रिवृत्कृतमहाभूतरूपोक्तिप्रकरणे अन्नस्य रूपोक्तेः, समानप्रकरणे 'अद्भ्यः पृथिवी' ति पृथिवीवाचकशब्दान्तरश्रवणाच्च । अतस्तेजआदिशब्दास्तत्तच्छरीरकपरमात्मपरा वाच्याः । अन्तर्याम्यधिकरणे सर्वेषां परमात्मशरीरत्वस्य उक्तत्वादितिचेत् मैवं— तथासति तेजआदिशब्दानां तत्तच्छरीरके परमात्मनि लक्षणया श्रुतहानिप्रसङ्गात् । न चेक्षणलिंगेन श्रुतिबाधनं युक्तम् । किंतु श्रुत्यनुसारात् ईक्षणमेव गौणं वक्तुं युक्तम् । 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' त्याथर्वणमंत्रोऽपि पुत्रपौत्रप्रपौत्रादिरीत्या साक्षात्परम्परासाधारण्येन ब्रह्मकार्यत्वपरतयोपपद्यते । एवं प्राप्ते सिद्धान्तः—

तत्तच्छरीरकात्परमात्मनो जगदुत्पद्यते । ईक्षणलिंगात् । न च श्रुतिबाधः । चराचरप्रपञ्चवाचिनां सर्वेषां शब्दानां तत्तच्छरीरके परमात्मनि मुख्यत्वात् । लोके 'ब्राह्मणोऽधीते, ब्राह्मणो विद्वा' नित्यादिप्रयोगेषु, वेदे 'ब्राह्मणमुपनयीत, ब्राह्मणो यजेते' त्यादिप्रयोगेषु च शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्य व्युत्पत्तिसिद्धत्वात् । सर्वस्य चराचरस्य परमात्मशरीरताया अन्तर्यामिब्राह्मणेन, 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी' ति तेजआद्यनुप्रवेशपूर्वकनामरूपव्याकरणश्रुत्याचावगमात् । न च सर्वशरीरत्वश्रवणमौपचारिकं, तेजआदिसृष्ट्यनंतरं नामरूपव्याकरणार्थमेवानुप्रवेशश्रवणात् 'तत्सृष्ट्वा तदेवानुप्राविशदि' ति श्रुत्यंतराच्चेति वाच्यं । सर्वगतस्येश्वरस्य क्वचिदसतः पश्चात्प्रवेशासंभवेन प्रवेशश्रुतीनां नियंतृतया सार्वदिकसत्त्वप्रतिपादनपरत्वात् । तस्मात्तेजःप्रभृतिशब्दानां परमात्मनि मुख्यत्वात् 'तत्तेज ऐक्षते' त्यादिभिः परमात्मन एव सर्वस्मिन् प्रपंचे साक्षात्स्रष्टृत्वमवसीयते । 'एतस्माज्जायत' इत्याद्याथर्वणमंत्रेणापि तथाऽवसीयते । अयं हि मंत्रोऽव्यक्तमहदहंकारादिकार्येषूत्तरोत्तरः पूर्वपूर्वस्मादुत्पद्यत इति पुत्रपौत्रन्यायानुसारिणः क्रमाद्वैपरीत्येन सर्वं परमात्मन एवोत्पद्यत इति सर्वस्य परमात्मानन्तर्यरूपो यः क्रमः तत्रैव स्वारसिकः । स च तत्तच्छरीरकात् ब्रह्मणस्साक्षाज्जगत्सृष्टेरेवोपपद्यते 'एतस्माज्जायत' इत्यत्र साक्षात्त्वस्य मुख्यत्वेनौत्सर्गिकत्वात् । नन्वयं मंत्रः प्राणस्य भूतानां च मध्ये चक्षुरादीनि मनश्चोत्पद्यन्त इत्येवंरूपक्रमतात्पर्यकः । खादिपृथिव्यंतानां क्रमाम्नानलिंगात् । न तु सर्वस्य प्राणादेः परमात्मन उत्पत्तिपर इति चेत् —न । इंद्रियमनःखादीनामपि 'एतस्माज्जायत' इति साक्षात् परमात्मसृष्टतयोपात्तप्राणाविशेषात् । न हि प्राण एव साक्षाज्जायते अन्ये पौत्रादिन्यायेन परंपरया ब्रह्मणो जायंत इति विशेषश्रवणमस्ति । नत्वयं मंत्रः क्रमपरः । क्रमस्तु खादिषु श्रुत्यंतरसिद्धोनूद्यते । अन्यत्र श्रुत्यंतरविरुद्धो न गृह्यते । सुबालोपनिषदि स्पष्टं क्रमाम्नानात् । तस्मात् सर्वं जगत् साक्षात् परमात्मन एवोत्पद्यत इति सिद्धं ॥

संग्रहकारिकाः ॥

तेजोजलपृथिवीनां मारुततेजोजलेभ्य उत्पत्तिः ।
श्रुत्यनुरोधात् ब्रह्म तु मूलं कूटस्थपुरुषइव ॥
'तत्तेजऐक्षते' त्याद्याम्नायोक्तादभिध्यानात् ।
साक्षादेव निदानं तेषां तत्तच्छरीरकं ब्रह्म ॥
एवं स 'त्येतस्माज्जायत' इत्यादिवचनमुपपन्नं ।
तच्चाविशेषादेषां ब्रह्मानंतर्यमेव बोधयति ॥
तेजःप्रमुखाश्शब्दा लोकेऽन्यत्र प्रसिद्धिमंतोपि ।
व्याकरणश्रुत्यादेर्गम्यंते ब्रह्मपर्यंताः ॥

इति तेजोधिकरणं ॥२॥

## नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १८ ॥

वियदादिवज्जीवोप्युत्पद्यते न वेति चिंत्यते । उत्पद्यत इति पूर्वपक्षः । 'यतो वा इमानि भूतानि जायंते, येन जातानि जीवंति, प्रजापतिः प्रजा असृजते' त्यादिश्रवणात् एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् प्राक्सृष्टेरेकत्वावधारणाच्च । न च 'तत्वमसी' ति जीवस्य ब्रह्माभेदश्रवणादुत्पत्त्यनुपपत्तिः । 'सर्वं खल्विदं ब्रह्मे' त्यादिश्रवणेन वियदादीनामप्यनुत्पत्तिप्रसंगात् । न च 'न जायते म्रियते वा विपश्चि' दित्यनेन जीवोत्पत्तिनिषेधश्शंकनीयः । वाय्वाकाशामृतत्ववचनेन तयोरप्युत्पत्तिनिषेधापत्तेः तस्य देहोत्पत्तिविनाशानुबंध्युत्पत्तिविनाशाभावपरत्वाच्च । 'जीवापेतं वाव किलेदं म्रियते नजीवो म्रियत' इति देहमरणानुबंधिमरणनिषेधकश्रुत्यन्तरानुसारेणास्यापि तथैवाभिप्रायावगमाच्च । न च कृतहानाकृताभ्यागमप्रसंगो दोषः । सर्वत्र द्रव्यं नित्यं तस्य पूर्वावस्थाप्रहाणं विनाशः अवस्थांतरापत्तिरुत्पत्तिरिति सिद्धांत्यभिमते परिणामवादे द्रव्यात्मना नित्ये जीवे तदप्रसंगात् । नैयायिकमते घटादीनामिव जीवस्याभूत्वा भवनरूपोत्पत्त्यभ्युपगमो हि प्रसज्येत । तस्माज्जीवो वियदादिवदुत्पद्यत इति । एवं प्राप्ते सिद्धांतः

जीवो वियदादिवन्नोत्पद्यते। 'न जायते म्रियते वाविपश्चित्, ज्ञाज्ञौ द्वावजावीशनीशा' वित्यादिषु तदनुत्पत्तिश्रवणात् 'अजो नित्यश्शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे, नित्योनित्यानाञ्चेतनश्चेतनाना' मित्यादिश्रुतिभ्यः तस्य नित्यत्वेनोत्पत्त्यभावावगमाच्च। न च 'न जायते म्रियत' इति हि श्रुतिः देहोत्पत्तिमरणानुबंध्युत्पत्तिमरणाभावमात्रपरेति वाच्यं। तत्रैव 'न हन्यते हन्यमाने शरीर' इति देहहननानुबंधिहननाभावोक्त्यैवार्थसिद्धस्य तस्य पृथगवक्तव्यत्वात्। प्रागवियतोवियद्रूपेणेव प्रागजीवस्य जीवरूपेण परिणामाभ्युपगमे जीवकर्तृकत्वनियतयोः पुण्यपापयोरजीवाश्रितत्वासंभवेन कृतहानाकृताभ्यागमप्रसंगापरिहाराच्च। सर्वविज्ञानप्रतिज्ञानमेकत्वावधारणञ्च सृष्टेः प्राग्जीवस्य सूक्ष्मतापत्त्या सृष्टौ स्थूलकार्यतापत्त्याचोपपद्यते। कथं तर्हि वियदादिभ्यो विशेषः। इत्थं– वियदादीनामस्ति स्वरूपान्यथाभाव इति तेन रूपेण कार्यत्वं। जीवस्य त्वविक्रियस्य न स्वरूपान्यथाभावोस्ति। किंतु ज्ञानाख्यगुणसंकोचविकासलक्षणधर्मान्यथाभावमात्रं। तावन्मात्रेण तस्य कार्यत्वमिति। इदमुत्तराधिकरणे स्पष्टीभविष्यति॥

संग्रहकारिका॥

श्रुतेर्जीवोऽपि जनिमान् मैवं तदजनिश्रुतेः।
धर्मज्ञानान्यथाभावविषया तज्जनिश्रुतिः॥

इति आत्माधिकरणम्॥३॥

---

**ज्ञोऽत एव॥ १९॥**

**उत्क्रांतिगत्यागतीनाम्॥२०॥**

**स्वात्मना चोत्तरयोः॥ २१॥**

**नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्॥२२॥**

**स्वशब्दोन्मानाभ्याञ्च॥२३॥**

अविरोधश्चंदनवत् ॥२४॥

अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमात्धृदिहि ।२५।

गुणाद्वाऽऽलोकवत् ॥२६॥

व्यतिरेको गंधवत्तथाच दर्शयति ॥२७॥

पृथगुपदेशात् ॥ २८ ॥

तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत् ॥२९॥

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥३०॥

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥३१॥

नित्योपलब्ध्यनुपलब्धिप्रसंगोन्यतरनियमोवान्यथा ॥

जीवोत्पत्तिविचारप्रसंगात् तस्य ज्ञातृत्वादिधर्मश्चिंत्यते ज्ञानरूपत्व-ज्ञातृत्वादिविषयश्रुतिविरोधसमाधानेन जगत्कारणब्रह्मविषयश्रुतीनां निर्विचिकित्सप्रामाण्यसिध्यर्थं । अपि च जीवस्य धर्मान्यथाभावरूपो विकारः, न स्वरूपान्यथाभावरूपइत्येतदयुक्तं । स्वरूपातिरेकेण ज्ञानाख्यधर्माभावात् । ज्ञानमेव हि तस्य स्वभावः इत्युत्थानादाक्षेपिकी संगतिरप्यनुसंधेया । किं ज्ञानस्वरूपो जीवः उतजड एवागंतुकज्ञानः, अथवा नित्यमेव ज्ञानगुणाधारतया स्वतोज्ञातेति संशये पूर्वपक्षः– ' विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपिच । यो विज्ञाने तिष्ठन् विज्ञानादंतरः, ज्ञानस्वरूपमत्यंतनिर्मलं परमार्थत ' इत्यादिश्रुतिस्मृतिभ्यो ज्ञानस्वरूपएवेत्येकः पूर्वपक्षः । अपरस्तु जीवस्य ज्ञानस्वरूपत्वे तस्य सर्वगतस्य सर्वदा सर्वविषयोपलब्धिप्रसंगेन चक्षुरादिवैयर्थ्यप्रसंगेन च ज्ञानविकलसुषुप्तिमूर्छाद्यभावप्रसंगेन च तस्य ज्ञानरूपत्वं नयुक्तं । अतएव सिद्धांत्यभिमतं नित्यज्ञानाधारतया ज्ञातृत्वमप्ययुक्तं । किंतु नैयायिकादिमतरीत्या चक्षुरादिकरणाधीनज्ञानवत्त्वमेवाभ्युपेयमिति । एवं प्राप्ते सिद्धांतः—

'अथ योवेदेदं जिघ्राणीति सआत्मा, मनसैतान् कामान् पश्यन् रमते, नपश्यो मृत्युं पश्यति, जानात्येवायं पुरुषः, एषहि द्रष्टा श्रोता घ्राता रसयिते' त्यादिश्रुतिभ्यः ज्ञातैवायमात्मा । नचैवं सति सर्वदा सर्वविषयोपलब्धिप्रसंगः । तस्याणुत्वात् । अणुत्वंच उत्क्रांतिगत्यागतिश्रवणात् । 'तेन प्रद्योतेनैष आत्मा निष्क्रामति, येवैकेचास्माल्लोकात्प्रयंति चंद्रमसमेव ते सर्वे गच्छंति, तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मण' इति हि तस्योत्क्रांतिगत्यागतयश्श्रूयंते । नचैतासां विभुत्वे शक्यमुपपादनं । ननु 'योयं विज्ञानमयः प्राणेष्वि' ति प्राणसंबंधिनं जीवं प्रस्तुत्य 'सवाएष महानजआत्मे' ति महत्वाम्नानान्नाणुरिति चेन्न । तत्र जीवादितरस्य ब्रह्मणोधिकारात् । उपक्रमे जीवप्रस्तावेपि मध्ये 'यस्यानुवित्तः प्रतिबुद्धआत्मे' ति परप्रतिपादनात्, तदनुबंधित्वाच्च महत्वाम्नानस्यच । किञ्च 'एषोणुरात्मा चेतसा वेदितव्यः यस्मिन् प्राणः पंचधा संविवेशे' ति जीवस्य साक्षादणुत्वं श्रूयते । 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्सविज्ञेय' इति 'आराग्रमात्रोह्यवर' इति च तस्याल्पपरिमाणत्वं श्रूयते । एवं सति शरीरैकवर्तिनो जीवस्य कथं सर्वांगीणसुखाद्यनुभव इति चेत्– चंदनवदिति ब्रूमः । यथा हरिचंदनबिंदुर्देहैकदेशवर्त्यपि सकलदेहव्यापिनमाह्लादं जनयति, तथैकदेशस्थितोपि जीवस्सर्वांगीणसुखमनुभवति । 'योयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः, हृदि ह्ययमात्मे' त्यादिश्रुतिभिः तस्यापि हृदयदेशे स्थित्यभ्युपगमात् । वस्तुतस्तु– जीवो हृदि स्थितोपि स्वगुणेन ज्ञानेन सकलदेहं व्याप्नोति, यथामणिर्द्युमणिर्वा एकदेशवर्तिभिः स्वालोकैरनेकदेशं । नच ज्ञानस्वरूपएवात्मा नज्ञानगुणकइति शंकनीयं । यथा गंधस्य पृथिवीगुणत्वेनोपलभ्यमानस्य ततो व्यतिरेकः तथा जानामीति आत्मगुणत्वेनानुभूयमानस्य ज्ञानस्य जीवाद्व्यतिरेकात् । 'जानात्येवायंपुरुष' इति श्रुत्यापि तस्य ज्ञातृगुणत्वप्रदर्शनात्, 'न हि विज्ञातुर्विज्ञातेर्विपरिलोपोविद्यत' इति श्रुतौ ज्ञातृज्ञानयोः पृथगुपदेशाच्च । कथं तर्हि 'विज्ञानं यज्ञं तनुत' इत्यादिषु तस्य ज्ञानरूपत्व-

व्यवहारः । ज्ञानगुणसारत्वात् । ज्ञानं हि तस्य सारभूतो गुणः । ततश्च यथा ब्रह्मणः प्राज्ञस्य ज्ञानमानन्दश्च सारभूतो गुण इति 'सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो ब्रह्मेति व्यजाना' दिति ज्ञानानन्दव्यपदेशः, एव मिहापि ज्ञानव्यपदेशः । ननु 'सत्यं ज्ञान' मित्यत्र अन्तोदात्तस्वरबलात् ज्ञानवत्व-मर्थः प्रतिभाति । केवलं भावार्थल्युडन्ततायामंतोदात्तस्वरानुपपत्तेः । तथा हि- ल्युडादेशस्य अनइत्यस्य 'आद्युदात्तश्चे'ति प्रत्ययस्वरेण प्रथमाकारे उदात्ते लितीति लित्स्वरेण प्रकृत्याकारेचोदात्ते 'अनुदात्तं पदमेकवर्ज' मिति शेष-निघातस्वरेण प्रत्ययस्थयोरकारयोरनुदात्तयोः 'एकादेश उदात्तेनोदात्त' इ-त्येकादेशस्वरेण प्रकृत्याकारप्रत्ययाद्यकारयोः एकादेशेचोदात्ते सति प्रत्य-यान्त्याकारस्यानुदात्तस्य विभक्त्यकारस्य च 'अनुदात्तौ सुप्पितौ' विति सुप् स्वरेण अनुदात्तस्य 'अमिपूर्व' इत्येकादेशो भवन् 'स्थानेऽन्तरतम' इति परिभाषयानुदात्तस्स्यात् । तस्य चानुदात्तस्य 'उदात्तादनुदात्तस्य च स्वरित' इति स्वरितादेशो भवेत् । अत एव तत्ज्ञानमिति पदं केवलल्युडन्तत्वे स्व-रितांतं स्यात् । यथा काठके 'संज्ञानं विज्ञानं प्रज्ञान' मिति । तस्मा-दंतोदात्तनिर्वाहार्थमिदं ज्ञानपदं ल्युडनंतरं मत्वर्थीयाच्प्रत्ययांतं वाच्यं । अर्शादेराकृतिगणत्वात् । तथासत्यंतोदात्तस्वरउपपद्यते । अर्शाद्यच्प्रत्यये 'यस्येति चे' ति प्रकृतावंत्यस्य अकारस्य लोपे 'चित' इति चित्स्वरेण मत्वर्थीयप्रत्ययस्योदात्तत्वे च सति तस्य विभक्त्यकारस्य चैकादेशस्यापि 'एकादेशउदात्तेनोदात्त' इत्युदात्तस्यैव भावात् । एवमिह ज्ञानपदप्रक्रि-याश्रयणे ज्ञानवत्वमेवात्मनास्सिध्येत् । न ज्ञानरूपत्वं । तस्मात्ज्ञानरूपत्व-मनेन न प्रतीयतइति चेदुच्यते– औणादिकनप्रत्ययांतत्वाश्रयणे तदपि प्र-तिभाति । ज्ञाधातोराहत्य नप्रत्ययविधानाभावेऽपि 'उणादयो बहुळ'मिति बहुळग्रहणेन यतो विहितास्ततोऽन्यत्रापि ते भवन्तीत्येतदर्थेन तत्सिद्धेः। औणादिकप्रत्ययांतत्वे भावार्थत्वमप्युपपद्यते । अर्त्यादिसूत्रविहितमन्प्रत्य-यांतस्य होमशब्दस्येव अंतोदात्तस्वरश्च युज्यते । नप्रत्ययाकारस्य प्रत्य-यस्वरेणोदात्तत्वे सति तस्य विभक्त्यकारेण भवतएकादेशस्याप्युदात्तस्यैव

भावात् । एवमुभयथेह ज्ञानपदप्रक्रियाश्रयणसंभवेपि प्रक्रियालाघवाद्गौणादिकनप्रत्ययांततया भावार्थत्वमेव युक्तमित्यभिप्रेत्य भाष्यकारैर्ज्ञानस्वरूपत्वेप्रमाणतयेदमुदाहृतं । ज्ञानस्य यावदात्मभावित्वादपि तेन तस्य व्यपदेशः । खंडादीनां यावत्स्वरूपभाविगोत्वादिधर्मवाचिगवादिशब्देन व्यपदेशदर्शनात् । जीवस्य स्वप्रकाशत्वादपि ज्ञानव्यपदेशउपपद्यते । स्वप्रकाशत्वमपि स्वापेक्षमेव नतु परापेक्षमपि । स्वापेक्षमपि अहमितिप्रत्यक्त्वैकत्वविशिष्टतामात्रेण । स्वपरप्रकाशत्वं तु धर्मज्ञानस्यैव । सोयं प्रभाप्रभावन्न्यायोधर्मधर्मिज्ञानयोः । यदाहुः– 'स्वस्यैव भासकोदीपः स्वात्मनोऽन्यस्य च प्रभा । एवंभेदोस्ति साम्येपि ज्ञानयोर्धर्मधर्मिणो ' रिति । ननु सुषुप्त्यादिषु ज्ञानाभावात् कथं ज्ञानस्य गोत्वादिवत् स्वरूपानुबंधिधर्मत्वमिति चेत् । पुंस्त्वादिवदभिव्यक्त्येति ब्रूमः– यथा सप्तधातुमये शरीरे सदासन्नपि पुंस्त्वरूपसप्तमधातुः न बाल्ये यौवनइवाभिव्यज्यते, एवं सदासन्नेव ज्ञानगुणः सुषुप्तौ जागरइव नाभिव्यज्यते । तदानीमपि स्वयमेव प्रकाशमानताऽहंत्वरूपस्य स्वयंप्रकाशत्वस्य न हानिः । अहमर्थस्य तु सुषुप्तावपि प्रकाशमानताऽस्त्येव । 'सुखमहमस्वाप्स ' मिति परामर्शात् । यदाहुः- ' प्रत्यक्स्वयंप्रभसुखे नित्ये पुंसि व्यवस्थिते । अस्वाप्सं सुखमित्यादौ कालाद्यंशेऽनुमास्थितिः ॥ अगायं मधुरं मंदमयामित्येवमादिषु । माधुर्यादिवदत्रापि सुखं भाति तदातन ' मिति । तस्माज्ज्ञानगुणस्संकोचविकासशाली, तद्धर्मी जीवस्त्वणुरित्यस्मत्पक्षे न कश्चिद्दोषः । किंतु ' ज्ञानस्वरूपोजीवः सच सर्वगत ' इति पक्षएव नित्योपलब्ध्यनुपलब्धिप्रसंगोन्यतरनियमोवा स्यात् । तथाहि– सर्वगतज्ञानरूपं जीवस्वरूपं किमुपलब्धेरेवहेतुः, उत अनुपलब्धेरेव, अथवाउभयोरपि । आद्ये देहावच्छिन्नप्रदेशइव अन्यत्रापि तदुपलब्धिस्स्यात् । द्वितीये देहावच्छिन्नप्रदेशेपि तदुपलब्धिर्नस्यात् । तृतीये सदोपलब्ध्यनुपलब्धी परस्परविरुद्धे स्यातां । सर्वगतोजीवश्चक्षुरादिकरणायत्तागन्तुकज्ञानइतिनैयायिकादिपक्षेप्ययंदोषस्समानः । अयमर्थः ' अंशोनानाव्यपदेशा ' दित्यधिकरणे स्फुटीभविष्यति ।

संग्रहकारिके ॥

जीवं विज्ञानरूपं कतिचिदभिदधुश्श्रूयतेऽसौ तथेति
ज्ञानैरागंतुकैस्तं कतिचिदथ पुनर्ज्ञातृताभाजमूचुः ।
नित्यज्ञातृत्वमन्ये तदिह समुदितो मध्यमस्तर्कपक्षः
जानीयाद्दूरदेशे स्थितमपि हि विभुर्जीवएषोऽन्यथा ते ॥
जानात्येवायमित्याद्युपानिषदुदितो ज्ञातृरूपस्सनित्यं
सर्वज्ञस्तावतास्यादिति न यदणुरुत्क्रांतिगत्यादिमानैः ।
देहव्याप्तिस्तु दीपद्युतिसदृशगुणज्ञानतस्तस्य युक्ता
ज्ञानत्वोक्तिस्ससारोगुणइति घटते स्वप्रकाशस्सचेति ॥

इति ज्ञाधिकरणम् ॥४॥

---

**कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

**उपादानाद्विहारोपदेशाच्च ॥३४॥**

**व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥३५॥**

**उपलब्धिवदनियमः ॥३६॥**

**शक्तिविपर्ययात् ॥३७॥**

**समाध्यभावाच्च ॥३८॥**

**यथा च तक्षोभयथा ॥३९॥**

ज्ञातृत्वनिरूपणानन्तरं कर्तृत्वं निरूप्यते ज्ञानाधीनत्वात् कृतेरिति कार्यकारणभावस्सङ्गतिः । ज्ञानस्वरूपस्सर्वगतो जीव इत्यत्र उपलब्धिनियमादिव्यवस्थित्यसिद्धिवत् प्रकृतेः कर्तृत्वे तस्यास्सर्वसाधारणत्वात् कर्तृनियमव्यवस्थित्यसिद्धिरुच्यत इति दृष्टान्तसङ्गतिश्च । किं प्रकृतिरेवकर्त्रीति तदीयकर्तृत्वाध्यासेन जीवस्य कर्तृत्वव्यवहारः उत स्वभावतएव जीवः कर्तेति संशये पूर्वपक्षः— अकर्तैवात्मा । कठवल्लीषु 'हन्ताचेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यत' इति

श्रवणात् । हन्तुं= हन्तारम् । ‘जन्तु’ मित्यादाविव औणादिकस्तुन् प्रत्ययः । ‘य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यत’ इति गीतावचनैकार्थ्यात् । हननकर्तृत्वप्रतिषेधश्च कर्तृत्वमात्रप्रतिषेधोपलक्षणम् । अत एव गीतासु भगवद्वचनं– ‘प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते । पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यत’ इति । अतो जीवः प्रकृतिगतं वा कर्तृत्वं तत्तज्जीवासाधारणप्रकृतिपरिणामबुद्धिगतं वा कर्तृत्वमात्मन्यध्यस्यन् कर्तेति व्यपदिश्यते । शास्त्रमपि तथाभूतमेव कर्तृत्वमपेक्ष्य प्रवर्तते सहोपादानादिव्यवहारेणेति । एवं प्राप्ते सिद्धान्तः—

बुद्धेः प्रकृतेर्वा कर्तृत्वे ‘यजेत स्वर्गकामः, मुमुक्षुर्ब्रह्मोपासीते’त्येवमादिशास्त्रं स्वर्गमोक्षादिफलकामं भोक्तारमेव नियुङ्क्ते । ‘शास्त्रफलं प्रयोक्तरी’ति न्यायात् । किंच शास्त्रेण कर्ता बोधजननद्वारा नियुज्यते । न च अचेतनयोः बुद्धिप्रकृत्याः बोधनीयत्वमस्ति, अतो भोक्तृत्वात् बोधनीयत्वाच्च आत्मैव विधिनिषेधशास्त्रनियोज्य इति युक्तम् । न च कूटस्थ आत्माऽहङ्कर्तेति परकीयं कर्तृत्वमात्मन्यध्यासितुमपि प्रभवति । तस्माद्ध्यासोऽप्यात्मप्रभास्थानीयधर्मज्ञानपरिणामतया तद्धर्मतां नेतव्य इति तथैव कृतिरपि तद्धर्मतां नीयताम् । किमर्थं बाधानुपलम्भेऽपि ‘अहं कर्ते’ति प्रतिभासस्य भ्रान्तिरूपत्वं, शास्त्रस्य भ्रांतिकृतकर्तृत्वालम्बनत्वञ्च, कल्प्यते । ‘हन्ता चेन्मन्यते हन्तु’ मिति मंत्रस्तु ‘न जायते म्रियते वा विपश्चि’ दिति मन्त्रे ‘न हन्यते हन्यमानेऽपि देह’ इति देहातिरिक्तस्य आत्मनो हननायोग्यत्वेन प्रकृतत्वात्तद्विषयतयोपपद्यते । कर्तृत्वप्रतिषेधकानि भगवद्वचनानि तु प्रकृतिगुणादिकमनपेक्ष्य केवलस्य जीवस्य कर्तृत्वप्रतिषेधकानि । ‘तत्रैवं सति कर्तारमात्मानं केवलं तु यः । ‘पश्यत्यकृतबुद्धित्वान्न सपश्यति दुर्मति’ रिति तदीयवचनांतरैणैकार्थ्यात् । किञ्च ‘सयथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिव-

र्तेतैवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तत ' इत्युपादानविहारोपदेशदर्शनात्, ' विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च ' ति लौकिकवैदिकक्रियासु कर्तृत्वव्यपदेशाच्च, आत्मा कर्तैव । नच विज्ञानशब्दोऽन्तःकरणपरः । अन्तःकरणनिर्देशे श्रुतिषु तृतीयायाएव दर्शनात् । इहापि तथा निर्देशविपर्ययप्रसङ्गात् । ' तदेषां प्राणानां विज्ञानेन विज्ञानमादाये ' त्यादिवाक्यान्तरेषु अन्तःकरणपरस्य विज्ञानशब्दस्य तृतीयानिर्देशो हि दृश्यते । किं च प्रकृतेः कर्तृत्वे तस्यास्सर्वपुरुषसाधारणत्वात् पूर्वाधिकरणोक्तोपलब्ध्यादिनियमासम्भवरीत्या कर्मनियमस्याप्यसम्भवात् । तथा च सर्वाणि कर्माणि सर्वेषां भोगाय स्युः । आत्मनां सांख्यमते विभुत्वेन सर्वत्र सर्वेषां सन्निधानाविशेषात् । नच अन्तःकरणस्य कर्तृत्वपक्षे नायं दोषः, अन्तःकरणानां प्रतिशरीर भिन्नत्वादिति वाच्यम् । तेषां तदायतनशरीराणाञ्च सर्वात्मसन्निधावुत्पद्यमानानां प्रत्यात्मव्यवस्थितेरुपपादयितुमशक्यत्वात् । बुद्धेः कर्तृत्वपक्षे च कर्तुरन्यस्य भोक्तृत्वानुपपत्तेः भोक्तृत्वमपि तस्या एव स्यादिति आत्मनो भोक्तृत्वशक्तिर्नस्यात् । तथा च ' पुरुषोऽस्ति भोक्तृभावा ' दिति तेषामेव अभ्युपगमविरोधः । बुद्धेः कर्तृत्वे च ' प्रकृतेरन्योऽस्मी ' त्येवंरूपमोक्षसाधनसमाधिकर्तृत्वमपि तस्या एव वाच्यम् । न च प्रकृतिः स्वरूपेण बुद्धिपरिणतिरूपेण वा प्रकृतेरन्यः कूटस्थाऽस्मीति समाधातुं प्रभवति । किं च आत्मनः कर्तृत्वाभ्युपगमे सत्यामिच्छायां करोति, अन्यदा न करोति । यथा तक्षा वास्यादिकरणसम्पन्नोऽपि सत्यामेवेच्छायां करोति नान्यदेति नियम उपपद्यते । बुद्धेस्तु अचेतनायाः कर्तृत्वे तस्या भोगेच्छादिनियमकारणाभावात् सर्वदा कर्तृत्वं स्यात् । तस्मादात्मैव स्वभावतः कर्तेति युक्तम् ॥

स न कर्ता गुणानां हि कर्तृत्वं विभुना स्मृतम् ।
मैवं शास्त्रार्थवत्त्वाद्यैः कर्ता स गुणयोगतः ॥

इति कर्त्रधिकरणम् ॥९॥

---

## परात्तु तच्छ्रुतेः ॥२३॥

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः २४

कर्तृत्वे चिन्तिते तद्विशेषश्चिन्त्यत इति सङ्गतिः । जीवस्य कर्तृत्वं स्वायत्तं, उत परमात्मायत्तमिति विधिनिषेधशास्त्रान्तर्यामिशास्त्राभ्यां संशये पूर्वपक्षः– स्वायत्तमेव जीवस्य कर्तृत्वम् । अन्यथा विधिनिषेधशास्त्रयोरत्यन्तवैयर्थ्यं स्यात् । न च 'अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा, एषह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते एष उ एवासाधुकर्म कारयति तं यमधो निनीषत' इत्याद्यन्तर्यामिशास्त्रात् परमात्मायत्तं कर्तृत्वमिति शङ्कनीयम् । तथासति पुरुषप्रवृत्तिनिवृत्त्यैदंपर्येण प्रवृत्तानां विधिनिषेधशास्त्राणां अत्यन्तवैयर्थ्यापत्तेः, अन्तर्यामिशास्त्रस्याप्यसामञ्जस्यप्रसङ्गाच्च । न हि कश्चित् स्वयमेव किंचिदनिष्टं कर्म कारयित्वा तत्फलं निग्रहमपि करोतीति युक्तमिति । एवंप्राप्ते सिद्धान्तः–

परमात्मायत्तमस्य कर्तृत्वम् । अन्तर्यामिशास्त्रबृन्दाबाधसम्भवे तद्बाधनायोगात् । सम्भवति च तदबाधेन विधिनिषेधशास्त्रावैयर्थ्योपपादनं । आद्यप्रवृत्तौ भगवानुदासीनः द्वितीयादिप्रवृत्तिष्वनुमन्ता स्वभक्तानां स्वद्वेषिणाञ्च स्वेष्टानिष्टकर्मसु कारयितेति भगवतोऽवस्थात्रयसत्वात् । तथा हि– आदौ जीवस्य करणकळेबरादि दत्वा किमयं करिष्यतीति पश्यन्नुदासीनो भगवानास्ते । स यत्करोति पुण्यं पापं वा तत्फलरूपं द्वितीयादिप्रवृत्तिमनुमन्यते । प्रवृत्तप्रवर्तनमनुमतिः । यत्तु मुमुक्षूणां प्रपदनोपासनादिकं साधुकर्म, यच्च तामसानां भगवद्द्वेषिणां भगवन्निन्दादिरूपमसाधुकर्म, तदुभयं स्वयं कारयति तद्विषयं 'एषह्येवे'त्यादिशास्त्रद्वयम् । न सर्वविषयम् । तेषां सततयुक्तानां भजतां प्रीतिपूर्वकं । ददामि बुद्धियोगं तं येन मामुपयांति ते' इति 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु' इतिच भगवद्वचनात् ततोन्यत्रविधिनिषेधशास्त्रावकाशः तन्नात्यन्तवैयर्थ्यमिति केचिदाचार्याः तद्वैयर्थ्यं समादधुः ।

अन्येत्वाहुः– नैवमन्तर्यामिशास्त्रस्य विषयसङ्कोचः कल्पनीयः । भगवतो जीवकर्मविशेषेषु औदासीन्यानुमन्तृत्वकल्पने प्रमाणाभावात् । उदाहृतगीतावचनयोः कर्मान्तरकारयितृत्वाभावपर्यन्तकल्पने कल्पकाभावात् । न च विधिनिषेधशास्त्रावैयर्थ्यार्थं तथाकल्पनम् । सर्वेषु विहितनिषिद्धकर्मसु ईश्वरस्य कालादृष्टेन्द्रियादिवत् कारणत्वेऽपि जीवस्य कर्तृत्वाक्षतेः तदिच्छादीनामिवेश्वरस्यापि कारणत्वोपपत्तेः । न च तथासति जीवस्य विहितनिषिद्धकर्मसु 'स्वतन्त्रः कर्ते'ति लक्षितं कर्तृत्वं न स्यात्, बलादीश्वरस्य कारयितृत्वेन नदीरयाकृष्यमाणपुरुषस्येव स्वातंत्र्यहानिरिति वाच्यम् । प्रयोयोजकेन राज्ञा नियुक्तानां प्रयोज्यकर्तॄणाममात्यादीनामपि स्वकर्मसु स्वेच्छया प्रवर्तमानानां स्वातंत्र्यदर्शनात् । तस्मादन्तर्यामिशास्त्रासङ्कोचेन विधिप्रतिषेधावैयर्थ्योपपादनासम्भवात् न तत्सङ्कोचः कल्प्य इति । मतद्वयस्याप्युपपादनप्रपञ्चस्तत्तद्ग्रन्थेषु द्रष्टव्यः ॥

सङ्ग्रहकारिकाः ॥

कर्तृता परवती शरीरिणामीश्वरेण यदि नाम वर्ण्यते ।
व्यर्थता विधिनिषेधशास्त्रयोश्शक्यते शमयितुं न केनचित् ॥
अस्ति तावदरविंदलोचनश्शासिता यमयितेति च श्रुतिः ।
सा यथा विधिनिषेधलङ्घनं नादधीत नयतस्तथोच्यते ॥
दत्वादौ करणकळेबरादि पश्यत्युद्योगं प्रथममुदासितैव देवः ।
पश्चात्तत्फलमनुमन्यते द्वितीयं केषांचिद्भवति कृतौ प्रयोजकोऽपि ॥

अन्तर्यामिश्रुतेरित्थमन्यवैयर्थ्यशङ्कया ।
सङ्कोचमूचिरे केचित् मुमुक्षुद्वेषिकर्मसु ॥
इच्छाद्यधीनतावत्स्यात् ईश्वराधीनताऽपि नः ।
तावता शास्त्रवैयर्थ्यं नेत्यसङ्कोचनं परे ॥

इति परायत्ताधिकरणम् ॥ ६॥

---

**अंशोनानाव्यपदेशादन्यथाचापि दाशकितवादित्व-**

मधीयतएके ॥३५॥

मंत्रवर्णात् ॥३६॥

अपिच स्मर्यते ॥३७॥

प्रकाशादिवत्तु नैवं परः ॥३८॥

स्मरन्ति च ॥३९॥

अनुज्ञापरिहारौ देहसंबंधाज्ज्योतिरादिवत् ॥४०॥

असन्ततेश्चाव्यतिकरः ॥४१॥

आभासएव च ॥४२॥

अदृष्टानियमात् ॥ ४३ ॥

अभिसंध्यादिष्वपि चैवम् ॥४४॥

प्रदेशभेदादिति चेन्नांतर्भावात् ॥४५॥

जीवेश्वरयोः प्रवर्त्यप्रवर्तकभावे राजभृत्ययोरिव अत्यंतभेदस्स्यादिति जीवस्य परमात्मांशत्वकथनमप्यौपचारिकं स्यादिति शंकया संगतिः । किं जीवः परस्मादत्यंतभिन्नः, उताज्ञानावस्थापन्नं परमेव ब्रह्म, यद्वा ब्रह्मैवोपाध्यवच्छिन्नं, अथवा विशिष्टस्य ब्रह्मणोविशेषणरूपोंशइति श्रुतिविप्रतिपत्तेस्संशये पूर्वपक्षः– अत्यंतभिन्नोजीवः । ' ज्ञाज्ञौद्वा ' वित्यादिभेदनिर्देशात् । अज्ञंब्रह्मैववा जीवः । 'तत्वमसि, अयमात्माब्रह्मे 'त्यादिश्रवणात् । ब्रह्मैव सत्वोपाध्यवच्छिन्नं वा जीवः । तत्वमस्यादिश्रवणादेव । न तु ब्रह्मणोंशोजीवइति युक्तं । अंशत्वं हि तत्वादिवन्नावयवत्वरूपं । निरवयवस्य ब्रह्मणोऽवयवारब्धत्वाभावात् । अतएव टङ्कच्छिन्नपाषाणशकलवदपि नांशत्वम् । ब्रह्मणः खण्डनानर्हत्वाच्चेति ॥ सिद्धान्तस्तु–

ब्रह्मणोंऽश एव जीवः । नानाव्यपदेशात् । अभेदव्यपदेशाच्च । स्रष्टृत्वसृज्यत्वनियन्तृत्वनियाम्यत्वसर्वज्ञत्वकिंचिद्ज्ञत्वस्वाधीनत्व-

पराधीनत्वपतित्वशेषत्वादिभिर्भेदव्यपदेशो हि भूयान् दृश्यते। तथैव अभेदव्यपदेशोऽपि तत्वमस्यादिर्दृश्यते । अपि च आथर्वणिकाः ब्रह्मसूक्ते ब्रह्मणो दाशकितवादिरूपत्वमप्यधीयते। 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उत। स्त्रीपुंसौ ब्रह्मणो जातौ स्त्रियो ब्रह्माऽथवा पुमा' निति। तस्माद्विशिष्टब्रह्मणो विशेषणरूपोंशो जीवइत्येव अभ्युपगन्तव्यम् । एवं सत्येव भेदाभेदश्रुतीनां बंधमोक्षव्यवस्थादीनाञ्च उपपत्तिः । सत्यमिथ्योपाध्यवच्छिन्नब्रह्मजीववादयोस्तु बंधमोक्षव्यवस्थाद्यनुपपत्तिः, सर्वश्रुतिसामञ्जस्यानुपपत्तिश्च अन्यत्र प्रपञ्चिता । अतो विशिष्टैकदेशरूपोंशो जीवइत्येव युक्तम् । 'पादोऽस्य विश्वाभूतानि, त्रिपादस्यामृतं दिवी' ति मंत्रवर्णात, 'ममैवांशो जीवलोके जीवभूतस्सनातन' इति गीतावचनाच्च एवमेवावगम्यते । एवञ्च यथा प्रकाशो मण्यादीनां प्रकाशवतां विशेषणांशः, यथा वा देहिनां देवमनुष्यादिदेहः, तथैव अपृथक्सिद्धप्रकारतया शरीरतया च ईश्वरस्य जीवो विशेषण रूपोंशः । न तु सएव स इति । विशेषणभेदात् भेदश्रुतयः विशिष्टरूपैक्यादभेदश्रुतयश्चोपपद्यन्ते । यथाभूतो जीवश्शेषत्वादिलक्षणः नैवंभूतः परश्शेषत्वादिलक्षण इति प्रभाप्रभावन्न्यायेन शरीरशरीरिभावेन च जीवेश्वरयोर्व्यवस्थितशेषशेषिभावादयश्च उपपद्यन्ते । स्मरन्ति च पराशरादयः जीवेश्वरयोः प्रभाप्रभावन्न्यायं शरीरशरीरिभावञ्च, 'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य ब्रह्मणश्शक्तिस्तथेदमखिलञ्जगत् ॥ यत्किञ्चित्सृज्यते येन सत्वजातेन वै द्विज । तस्य सृज्यस्य संभूतौ तत्सर्वं वै हरेस्तनु' रिति । ननु सर्वेषामीश्वरांशत्वाविशेषे कथं द्विजानां वेदाध्ययनाद्यनुज्ञा, शूद्राणां तत्परिहार इति चेत्, देहविशेषसम्बन्धादिति ब्रूमः । यथाऽग्न्युदकादीनां श्रोत्रियागारस्थितिदशायां कर्मार्हत्वं, तेषामेव श्मशानदेशं प्राप्तानां कर्मानर्हत्वं, एवमात्मनां विविधदेहस्थितिदशायामनुज्ञापरिहारद्वयमुपपद्यते। सर्वेषामात्मनां ब्रह्मांशत्वेनैकरूप्येऽपि तेषामन्योन्यभेदात् अणुत्वेन प्रतिशरीरं भिन्नत्वाच्च भोगव्यतिकरोऽपि न भविष्यति । किं तु ब्रह्मात्मैक्यवाद एव जीवपरयोर्जीवानाञ्च सप्रसज्यते । न च अविद्याकृतोपाधिभेदात् तद-

प्रसङ्गः। अखण्डैकरसप्रकाशमात्रस्वरूपस्य ब्रह्मणः स्वरूपतिरोधायकोपाधिभेदोपपादकहेतूनामाभासत्वात्। न खलु दारुखण्डे निपतन् कुठारो दारुखण्डमिव ब्रह्मणि समन्वयन्नुपाधिर्ब्रह्म भिनत्ति। उपाधयो भिन्ना इति चेत। किं ततः? भोगानाश्रयाणां तेषां भेदेन भोगाश्रयैक्यादापतत्साङ्कर्यं कथं परिह्रियेत। सत्यमिथ्योपाध्युपहितब्रह्मजीववादयोरुपाधिहेतुभूतानाद्यदृष्टवशात् व्यवस्था भविष्यतीति चेत्, न। उपाधिभिरिवादृष्टैरपि अखंडे ब्रह्मणि छेदनाद्यसंभवात्। एतेन अदृष्टहेतुसङ्कल्पानुष्ठानशरीरादिप्रतिनियमात् व्यवस्थेत्याशङ्काऽपि निरस्ता। सङ्कल्पादीनामपि सर्वात्मसन्निधावुत्पद्यमानानां प्रत्यात्मनियमहेत्वभावात्। ननु आत्मप्रदेशव्यवस्थया भोगव्यवस्थाऽस्त्विति चेत् न। ब्रह्मणः प्रदेशाश्शरीरान्तर्भूताएव भोगाश्रयावाच्याः। तदन्तर्भूतप्रदेशास्तु न व्यवस्थिताः। प्रायः सर्वेषामपि प्रदेशानां सञ्चरत्सु सर्वेषु शरीरेष्वन्तर्भावात्। तस्मात्सर्वगतात्मपक्ष इव सत्यमिथ्योपाध्युपहितात्मैक्यपक्षेऽपि न भोगव्यवस्थोपपद्यत इति आत्मनामणुत्ववत् भेदोऽप्यभ्युपगन्तव्य इति सिद्धम्॥

संग्रहकारिका॥

जीवस्यात्यन्तभेदे गतिरुपचरणं स्यादभेदश्रुतीनां<br>
गाढाभेदे तु भेदश्रुतिततिसहितस्सङ्करो दुर्निवारः।<br>
तस्मादंशः परस्येत्युचितमिह सखल्वेकवस्त्वेकदेशो<br>
विख्यातोऽयं विशिष्टे भगवतिच भवत्येकदेशः प्रकारः॥

इति अंशाधिकरणम्॥७॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे द्वितीयस्याध्यायस्य

तृतीयः पादः॥

---

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

## ॥ द्वितीयस्याध्यायस्य चतुर्थःपादः ॥



## तथा प्राणाः ॥१॥

## गौण्यसंभवात्तत्प्राक्छ्रुतेश्च ॥२॥

## तत्पूर्वकत्वाद्वाचः ॥३॥

जीवोत्पत्तितदनुबंधिज्ञातृत्वादिनिरूपणानंतरं जीवोपकरणानामिंद्रियाणामुत्पत्तिप्रकारो विशोध्यत इति संगतिः । किमिंद्रियाणां वियदादिवत् स्वरूपान्यथाभावरूपोत्पत्तिः, उत जीववत् धर्मान्यथाभावमात्ररूपेति श्रुतिविप्रतिपत्तेस्संशये पूर्वपक्षः— यद्यपि वियदधिकरणे 'ब्रह्मातिरिक्तं सर्वमुत्पत्तिम' दिति निर्णीतं, तथापींद्रियाणां वियदादिवत् न स्वरूपान्यथाभावरूपोत्पत्तिः । 'असद्वा इदमग्रआसीत् तदाहुः किं तदासीदिति ऋषयो वाव ते अग्रे सदासीत् के ते ऋषय इति प्राणावाव ऋषय इती'ति, सर्गाद्यकालेऽपि स्थितिश्रवणात् प्राणशब्दस्य बहुवचनांतस्य इंद्रियेष्वेव 'प्राणमनूत्क्रामंतं सर्वे प्राणा अनूत्क्रामंती'ति प्रयोगदर्शनात् 'तस्यासतऋषयस्सप्ततीर' इति ऋषिशब्दस्यापि तेषु दृष्टप्रयोगत्वाच्च । यद्यपि प्राणशब्दो ब्रह्मण्यपि दृष्टप्रयोगः, ऋषिशब्दश्च ज्ञानवत्त्वादुपपन्नः, तथाऽपि बहुवचनांतयोरनयोस्तस्मिन्नन्वयो न घटते । न 'अदितिःपाशा' निति बहुवचनवत् इह बहुवचनं अवयवबहुत्वविषयतया योजयितुं शक्यम् । ब्रह्मणो निरवयवत्वादिति । सिद्धान्तस्तु—

ब्रह्मण एकस्यैव सर्गाद्यकालेऽवस्थितेः सावधारणासु बहुषु श्रुतिषु श्रवणात्,प्राणशब्दस्य तस्मिन्निरूढिसत्वात्, ऋषिशब्दस्य ज्ञानसाधनेन्द्रियापेक्षया ज्ञानवति तत्र स्वारस्याच्च, ब्रह्मैवात्र प्राणाः । बहुवचनं तु 'गुणेत्वन्याय्यकल्पने' ति न्यायात् पाशबहुत्ववन्नेतव्यम् । अवयवाभावेऽपि

विशेषणबहुत्वस्य तदालम्बनस्य सद्भावात् । न च एकत्वावधारणेऽपि जीवर्दिद्रियाणामपि सत्वमस्त्विति वाच्यम् । कृतहानाकृताभ्यागमपरिहाराय अदृष्टाश्रयतया जीवस्येव तेषां तदा सत्वस्यावक्तव्यत्वात्, उदाहृतश्रुतेः ब्रह्मण्येव स्वारस्यस्य दर्शितत्वाच्च । सर्गाद्यकाले जीवकृत्या दृष्टावस्थितिवत् वागादींद्रियकृत्यस्य कस्याप्यभावात्, भूतसृष्ट्यनंतरमेव नामरूपव्याकरणश्रवणेन ततः प्राग्वागादींद्रियकृत्यानां नामोच्चारणादीनामभावावगमात्, 'एतस्माज्जायत' इति मंत्रे तेषां वियदादिसमानस्वरूपान्यथाभावरूपजननश्रवणाच्च ॥

संग्रहकारिका ॥

अग्रे सत्वात्प्राणाः नित्या इतिचेन्न सृज्यत्वात् ।
प्राणपदन्तद्ब्रह्मणि बहुवचनं पाशवन्नेयं ॥

इति प्राणाधिकरणम् ॥१॥

---

## सप्तगतेर्विशेषितत्वाच्च ॥४॥
## हस्तादयस्तु स्थितेऽतो नैवं ॥५॥

वियदादिवदुत्पत्तिमत्त्वेन सिद्धानामिंद्रियाणां संख्याविशेषश्चिंत्यत इति सङ्गतिः । 'किमिंद्रियाणि सप्त उत एकादशे' ति श्रुतिविप्रतिपत्तेस्संशये पूर्वपक्षः । सप्तैव । इह परत्र च जीवेन सह सप्तानामेव हि गतिः श्रूयते । 'सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषस्समिधस्सप्तजिह्वाः । सप्त इमे लोका येषु चरंति प्राणा गुहाशया निहितास्सप्त सप्ते' ति । वीप्सा पुरुषभेदाभिप्राया । विशेषिताश्च ते गतिमन्तः प्राणाः स्वरूपनिर्देशेन— 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गति' मिति । अत्र हि ज्ञानसाधनानि चक्षुरादीनि पञ्च मनोबुद्धिश्चेति सप्तैवेदंतयेंद्रियाणि निर्दिष्टानि । परमां गतिमिति परमगतिरूपमोक्षसाधनं योगमाहुरित्यर्थः । 'यानि त्वष्टौ ग्रहाः अष्टावतिग्रहाः सप्त वै शीर्षण्याः प्राणाः द्वाववाञ्चौ, नव वै पुरुषे प्राणानाभिर्दशमी, दश वै पशोः प्राणा आ-

त्मैकादश ' इत्याद्यष्टाद्यधिकसंख्याश्रवणं तदन्येषामपि किंचित्किंचिज्जीवोपकारकत्वमात्रेण इंद्रियत्वोपचारात् नाभिवत् । न हि नाभिरंध्रमिंद्रियम् । इंद्रियाणि तु सहगतिमंति सप्तैव । न्यूनाधिकसंख्याश्रवणे च न्यूनसंख्याग्रहणं न्याय्यम् । लाघवात् । अधिकसंख्याग्रहणे न्यूनसंख्यानां तत्रान्तर्भावात् सर्वाबाधो भवतीत्यधिकसंख्याग्रहणमेव न्याय्यमिति चेन्न । तथासति वागादिपञ्चकाहङ्कारचित्ताभ्यां सह क्वचिच्चतुर्दशेंद्रियाणि श्रूयन्त इति चतुर्दशसंख्याग्रहणापत्त्या एकादशेति नियमाभावप्रसङ्गादिति । सिद्धांतस्तु—

हस्तादीनामपि शरीरस्थिते जीवे कार्यभेदेन तद्भोगोपकरणत्वात्, ज्ञानेंद्रियाणि पंच, कर्मेंद्रियाणि पंच, मनश्चेत्येकादशेंद्रियाणीत्येवं मंतव्यं । हस्तादयो न संतीति न मंतव्यं । अतो ' दशेमे पुरुषे प्राणा आत्मैकादशएकादशमनश्चे ' त्यादिश्रुतिस्मृतिसिद्धेंद्रियसंख्या व्यवस्थितैव । नानाविधसंख्याश्रवणे कार्यानुसारेण संख्यानियमनमेव हि युक्तं । नानाविधावदानसाधनश्रवणे सामर्थ्यानुसारेणावदेयनियमनमिव । तदधिकसंख्यावादास्तु मनोवृत्तिभेदाभिप्रायाः । महदनुगृहीतं मनः अध्यवसायं, अहङ्कारानुगृहीतं मनः अभिमानं, पूर्वसंस्कारानुगृहीतं मनः चिंतां करोति । मन एवाध्यवसायादिरूपवृत्तिभेदोपहितं बुद्ध्यहङ्कारचित्तशब्दैरभिधीयत इति । न्यूनसंख्याश्रवणानि तु तत्र तत्र विवक्षितगमनादिकार्यविशेषाभिप्रायाणि । योगदशायां कर्मेन्द्रियेभ्योऽपि ज्ञानेन्द्रियाणां यत्नेन वशीकर्तव्यत्वरूपमस्ति प्राधान्यं तदभिप्राया ' यदा पंचावतिष्ठंत ' इति स्मृतिः । ' सप्तवै शीर्षण्याः प्राणा' इति सप्तानां शीर्षण्यत्वरूपमस्ति प्राधान्यम्, तदभिप्राया ' सप्तप्राणा ' इति श्रुतिः गतिश्रुतिश्च । एकादशानामपि गतिश्रुतिरस्त्येव । ' दशेमे पुरुषे प्राणाः आत्मैकादशः ते यदाऽस्मान्मर्त्याच्छरीरादुत्क्रामन्ती' त्यादिका । अतो एकादशेन्द्रियाणीति सिद्धम् ॥ सङ्ग्रहकारिका ॥

सप्तप्राणा युक्ताः सप्तानामेव गतिकथनात् ।
मैवं सह हस्ताद्यैः एकादश कार्यभेदात्स्युः ॥

इति सप्तगत्यधिकरणम् ॥२॥

---

## अणवश्च ॥६॥

तानींद्रियाणि किं विभूनि परिच्छिन्नानिवेति संशये 'त एते सर्व एव समाः सर्वेऽनंता' इति आनंत्यश्रवणात् अस्येन्द्रियस्य इदं परिमाणमिति परिमाणविशेषानुक्तिसहितात् विभुरेवेति प्राप्ते सिद्धान्तः–

उत्क्रांतिगत्या गतिश्रवणात्, आनंत्यश्रवणस्य 'स योहैताननन्तानुपास्ते अनन्तं सलोकं जयति' इति वाक्यशेषेण उपासनार्थत्वावगमाच्च परिच्छिन्नान्येव । दूरगतवस्तुग्रहणं तु शीघ्रगतिमत्वादिनोपपद्यते ॥

संग्रहकारिका ॥

ते विभवोऽनंतत्वश्रवणात् मैवं गतागतोत्क्रमणैः ।
सूक्ष्मास्ते तेषां पुनरुपासनाफलमनन्तताश्रवणम् ॥

## श्रेष्ठश्च ॥७॥

इंद्रियाणामुत्पत्तिविचारानंतरं छंदोमानां प्राणसंवादे इंद्रियैस्सह विवादेन लब्धश्रैष्ठ्यस्य मुख्यप्राणस्य इंद्रियैस्सह विवादोक्त्यैव तत्समानच्छायतावगमात् इंद्रियोत्पत्तिविचारानंतरं मुख्यप्राणोत्पत्तिर्विचार्यत इति संगतिः । यद्यपि 'एतस्माज्जायते प्राण' इति मंत्रत एव इंद्रियाणामिव प्राणस्यापि वियदादिवदुत्पत्तिस्सिध्यति, तथापि प्राणस्य भूतवायोः इंद्रियवृत्तिभ्यश्चान्यत्वं श्रुतिविरोधसमाधानेन निर्निनीषुः तस्य प्राक् प्रकृतोत्पत्तिविचारेण प्रासंगिकत्वसंपादनाय किंचिदधिकशंकानिराकरणाय च प्राणस्योत्पत्तिरिह चिंत्यते। अधिकशंकात्वित्थं– सर्गाद्यकाले जीवकार्यमदृष्टावस्थानमिव वागादींद्रियकार्यं नामधेयोच्चारणादिकं नास्ति । अतः प्राणर्षिशब्दौ ब्रह्मणि दृष्टप्रयोगौ ब्रह्मपरावित्युक्तं । प्राणस्यतु 'नासदासीन्नोसदासीत्तदानीं तम आसीत्तमसा गूढमग्रे प्रकेत'मित्युपक्रांते नासदासीये सूक्ते 'आनीदवातं स्वधयातदेक'मिति अननाख्यासाधारणव्यापारसद्भावश्श्रुतः । न च आनीच्छब्दः क्वचिदपि ब्रह्मणि दृष्टप्रयोगः । न च 'अवात'मिति विशेषणात् अननाख्यप्राणव्यापारो नभवत्यानीच्छब्दः । किंतु ब्रह्मसत्तापर इति वाच्यम् । संवर्गविद्यादिषु वायुप्राणयोः पृथगुपदेशेन

वाय्वभावेऽपि प्राणसद्भावोपपत्तेरिति ॥ तन्निवृत्तिस्त्वित्थं– वायोस्तत्वांतराभावेन वायुविशेषात्मको भवत्येव प्राणः । तस्मात् 'अवात' मिति वायुसामान्यनिषेधात् आनीच्छब्दस्य प्राणव्यापारपरत्वायोगेन ब्रह्मपरत्वमेव वक्तुं युक्तं । तथाच स्वेन ब्रह्मणा धीयते उपभुज्यत इति व्युत्पत्त्या स्वधाशब्देन लक्ष्मीरुच्यत इति लक्ष्मीविशिष्टस्य भगवतः परब्रह्मणस्सर्गाद्यसमये स्थितिरुक्ता भवतीति 'श्रेष्ठश्चे' ति सूत्रं 'पौष्णं पेषणं विकृतौ प्रतीयेते'ति पूर्वतंत्रसूत्रवत् उत्तरचिंतार्थत्वात् उत्तराधिकरणशेषएव । नाधिकरणांतरमिति केचिदाहुः ॥ इति श्रेष्ठाणुत्वाधिकरणम् ॥३॥

---

**न वायुक्रिये पृथगुपदेशात् ॥ ८ ॥**

**चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ९ ॥**

**अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ १० ॥**

**पंचवृत्तिर्मनोवद्व्यपदिश्यते ॥ ११ ॥**

किमयं मुख्यप्राणः वायुमात्रं, उत उच्छ्वासनिश्वासरूपा तत्क्रिया, अथवा अवस्थाविशेषापन्नो वायुरिति संशये 'यः प्राणस्स वायु' रिति श्रवणात् वायुमात्रं उच्छ्वासनिश्वासरूपा तत्क्रियावा । तत्र प्राणशब्दप्रयोगादिति पूर्वपक्षः । सिद्धान्तस्तु—

'एतस्माज्जायते' इति मंत्रे पृथगुपदेशान्नवायुमात्रम् । वायुमात्रे प्राणशब्दाप्रयोगाच्च । अत एव तदीया निश्वासादिक्रियाऽपि न भवति । अग्न्यादिक्रियाया इव वायुक्रियाया अपि 'एतस्माज्जायत' इति द्रव्योत्पत्तिमंत्रे पृथगुत्पत्त्युपदेशानर्हत्वात् तस्याभावार्थप्रत्ययान्तप्राणशब्दार्हत्वेऽपि प्राणितीति कर्त्रर्थप्रत्ययान्तस्य प्राणिति अनेन जीवतीति करणार्थप्रत्ययान्तस्य वा तस्यां प्रयोगाभावादिति । ननु यदि वायुरेव किंचिदवस्थान्तरं प्राप्तः प्राणः, तर्हि किमग्निरिव प्राणोपि वायुत्वं परित्यजेत् , नेत्युच्यते । नायमग्निवद्भूतांतरं । किंतु वायुत्वापरित्यागेनैव जीवस्य चक्षुरादिवदुपकरणविशेषः । तैर्विशिष्टत्वात् । प्राणसंवादे हि 'अथ ह प्राणा अहंश्रेयसे व्यू-

दिरे अहं श्रेयानस्मी 'ति चक्षुरादिभिस्सह कलहाभिधानेन तत्समानच्छायत्वावसायात्, तदनंतरं 'त्वंनश्रेष्ठोऽसी' ति चक्षुरादिवचनेन प्राणस्य मुख्यत्वनिर्धारणाच्च । समानजातीयानामेव हि सहशिष्टस्तुल्योपकारकत्वसंशयेन परस्परोत्कर्षकलहः । कस्यचिदुपकारातिशयदर्शनेन मुख्यत्वनिर्धारणं च भवति । जीवोपकरणत्वेनप्रसिद्धैस्समानजातीयत्वञ्च प्राणस्यापि तदुपकरणत्वे सत्येव भवति । ननु चक्षुरादिभिरिव प्राणेन जीवस्योपकारविशेषो न दृश्यतइतिचेन्नायं दोषः । श्रुतिरेवहि शरीरेंद्रियधारणरूपां क्रियां तदुपकारत्वेन दर्शयति । यथा प्राणसंवादे चक्षुरादीन् प्रति प्राणस्य वचनं 'मामोहमापद्यथाहमेवैतत्पंचधात्मानं प्रविभज्य एतद्बाणमवष्टभ्य विधारयामी'ति । ननु पंचधा भेदे व्यानादयः किं प्राणात्तत्वांतराणि नेत्युच्यते । 'कामस्संकल्पोविचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मनएवे'ति वचनात्कामसंकल्पादयो मनस इव प्राणवायोरेकस्यैव प्राणापानादयोवृत्तिभेदाः । एतेनेंद्रियाणां साधारणी वृत्तिः प्राणइति सांख्यपक्षो निरस्तः । तेहि कल्पयंति 'पंजरस्थानां सर्वेषां शुकानां पंजरचालनमिव वा सर्वासां खलकपोतिकानामुपरिपातितवागुरोत्क्षेपणमिववा शरीरस्थानां सर्वेषामिंद्रियाणां साधारणव्यापारःप्राण'इति । नैतद्युक्तं । इंद्रियकार्यविषयोपलब्धिव्यतिरेकेणोच्छ्वासनिश्वासक्रियायाः, स्वात्मानं पंचधा विभज्य देहधारणक्रियायाश्च मुख्यप्राणस्वतंत्रकार्यस्यदर्शनात् ॥

संग्रहकारिके ॥

मुख्यप्राणोप्यक्षवर्गोक्तरीत्या ब्रह्मोत्पन्नोवायुमात्रं तथोक्तेः ।
देहांतर्वा तत्क्रिया श्वासरूपा मैवं द्रव्यैस्साकमुत्पत्तिवादात् ॥
वायोरेवत्ववस्थांतरमयमिति संगच्छते वायुतोक्तिः
पूर्वावस्थानुवृत्तेर्भवति दहनवन्नास्य भूतांतरत्वं ।
नित्यं संसारभाजामुपकरणमिदं शिष्यते चक्षुराद्यैः
ख्यानात्यंतोपकारस्तनुकरणमयं धारयन्पञ्चवृत्तिः ॥

इति वायुक्रियाधिकरणम् ॥४॥

---

## अणुश्च ॥ १२ ॥

प्राणस्वरूपनिर्धारणानंतरं तत्परिमाणं निरूप्यतइति संगतिः । प्राणोविभुः परिच्छिन्नोवेति श्रुतिविप्रतिपत्तेस्संशये विभुरिति पूर्वःपक्षः । 'समएभिस्त्रिभिर्लोकैस्समोनेन सर्वेण, प्राणे सर्वं प्रतिष्ठितं, सर्वं हीदं प्राणेनावृत' मिति श्रवणात् । नन्विंद्रियाणामानंत्यश्रवणेऽपि उत्क्रमणादि-लिंगेन परिच्छिन्नत्वं प्रसाधितं, तेनैव न्यायेन प्राणस्यापि परिच्छिन्नत्वं सिध्येत् । किमनेनाधिकरणेन । उच्यते– उपास्तिविधानांतर्गतमानन्त्यं, इदंतु नतथेति पूर्वपक्षीमन्यते । यद्वा 'सर्वंहीदंप्राणेनावृत' मितीत्युपपत्तिसहितं सर्वसाम्यश्रवणमुत्क्रमणादिलिंगात् प्रबलं । अतस्तदौपयिकोत्क्रमणादिरूपं वाच्यमिति पूर्वपक्ष्यभिप्रायः । उपासनाविधिशेषत्वं सर्वसाम्यलिंगेपि तुल्यं 'एवमेतत्साम्यं वेदे' त्युपासनाविधिसन्निधानात् । 'प्राणे सर्वं प्रतिष्ठितं सर्वंहीदं प्राणेनावृत'मित्येतदपि सर्वस्य शरीरस्य प्राणे प्रतिष्ठितत्वं प्राणेनावृतत्वंच ब्रूते । न तु सर्वस्य जगतः प्राणावृतत्वरूपं । प्राणस्य व्यापकत्वं हिशब्दप्रयोगेन प्रसिद्धार्थवादत्वावगमात् शरीरस्येव च प्राण-प्रतिष्ठितत्वप्राणावृतत्वयोः लोकतश्श्रुत्यंतरतश्च प्रसिद्धेरिति सिद्धांतः ॥

संग्रहकारिका ॥

समएभिस्त्रिभिर्लोकैरित्याम्नानादयं विभुः ।
अणुरुत्क्रमणादिभ्यः सर्वसाम्यश्रुतिस्स्तुतिः ॥

इति प्राणाणुत्वाधिकरणम् ॥९॥

---

## ज्योतिराद्यधिष्ठानंतु तदामननात्प्राणवता शब्दात् ॥ तस्य च नित्यत्वात् ॥१४॥

प्राणानामुत्पत्तिमत्तापरिमाणादिविचारानन्तरं अग्न्यादिदेवताधिष्ठि-तत्वप्रकारविशेषश्चिंत्यत इति संगतिः । किमग्न्यादिदेवतानां प्राणाधिष्ठा-तृत्वं 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्या'मिति प्राक्प्रसंगादुक्तं । तत् स्वस्वायत्तं उत ईश्वरायत्तमिति संदेहे पूर्वपक्षः– यद्यपि 'परात्तु त-

च्छुते ' रित्यधिकरणे जीवानां कर्तृत्वमीश्वरायत्तमित्युक्तं, तथापि अग्न्यादित्यादीनामीश्वरदत्तैश्वर्याणां ईश्वरवत् वरदायित्वफलप्रदत्वादिसत्वेन स्वातंत्र्यसत्वात्तत्तदायत्तमेवाधिष्ठातृत्वमस्तु परायत्तताश्रुतेः मनुष्यादिविषयत्वेन संकोचोपपत्तेरिति । सिद्धांतस्तु—

ज्योतिरादीनामग्न्यादित्यादीनां यच्चक्षुराद्यधिष्ठातृत्वं तत्परमेश्वरस्यैव संकल्पात् । कुतः ? तस्य सर्वांतर्यामित्वश्रुतेः । अतो यथा जीवस्य ' एवमेवैष एतान् प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तत ' इति स्वातंत्र्यश्रवणेऽपि तस्य इंद्रियाधिष्ठातृत्वं परायत्तं, एवमभिमानिदेवतानामपीति युक्तं । ननु परमेश्वरदत्तैश्वर्येण देवतानां मनुष्यादिभ्यो विशेषोस्तीति चेन्न । सर्वेषां संसारिणामीश्वरानियम्यत्वस्य नित्यत्वात् 'स ईशोऽस्य जगतोनित्यएवे ' त्यविशेषश्रवणात् । अतः प्राग्देवतापदप्राप्तेः परमेश्वरनियम्यानां तासां तदनंतरमपि अमात्यानां राजानियम्यत्ववत् ईश्वरनियम्यत्वमवर्जनीयमेव ॥

संग्रहकारिके ॥

अग्न्यादिदेवतानामाराध्यानां फलप्रदानांच ।
प्राणाधिष्ठातृत्वं स्वायत्तं भवतु को दोषः ॥
मैवं तदीश्वरादीनां तासां प्राणवता सह ।
नित्यानुबंधिनीह्येषां सर्वेषां तन्नियम्यता ॥

इति ज्योतिराद्यधिष्ठानाधिकरणम् ॥६॥

---

## त इंद्रियाणि तद्व्यपदेशादन्यत्रश्रेष्ठात् ॥१५॥

## भेदश्रुतेर्वैलक्षण्याच्च ॥१६॥

इंद्रियाणां प्राणस्य चोत्पत्त्यादिनिरूपणानंतरं किं सर्वे प्राणशब्दनिर्दिष्टा इंद्रियाणि उत मुख्यप्राणव्यतिरिक्ता इति विचार्यते । ननु किमस्य विचारस्य प्रयोजनं । मुख्यप्राणानुगततद्व्यावृत्तलक्षणविचारस्य व्यवहारविशेष एव प्रयोजनमिति चेत् मैवं । न खलु वैशेषिकशास्त्र इव व्यव-

हारमात्रप्रयोजनो लक्षणविचारोस्त्यस्मिन् शास्त्रे उच्यते । श्रुतिविप्रतिपत्ति निरासार्थ एवायमपि विचारः । तथाहि– बहुवचनांतःप्राणशब्दः इंद्रियपर्याय इति निर्विवादं । तस्य मुख्यव्यावृत्तः प्रयोगो दृश्यते– 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती' ति । तेन श्रेष्ठादन्ये चक्षुरादय एवेंद्रियाणीति प्रतीयते । 'अथ ह यएवायं मुख्यःप्राणस्तमुद्गीथमुपासांचक्रिर' इति श्रेष्ठे मुख्यप्राणशब्दप्रयोगात् सोपींद्रियांतर्भूत इति प्रतीयते । येन प्रवृत्तिनिमित्तेन चक्षुरादिषु प्राणशब्दप्रवृत्तिः तेनैव श्रेष्ठे तत्प्रवृत्तौ हि श्रेष्ठःप्राणानां मध्ये मुख्यप्राणो भवति यथा ब्राह्मणानां-मध्य एव कश्चिन्मुख्यब्राह्मणो भवति । एवं श्रुतिविप्रतिपत्तौ सत्यां पूर्वपक्षः– प्राणोपींद्रियमेव । प्राणशब्दवाच्येषु तस्य मुख्यत्वप्रतिपादनात् । न च 'एतस्माज्जायत' इति मंत्रे प्राणस्य पृथगुत्पत्तिवचनादिंद्रियेभ्यो भेदश्शंकनीयः । तथा सति मनसोपि तेभ्यो भेदापत्तेः । प्राणस्यापींद्रियत्वे सत्येव प्रायस्सजातीयेष्वेव लोके दृष्टः परस्परोत्कर्षकलहः चक्षुरादीनां प्राणस्य च श्रूयमाणस्संगच्छते । न चांतरंगेणेंद्रियत्वेन साजात्यं संभवति बहिरंगेण जीवोपकरणत्वेन साजात्यात् स उपपादनीयः । एवं च 'इंद्रियाणि दशैकञ्चे' त्यादिवचनं मुख्यप्राणातिरिक्तेंद्रियादिविषयं । यथा 'सप्तप्राणा' इति वचनं शीर्षण्यप्राणमात्रविषयमिति नैकादशसंख्योक्तिविरोधः । तस्मात् 'स योहैताननंतानुपास्त' इति विहितमिंद्रियोपासनं मुख्यप्राणसहितमेव कार्यमिति । सिद्धांतस्तु–

श्रेष्ठे मुख्यप्राणशब्दः प्राणशब्दोदितानामिंद्रियाणां मध्ये मुख्येंद्रियरूप इत्येवमर्थो न भवति, किं तु मुखेभवः प्राण इत्येतदर्थकः । बृहदारण्यके समानप्रकरणे 'अथहेममासन्यंप्राणमूचु' रिति मुख्यशब्दस्थाने आसन्यशब्दप्रयोगात्, तस्यचास्येभव इत्येतदर्थकत्वात् । तत्रह्यास्यशब्दस्य 'पद्दन्नोमास्' इत्यादिसूत्रेणासन्नादेशः । यदि तु मुख्यः प्राण इत्यस्य प्राणानां मध्येमुख्य इत्यर्थः, तथापि प्राणस्येंद्रियत्वं न लभ्यते । अयं प्राणः प्राणशब्दस्य मुख्योभिधेयः, अन्ये प्राणा इंद्रियाणि तस्य

लक्षणीया न मुख्या इत्येवमर्थकत्वोपपत्तेः, ' त एतस्यैव सर्वे रूपमभवं स्तस्मादेत एतेनाख्यायंत ' इति मुख्यप्राणवाचकेनैव सता चक्षुरादीनां लक्षणीयत्वोक्तेः । सर्वमेतत् ' अन्यथात्वंशब्दादितिचे ' दिति गुणोपसंहारपादाधिकरणे स्पष्टीभविष्यति । तस्मान्मुख्यप्राणव्यतिरिक्ताश्चक्षुरादयएवेंद्रियाणि । ' एतस्माज्जायते प्राण ' इति मंत्रे पृथङ्निर्देशादपि तथा वसीयते । मनस इंद्रियेभ्यः पृथङ्निर्देशेऽपि 'मनष्षष्ठानींद्रियाणी'ति वचनांतरानुसारेण मनस इंद्रियत्वमभ्युपेयते । न तथेह प्राणस्येंद्रियत्वे वचनांतरमस्ति । किंच प्राणस्येंद्रियाणांच वैलक्षण्यमप्यस्ति । सुषुप्तौ हि चक्षुरादिषु सर्वेषूपरतेष्वपि प्राणस्य वृत्तिरुपलभ्यते । 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति भूर्भूरित्येव श्वसिती ' ति श्रुत्याप्यनूद्यते । कार्यवैलक्षण्यं चास्ति– ज्ञानानि कर्माणि च इंद्रियाणां कार्याणि, प्राणस्य तु देहधारणं । तस्मान्मुख्यप्राणव्यतिरिक्ताश्चक्षुरादयएव इंद्रियाणि । तेषांचैकादशानामनुगतं लक्षणं सात्विकाहंकारविकारत्वम् ॥

संग्रहकारिका ॥

प्राणोऽपींद्रियभेदः सर्वेषां प्राणशब्दवाच्यत्वात् ।
मैवं पृथगुपदेशा दन्येषां प्राणता तु लक्षणया ॥

इति इंद्रियाधिकरणम् ॥७॥

---

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥१७॥
## मांसादिभौमं यथाशब्दमितरयोश्च ॥१८॥
## वैशेष्यात्तु तद्वादस्तद्वादः ॥१९॥

खादिषु पूर्वपूर्वशरीरकस्य ब्रह्मण उत्तरोत्तरसृष्टिकर्तृत्वप्रतिपादनेन सर्वत्रापि सृष्टौ ब्रह्मणस्साक्षात्कर्तृत्वं ' भेदश्रुते ' रिति सूत्रेण दर्शितं । तन्नोपपद्यते– नामरूपव्याकरणे केवलं हिरण्यगर्भस्य कर्तृतायाः श्रुतिस्मृतिप्रसिद्धत्वादित्याक्षेपेणोत्थानात् संगतिः । खादिसृष्टाविव नामरूपव्याकरणेऽपि तस्य साक्षात्कर्तृत्वमुपपद्यत इति दृष्टान्तसङ्गतिर्वा । ' अनेन जीवेना-

त्मनाऽनुप्रविश्य नामरूपे व्याकरवाणी' ति श्रुतिः, 'नामरूपञ्च भूतानां कृत्यानांच प्रपंचनम् । वेदशब्देभ्यएवादौ देवादीनां चकार स' इत्यादिस्मृतिश्च हिरण्यगर्भस्य नामरूपव्याकर्तृत्वं प्रतिपादयति, उत तच्छरीरकस्य परमात्मन इति संशये पूर्वपक्षः– हिरण्यगर्भस्यैव प्रतिपादयति । 'जीवेन व्याकरवाणी' ति श्रवणात् । नन्वेवं सति 'यथा चारेण परसैन्यं कलयानीति नरपतिरमन्यते' ति लौकिकवाक्ये चारकर्तृकं परसैन्यसङ्कलनं राज्ञि गौणं व्यपदिश्यते । एवमिहापि जीवकर्तृकं नामरूपव्याकरणं ब्रह्मणि गौणं व्यपदिष्टमिति स्यात्, नैष दोषः। राजचारयोरिव जीवेश्वरयोरंशांशिनोस्स्वरूपभेदाभावेनात्रापि 'जीवेनात्मने' ति जीवस्येश्वरकर्तृत्वस्वात्मत्वपरामर्शेन च जीवकर्तृकस्य सङ्कलनस्य मुख्यतयैवेश्वरकर्तृकत्वोपपत्तेः । न च सहयोगलक्षणेयं तृतीयास्तु , तथा च ईश्वरस्यापि तत्र कर्तृत्वं घटत इति वाच्यम् । उपपदविभक्तितः कारकविभक्तेः पदान्तरयोगनिरपेक्षत्वेन बलीयस्त्वात् । न च करणार्थतया कारकविभक्तित्वनिर्वाहः । ईश्वरकर्तृके व्याकरणे जीवस्य साधकतमत्वाभावात् । किं च करणार्थत्वेऽपि व्याकरणं जीवकर्तृकमेव पर्यवस्यति । नेश्वरकर्तृकम् । चेतनं कर्तारं प्रति चेतनांतरस्य करणतयोपकारकत्वं हि तत्प्रयोज्यकर्तृतयैव भवति । अस्मिन्पक्षे राज्ञश्चारकर्तृके सङ्कलन इव ईश्वरस्य जीवकर्तृके व्याकरणे कर्तृत्वममुख्यं विवक्षितमिति नेतव्यम् । एवं करणार्थत्वकल्पने सति तृतीयानुपपत्तिशङ्काऽपि निरस्ता भवति । कर्त्रर्थत्वे हि तच्छङ्का स्यात् । व्याकरणकर्तुः तिङाऽभिहितत्वात् । न च जीवस्य कर्तृत्वं प्रवेशमात्रे पर्यवस्यति । व्याकरणंत्वीश्वरस्यैवेतिकल्पनेन कर्तरि तृतीयानिर्वाहः । 'समानकर्तृकयोः पूर्वकाल' इति क्त्वाप्रत्ययस्य कर्त्रैक्यार्थत्वस्मरणेन भिन्नकर्तृकयोस्तदसम्भवात् । तस्यापि कर्त्रर्थत्वस्मरणेन तदभिहितेऽपि कर्तरि तृतीयानुपपत्तेश्च । अतस्संकलनस्य चार इव व्याकरणस्य जीव एव मुख्यकर्ता । तथा सत्येव 'नामरूपं च भूताना' मिति स्मृतिरपि संगच्छते । न हि हिरण्यगर्भजीवांतर्यामी परमेश्वरो देवादिनामरूपसृष्टये पूर्वसर्गवृत्ततन्नामरूपस्मृत्यर्थंवेदशब्दानपेक्षतइति।एवंप्राप्तेसिद्धांतः

संज्ञामूर्तिक्लृप्तिः– देवादीनां नामरूपव्याकरणं त्रिवृत्कुर्वतः परमेश्वरस्यैव सृष्टिः । ' सेयं देवतैक्षतहंताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणी ' ति त्रिवृत्करणनामरूपव्याकरणयोस्समानकर्तृकत्वश्रवणात् । त्रिवृत्करणं हि परमेश्वरस्यैव कर्म । न तु ' तस्मिन्नंडेऽभवद्ब्रह्मा सर्वलोकपितामह ' इति अंडांतस्संभूतत्वेन स्मृतस्य हिरण्यगर्भस्य । त्रिवृत्कृतैस्तेजोबन्नैरंडस्योत्पादनीयत्वात् । तस्मात् त्रिवृत्करणकर्तेश्वरः नामरूपव्याकरणस्यापि कर्ता । हिरण्यगर्भस्यापि तत्कर्तृत्वस्मृतिः घटादेरिव तस्य द्विकर्तृकत्वादुपपद्यते । कथमिदानीं ' जीवेनात्मने'ति सामानाधिकरण्यं । जीवशब्दस्य जीवशरीरकपरमात्मपरत्वादित्यवेहि । कथमाख्याताभिहिते कर्तरि तृतीया । प्रवेशक्रियाकर्तुरनभिधानात् । आख्यातेनाभिधीयमाने कर्तरि तत्कर्तृकाख्यातोपात्तक्रियापेक्षया क्त्वाप्रत्ययप्रकृत्युपात्तक्रियायाः पूर्वकालत्वं तयोः क्रिययोः कर्तुरैक्यं चेत्येतावन्मात्रमेव हि क्त्वार्थः । लाघवात् । नत्वन्यलभ्या कर्तृशक्तिरपि । तथाऽपि प्रधानक्रियान्वयस्याभ्यर्हितत्वात् व्याकरणान्वय एव जीवशरीरकस्य परमात्मनो वक्तव्यस्स्यादिति चेत्— सत्यं । प्रधानक्रियान्वयासंभवे उपसर्जनक्रियान्वयोपि युक्त एव । यथा ' इष्टकाः कृत्वा भुङ्क्ष्व ' इत्यत्र तत्र इष्टकानां भोजनक्रियाकर्मत्वेन अन्वयानर्हत्वादसंभवः । इह तृतीयांतनिर्दिष्टस्य कर्तुः कर्त्रर्थकाख्यातान्वयानर्हत्वादित्येव विशेषः । यदि क्त्वाप्रत्ययस्य कर्त्रैक्यपूर्वकालत्वमात्रमर्थमंगीकृत्य कर्तृशक्त्यभिधायकत्वं प्रत्याख्यायेत तदेह जीवेनेतिवत् ' इष्टकाः कृत्वाऽहंभोक्ष्य ' इत्यत्रापि मयेति अनभिहिताधिकारविहितया तृतीययैव भाव्यं स्यात् । अतस्तस्य कर्तृशक्त्यभिधायकत्वमंगीकृत्यैव तत्र प्रथमा समर्थनीया । ततश्च अत्रापि क्त्वाप्रत्ययेन कर्तुरभिधानात् जीवेनेति तृतीया न स्यात् प्रथमयैव भाव्यं स्यादिति कर्तृशक्त्यनभिधानमाश्रित्य तृतीयासमर्थनीयामनुपपत्तिः, तदा छांदसत्वेनेयं व्याकरणकर्तरि जीवशरीरके परमात्मनि तृतीयोपपादनीया । न तु जीवस्येश्वराभिन्नत्वं व्या-

करणस्य जीवकर्तृकत्वंचांगीकृत्य तृतीयेयमुपपादनीया । जीवेश्वरयोर्भेदस्य समर्थितत्वात् । अतस्त्रिवृत्करणसमानकर्तृकं व्याकरणं त्रिवृत्करणकर्तुरीश्वरस्यैव कृतिरिति सिद्धं । यद्यपि हिरण्यगर्भसृष्ट्यनंतरनामरूपव्याकरणानन्तरं त्रिवृत्करणं श्रुतौ पठितं, तथापि पाठक्रमादर्थक्रमस्य बलीयस्त्वात् त्रिवृत्करणं प्रागेवेत्यस्यार्थस्य प्रपंचनं भाष्ये द्रष्टव्यं ॥

संग्रहकारिके ॥

सरसिजसंभव एव व्याकरणनामरूपयोः कर्ता ।
जीवेनेति श्रवणात् तत्सृज्यप्रकरणे च तत्स्मरणात् ॥
मैवं यस्त्रिवृतं चकार कथितः कर्ता स हि व्याकृतौ
तद्धाता न तथा त्रिवृत्कृतधराद्युत्पादिताण्डोद्भवः ।
तेन व्याकरणत्रिवृत्करणयोः कर्ता स एवेश्वरो
जीवेनेति तु तच्छरीरकतया तत्रैव शक्तं पदम् ॥

इति संज्ञामूर्त्यधिकरणम् ॥ ८ ॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे द्वितीयस्याध्यायस्य चतुर्थः पादः ॥

---

॥ द्वितीयोऽध्यायस्समाप्तः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

---

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

# तृतीयोऽध्यायः ॥

## ॥ तृतीयस्याध्यायस्य प्रथमःपादः ॥

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥१॥

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥२॥

प्राणगतेश्च ॥३॥

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥४॥

प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥५॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥६॥

भाक्तं वाऽनात्मवित्वात्तथाहि दर्शयति ॥७॥

सर्वेषां वेदान्तानां सर्वविधविरोधनिराकरणेन ब्रह्मणि समन्वयोऽध्यायद्वयेन प्रतिपादितः । तृतीयाध्याये तत्प्राप्तिसाधनमुपासनं सोपायं चिन्त्यते । तत्रोपासनाप्राप्यवस्तुव्यतिरिक्ताद्वैराग्यं तावदुपासनारम्भेऽभ्यर्हित उपायः । तत्सिध्यर्थमिह परत्र च सञ्चरतो जीवस्य दोषाः प्रदर्श्यन्ते । तत्र देहाद्देहान्तरं गच्छन् जीवो देहान्तरारम्भहेतुभिर्भूतसूक्ष्मैः वेष्टितो गच्छति, उत तदवेष्टित इति पञ्चाग्निविद्यागतप्रश्नप्रतिवचनयोर्भूतसूक्ष्मवेष्टनगमकत्वसम्भवासम्भवाभ्यां संशयः । तत्र पूर्वपक्षः– अवेष्टितो गच्छति । यत्र जीवो गच्छति, तत्र देहान्तरारम्भोऽस्ति चेदैहिकदेहारम्भकैकदेशानां भूतसूक्ष्माणां देहान्तरारम्भापर्याप्तत्वेन तदारम्भाय अवश्यं भूतान्तरमेळनापेक्षावश्यंभावेन तैरेव पारत्रिकदेहोत्पत्तिसम्भवात्, भोग्यजातवत्, परलोक एव देहान्तरा-

रम्भपर्याप्तभूतानामपि लाभोपपत्तेः अणोर्जीवस्य स्वतोगमनसम्भवेन तदर्थ-मपि भूतवेष्टनानपेक्षणात् । न च पंचाग्निविद्यागतप्रश्नप्रतिवचनाभ्यां तद्वे-ष्टनसिद्धिः । तयोस्तदस्पर्शित्वात् । तथा हि— श्वेतकेतुमारुणेयं पांचालराजः प्रवाहणः 'वेत्थ यथा पंचम्यामाहुतावापः पुरुषवचसो भवंती'ति पृष्ट्वा त-स्मिन्निमं प्रश्नं प्रतिवक्तुमजानति तस्य पितरि चाजानति तत्पित्रा समागत्य पृष्टः प्रवाहणः स्वयमेव प्रश्नविषयान् निरूपयन् कास्ताः पंचाहुतयः या-सामुत्तमायामाहुतावापः पुरुषशब्दाभिलपनीयतां भजंत इत्याकांक्षायां 'असौ वाव लोको गौतमाग्नि'रित्यादिना द्युपर्जन्यपृथिवी पुरुषयोषितः पंचाग्नित्वेन रूपयित्वा तेषु श्रद्धासोमवृष्ट्यन्नरेतोद्रव्यकाः पंचाहुतीरुपदिश्य तदनंतरं 'इति तु पंचम्यामाहुतावापः पुरुषवचसो भवंती'ति स्वपृष्टार्थनिरूपणं कृतवान् । नात्र प्रश्ने प्रतिवचने वा भूतानां श्रवणमस्ति । दूरे तत्संपरिष्वक्त-स्य जीवस्य । भूतेषु अपां श्रवणमस्ति । न तु तासां द्युलोकपर्यंतं गमनस्य, ततो योषित्पर्यन्तं प्रत्यागमनस्य वा श्रवणमस्ति । तस्मात् भूतसूक्ष्मवेष्टित-स्य इह परत्र च संचार इत्यत्र नास्ति प्रमाणमिति । एवंप्राप्ते सिद्धांतः—— भूतसूक्ष्मैर्वेष्टित एव इह परत्र च संचरतीति प्रश्नप्रतिवचनाभ्यामवसीयते । प्रश्नप्रतिवचनयोरपां पुरुषशब्दाभिलपनीयत्वश्रवणं हि तासां पुरुषाधिष्ठान-देहारम्भकत्वेनैवोपपादनीयम् । देहारम्भश्च न केवलाभिरद्भिर्भवति । देहे स्नेहगन्धादिकार्यदर्शनेन तेजोबन्नस्य सर्गाद्यकाल एव त्रिवृत्कृतत्वेन च देहस्य त्र्यात्मकत्वात् । एवं त्र्यात्मकत्वेऽपि देहस्य लोहितादिभूयस्तया कार्यानु-सारेण तदारम्भकभूतेष्वपां भूयस्त्वादप्छब्देनाभिधानम् । अपि च अस्ति जीवस्य गताविंद्रियाणामपि गमनम् । न च तेषां शरीरमनाश्रित्य गमन-मवस्थानमात्रं वा संभवति । जीवद्दशायामदर्शनात् । न च तेषां स्वस्व-कार्येषु प्रवृत्त्यर्थमेव देहाश्रयणं गमनमवस्थानं च स्वोपादानाश्रयाणामेव सं-भवतीति वाच्यम् । मार्गे चंद्रसंवादादिश्रवणेन तत्र स्वस्वकार्येषु प्रवृत्तेरपि सत्त्वात् । ननु 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादि-त्य'मित्यादिना मरणकाले प्राणानामग्न्यादिगतिश्रवणान्न तेषां जीवेन साकं

गतिरिति चेन्न । तस्य भाक्तत्वात् । 'ओषधीर्लोमानि वनस्पतीन् केशा' इत्योषधिवनस्पतीनगच्छद्भिर्लोमादिभिस्सहपाठात् । अतोऽग्न्यादिश्रुतिरधिष्ठातृदेवतापक्रमणपरा । ननु अद्भिर्भूतान्तरसंसृष्टाभिः परिष्वक्तो जीवो गच्छतीति प्रश्नप्रतिवचनाभ्यामवगम्यत इत्येतन्नोपपद्यते । द्युलोकाग्निविषये प्रथमे होमे 'तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वती' ति श्रद्धाया एव देवशब्दोक्तम्रियमाणेंद्रियकर्तृकहोमविषयत्वश्रवणादिति चेन्न । यतस्तत्रापश्श्रद्धाशब्देनोच्यन्ते, तदभिधान एव प्रश्नप्रतिवचनयोरुपपत्तेः । श्रद्धाशब्दस्य 'श्रद्धावा आपः' इत्यादिश्रुत्यन्तरेष्वप्सु दृष्टप्रयोगत्वेन तल्लक्षकत्वोपपत्तेः । तथाऽपि भूतपरिष्वक्तो जीवो गच्छतीत्ययुक्तम् । 'श्रद्धां जुह्वती' त्यादिवाक्येषु जीवस्याश्रुतत्वादिति चेन्न । इष्टादिकारिणां प्रतीतेः । 'तस्मिन्नेतस्मिन्नग्नौ देवाश्श्रद्धां जुह्वती' त्येतदनन्तरस्या आहुतेस्सोमो राजा संभवतीत्यनेनेष्टापूर्तदत्तकारिणां द्युलोकप्राप्त्यनन्तरं सोमराजभावश्रवणात् । तत्र सोमराजशब्दस्य द्युलोकभोगार्थलब्धदिव्यदेहेष्टादिकारिपरत्वस्य तत्रत्यवाक्यान्तरपर्यालोचनयाऽवगमात् । तत्र हि 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवंति धूमाद्रात्रि' मित्यादिना 'पितृलोकादाकाशमाकाशाच्चन्द्रमस' मित्यन्तेनेष्टादिकारिणां धूमादिमार्गेण चन्द्रप्राप्त्युक्त्यनन्तरं 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयंती' ति तेषां सोमराजभावः श्रूयते । तेषु सोमराजशब्दस्त्वमृतमयदेहवत्वसादृश्यात् समनन्तरवाक्यप्रदर्शयिष्यमाणदेवभोग्यत्वसादृश्याद्वा । ननु तत्र सोमराजशब्दः इष्टादिकारिजीवपरः 'तं देवा भक्षयन्ती' ति देवभक्ष्यत्वश्रवणादिति चेन्न । तस्य वचनस्यानात्मविदः केवलेष्टादिकारिणः स्वर्गं प्राप्यापि देवानां निदेशकारिणस्तदुपसर्जनभूता भवन्ति । देवाश्च तत्र तत्र तान्नियुञ्जानाः पीडयन्तीत्येतदभिप्रायतया भाक्तत्वात् । तस्मात् भूतसूक्ष्मैस्संपरिष्वक्त एव जीवो रंहति । तत्संपरिष्वङ्गस्य देहांतरारंभार्थत्वादिंद्रियगमनार्थत्वाच्च । एतद्देहत्यागमात्रेण नकृतार्थता । तेषामिह दृश्यमानदुःखानुभवस्य परत्राजानदेवभूतानां भृत्यत्वसातिशयत्वप्रयुक्तदुःखानुभवस्य चापरिहार्यत्वादिति सिद्धम् ॥

संग्रहकारिके ॥

सप्राणेन्द्रियभूतसूक्ष्मनिवहैस्सार्वत्रिकैर्भोग्यवत्
जीवस्य प्रयतस्स्वतो गतिमतो नापेक्षितं वेष्टनम् ।
नापि श्रुत्युदितं श्रुता पुरुषता निर्देश्यतैवास्वपा-
मग्न्याद्यप्ययवर्णनेन च हतं प्राणेन्द्रियैर्वेष्टनम् ॥
पञ्चम्यामाहुतौ यत्पुरुषवचनतां वक्त्यपां त्र्यात्मकानां
तेन स्वर्गादिकेष्वप्यधिगमयति ताहोम्यजीवानुषक्ताः ।
वागादीनां च भाक्तं श्रुतिरनलमुखेष्वप्ययं लोमनीत्या
तस्मादेतैस्समस्तैर्विगणय दृढमामुक्तिजीवस्य बंधम् ॥

इति तदंतरप्रातिपत्त्यधिकरणम् ॥ १ ॥

---

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥**
**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥९॥**
**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥**
**सुकृतदुष्कृत एवेतितु बादरिः ॥११॥**

अनात्मविदां परलोके भृत्यत्वादिप्रयुक्तदुःखवत् तल्लोकभोगस्य क्षयिष्णुत्वप्रयुक्तमपि दुःखमस्तीत्युच्यत इति तेषां देहसम्बन्धवत् तद्धेतुकर्मसंबंधोऽप्यवर्जनीय इति चोच्यत इति सङ्गतिः । इष्टादिकारिणां परलोके कर्मफलं भुक्तवतां कर्मफलावसाने पुनरावृत्तिराम्नाता– 'यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तत' इति । ते सानुशया निवर्तंते उत निरनुशया इति 'यावत्सम्पातमुषित्वे' ति श्रवणात्, 'रमणीयचरणा' इत्यादिश्रवणाच्च, संशये पूर्वपक्षः—

अनुशयो ह्युपभुक्तशिष्टं कर्म । तन्नसंभवति । 'यावत्सम्पातमुषित्वे' ति कृत्स्नकर्मफलोपभोगवचनात् । 'संपतन्त्यनेन स्वर्गं लोक' मितिहि संपातः कर्मोच्यते । 'प्राप्यांतं कर्मणस्तस्य यत्किंचेह करोत्ययं । तस्माल्लोकात्पु-

नरेत्यस्मै लोकाय कर्मण' इति श्रुत्यंतरे निरवशेषभुक्तकर्मणः पुनरावृत्तिराम्नायत इति ततोऽपि निरनुशयत्वमवसीयते। न च कर्मविशेषाभावे पुनरावृत्तस्य कर्मानधीनब्राह्मणक्षत्रियादिजन्मानुपपत्तिः। चरणविशेषेभ्यस्तदुपपत्तेः। 'तद्य इह रमणीयचरणाः अभ्याशोहयत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथयइहकपूयचरणाः अभ्याशोह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चंडालयोनिं वे 'ति श्रवणात् । न च तत्र चरणशब्दः पुण्यपापरूपकर्मपरः । चरणशब्दस्य लौकिकैराचारशीलवृत्तपर्यायेषु संध्योपासनादिष्वेव व्यवह्रियमाणत्वात् । वेदेऽपि 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि, यान्यस्माकं सुचरितानि तानि त्वयोपास्यानी ' ति यागादिकर्मणामाचाराणां च भेदेन निर्देशाच्च । परलोकभोग्यं 'यागादिकर्मफलं, इह ब्राह्मणादिजन्माचारफल' मिति व्यवस्थित्यनंगीकारे संध्योपासनाद्याचाराणां वैयर्थ्यप्रसंगाच्चेति। सानुशया एवावरोहंति ' तद्यइहरमणीयचरणा ' इत्यादिश्रुत्या ' वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततश्शेषेण विशिष्टदेशजातिकुलरूपायुश्श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यंते विष्वंचोविपरीतानश्यंती'त्यादिस्मृत्याच तथावगमात् । 'यावत्संपात ' मिति ' यत्किंचे ' तिच फलदानप्रवृत्तकर्मविशेषविषयं । अनादिजन्मप्रवाहसंचितानामभुक्तफलानामकृतप्रायश्चित्तानां च कर्मकोटीनां किंचित्कर्मफलानुभवमात्रेण क्षयासंभवात् । एवं च चरणश्रुतिरपि कर्मोपलक्षणार्था, कर्मणामेवाभिधायिका वा । ' पुण्यं कर्माचरति पापमाचरती ' ति व्यवहारात् । पृथङ्निर्देशस्य च प्रत्यक्षश्रुतिसिद्धं कर्म आचारानुमितश्रुतिसिद्धआचार इति द्विविधकर्मविषयत्वेन तदुपपत्तेः । न च ब्राह्मणजन्मादीनामपि कर्मफलतायामाचारवैयर्थ्यम् । आचारस्य कर्माधिकारहेतुत्वेनाचारसहितानामेव कर्मणां फलवत्त्वात् ' संध्याहीनोऽशुचिर्नित्यमनर्हस्सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवे'दित्यादिस्मरणात्, तस्मात् सानुशयाएवावरोहन्ति। अतो बहुजन्मपरम्परानुभाव्यकर्मकोटीनामात्मज्ञानमन्तरेण अनुभवमात्रेण कदा-

ऽपि न क्षयः । अवरोहन्तश्च आरोहणप्रकारेण प्रकारान्तरेणचावरोहन्ति । आरोहणंहि धूमरात्र्यपरपक्षदक्षिणायनपितृलोकाकाशचंद्रक्रमेण, अवरोहणंतु चंद्रस्थानादाकाशवायुधूमाभ्रमेघक्रमेणेति ॥

संग्रहकारिका ॥

यावत्सम्पातशब्दात्रिदिवमुपगतः कर्म भुक्त्वा समस्तं
संध्योपास्त्यादिरूपाद्व्रजति चरणतो विप्रजन्मादि भूयः ।
मैवं कर्माधिकारः खलु चरणफलं कर्मणैवान्यदाप्यं
तस्मादिष्टान्यकर्मा व्रजति फलमुखं कर्म भुक्त्वा धरित्रीं ॥

इति कृतात्ययाधिकरणम् ॥२॥

---

## अनिष्टादिकारिणामपि च श्रुतम् ॥१२॥

## संयमनेत्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥

## स्मरन्ति च ॥१४॥

## अपि सप्त ॥१५॥

## तत्रापि च तद्व्यापारादविरोधः ॥१६॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥१७॥

## न तृतीये तथोपलब्धेः ॥१८॥

## स्मर्यतेऽपि च लोके ॥१९॥

## दर्शनाच्च ॥२०॥

## तृतीयशब्दावरोधस्संशोकजस्य ॥२१॥

'यावत्, यत्किंचे'त्युक्तिवत् 'चंद्रमसमेवे'त्यत्र सर्वश्रुतिर्नसंकोचनीयेति प्रत्यवस्थानात्संगतिः । किमनिष्टादिकारिणो विहितमकुर्वाणाः निषिद्धं कुर्वाणाश्च यमयातनामनुभूय पश्चाच्चंद्रमसं गत्वा निवर्तंते, 'उत चंद्रमसं नगच्छंतीति संशये पूर्वपक्षः—

तेऽपि चंद्रमसंगच्छान्ति । 'ये वै केचास्माल्लोकात्प्रयंति चंद्रमसमेव ते सर्वे गच्छंती' त्यविशेषेण श्रवणात् । अन्यथा प्रथमाहुत्यभावे योषिदग्न्याहुतेः पंचमत्वाभावेन तेषां पंचमाहुत्यपेक्षदेहारंभाभावप्रसंगात् । एवं तर्हि सुकृतदुष्कृतकारिणोरविशिष्टैव गतिस्स्यादितिचेत्न । अनिष्टादिकारिणां यमयातनानुभवेन विशेषात् ' अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे ' सर्वे चैते वशं यांति यमस्य भगवन्किले ' त्यादिश्रुतिस्मृतिदर्शनात् पापकर्मणां यातनानुभवार्थं पाताळानामधोभागे रौरवादिसप्तमहानरकस्मरणाच्च । ननु रौरवादीन् गच्छतां पापकर्मणां कथं 'वैवस्वतं संगमनं जनानां यमं राजानं हविषादुवस्यते'ति श्रुता यमसदनप्राप्तिः, कथंच लोकांतरेषु नरकानुभवस्य ' पुनः पुनर्वशमापद्यते ' इति श्रुतं यमाधीनत्वमिति चेत् नायं विरोधः । पापकर्माणो यमसदनं गत्वा तन्नियोगादेव नरकान् प्राप्य यातनामनुभवंतीति कल्पनात् । तस्माद्यातनानुभवानंतरं चंद्रमसं गच्छंतीति तेषामपि चंद्रलोकप्राप्त्या कियदपि सुखं संभवतीति । एवं प्राप्ते सिद्धांतः—

न पापिनश्चंद्रमसं गच्छंति । विद्याकर्मविधुरत्वात् । यथाहि तेषां विद्याविधुरत्वात् 'तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसम्भवन्ती'ति विद्यावतः प्रकृत्याम्नाता देवयानगतिर्नसम्भवति , एवं ' अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ती 'त्यादिनेष्टादिकारिणः प्रकृत्याम्नातापितृयाणगतिरपि न संभवतीति न तेषां चन्द्रप्राप्तिरुपपद्यते । मार्गद्वयपरिभ्रष्टानां तृतीयस्थानिनां तु न पंचमाहुत्यपेक्षाऽस्ति । पञ्चाग्निविद्याप्रकरण एव 'वेत्थ यथा केनासौ लोको न संपूर्यत'इति प्रश्नप्रतिवचने 'अथैतयोः पथोर्नकतरेण च तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेते 'ति श्रवणात् । ये मार्गद्वयपरिभ्रष्टा स्तेऽत्रैव क्रिमिकीटादिरूपेण पुनःपुनर्जननमरणवन्तो भवंति । अतस्तृतीयस्थानिनां तेषामत्रैव परिवर्तनेन परलोकप्राप्त्यभावात् . परलोको न संपूर्यत इत्यर्थः ।

'जायस्व म्रियस्वे'ति क्रियासमभिहारे लोट् । मध्यमपुरुषश्च ! 'समुच्चयेऽन्यतरस्या'मिति जननमरणरूपानेकक्रियासमुच्चयस्यापि विवक्षणान्न द्विर्भावः । तत्र वार्तिकानुशिष्टद्विर्भावानुवृत्त्यानिष्टेः । न च पुण्यकर्मणामपि सर्वेषां पञ्चमाहुत्यपेक्षानियमः । द्रौपदीधृष्टद्युम्नादीनां तदभावात् । श्रुतावपि केषांचित् प्राणिनां पंचमाहुत्यनपेक्षा दृश्यते । तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवंत्यांडजं जीवजमुद्भिज्जमिति । अत्र उद्भिज्जस्य स्थावरस्य गुल्मलतादेर्नपंचमाहुत्यपेक्षाऽस्ति । ननु त्रीण्येवेत्यवधारणं कथम्, स्वेदजस्यापि यूकालिक्षादेस्सत्वादिति चेत् सत्यम् । ऊष्मप्रभवत्वायोनिजत्वाविशेषेण तेषामप्युद्भिज्जशब्देन संग्रहः कल्प्यः । अन्यथाऽवधारणप्रामाण्यानुपपत्तेः । तस्मात् पापकर्मणां न चन्द्रप्राप्तिरिति स्थितम् ॥

संग्रहकारिका ॥

ये वै केचेति शब्दाद्वपुरधिगतये पञ्चमाहुत्यपेक्षा-
सत्त्वादिष्टादिहीनोऽप्ययति हिमकरं यातनावाप्तिपूर्वम् ।
मैवं संपूर्त्यभावश्रवणनियमतस्संकुचेत्सर्वशब्दः
पाञ्चालीस्वेदजादिव्यभिचरणहता पञ्चमाहुत्यपेक्षा ॥

इति अनिष्टादिकार्यधिकरणम् ॥३॥

---

## तत्स्वाभाव्यापत्तिरुपपत्तेः ॥२२॥

इतःपरमापादपरिसमाप्तेरवरोहप्रकारविषया चिंता । 'इष्टादिकारिणः चन्द्रलोकानुभाव्यभोगान् भुक्त्वा सानुशयास्ततोऽवरोहंती'त्युक्तं । अवरोहप्रकारस्त्वित्थमाम्नायते— 'तस्मिन् यावत्सम्पातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तते यथैतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमोभवति धूमोभूत्वाऽभ्रं भवति अभ्रंभूत्वा मेघोभवति मेघोभूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायंते, 'यो योह्यन्नमत्ति यो रेतस्सिंचति तद्भूय एव भवती'ति । अत्र अवरोहतामाकाशादिभावश्श्रुतः । नत्वाकाशादिप्राप्तिमात्रम् । 'आकाशाद्वायु'मित्यत्र द्वितीयया वायुप्राप्तिमात्रं श्रुतमिति प्र-

तीतावपि 'वायुर्भूत्वे'ति परामर्शेन वायुभावापत्त्यवगमात् । तथैवाकाश-वाक्येऽपि अर्थग्रहणौचित्यात् । सा किमाकाशादिभावापत्तिः देवमनुष्यादि-भावापत्तिवत् तच्छरीरकत्वापत्तिः, उत तत्तत्सादृश्यापत्तिरिति 'वायुर्भूत्वे'त्यादिसामानाधिकरण्यस्य मुख्यत्वापवादकाभावसद्भावाभ्यां संशये पूर्वपक्षः– श्रद्धावस्थस्य सोमराजभाववत् आकाशादिभाव एव विवक्षितः । न च अवरोहतां मार्गे सुखदुःखानुभवाभावात् नाकाशादिभावेऽपपत्तिरिति वाच्यं । तदभावासिद्धेः । न हि वृक्षाग्रात्पततं इव स्वर्गादवरोहतः संमूर्छितकरणग्रामाः पतंति । स्वर्गेकर्मफलं भुक्त्वा अवरोहतां मार्गेपि कर्मफल-भोगोपपत्तेः 'स विज्ञानोभवति स विज्ञानमेवान्ववक्रामती'ति श्रुत्यन्तरे गतागतयोः ज्ञानवत्त्वप्रतिपादनेन मूर्छितत्वकल्पनानुपपत्तेश्चेति । एवंप्राप्ते सिद्धान्तः––

अवरोहतां आकाशादिशरीरकत्वं आकाशादिदेवताभावेन वा स्यात् ततः पृथग्भावेन वा । नाद्यः । सर्गाद्यकालमारभ्य आप्रळयमाकाशाद्याभिमानिदेवताः क्लृप्तास्संतीति ततोऽन्येषां तथाभावानुपपत्तेः । न द्वितीयः । अभिमानिदेवताःप्रति भोगाश्रयाणामन्यान् प्रति भोगाश्रयत्वायोगात् । युगपदनेकभोक्तृसमावेशे तेषां परस्परविरुद्धभोगार्थितायां शरीरोन्मथनप्रसङ्गात् । तस्मादाकाशादिसादृश्यापत्तिरेव आकाशादिभावापत्तिर्वाच्या । स्वर्गार्थकर्मक्षयानन्तरममृतमयदेहे विलीने सूक्ष्मदेहमात्रेण अवरोहतामाकाशादिभ्यः पृथगभिधानानर्हत्वं तत्सादृश्यम् । अतस्तेषां वासनामूलस्वाप्नज्ञानसदृशानभिव्यक्तज्ञानवत्त्वेऽपि पितृवीर्ये प्रविष्टानामिव भोगरहितानां संश्लेषमात्रमिति स्थितम् ॥    सङ्ग्रहकारिका ॥

प्रथमचरमाहुत्योर्देवत्वमानुषतादिवत्
गगनपवनादित्वं तत्तच्छरीरकतेति चेत् ।
अनुचितमिदं मध्ये भोगो हि नास्त्यवरोहतां
तदपृथगभिव्याहारार्हस्थितिस्तदितीष्यताम् ॥

इति तत्स्वाभाव्यापत्त्यधिकरणम् ॥४॥

## नातिचिरेण विशेषात् ॥२३॥

अवरोहंतः किमाकाशादिषु नातिचिरं तिष्ठंति उतानियम इति संशये नियमहेत्वभावादानियम इति पूर्वःपक्षः। ननु 'अतो वै खलु दुर्निष्प्रपतरामि'ति व्रीहियवादिषु अतिचिरमवस्थानमुक्तम्। दुर्निष्प्रपतरामिति छान्दसस्तशब्दलोपः। दुर्निष्प्रपतरं कृच्छ्रनिष्क्रमतरमित्यर्थः। एवं व्रीह्यादिषु विशेषोक्तेराकाशादिषु मेघांतेषु नातिचिरमवस्थानमिति गम्यत इति चेत्, मैवं। व्रीह्यादिषु चिरावस्थाननियमप्रतिपादनसामर्थ्यादाकाशादिभ्यः चिरावस्थाननियमएव हि व्यावर्तते नत्वनियतचिरावस्थानमपि। 'यथा वैखानसं पूर्वेऽहन्साम भवति षोडश्युत्तर' इति विशिष्यांगिरसां द्विरात्रस्योत्तरेऽहनि षोडशिग्रहानियमविधानसामर्थ्यात् 'उत्तरेऽहन्द्विरात्रस्य गृह्यत' इति सद्विरात्राणामुत्तरेऽहनि नियमविधायकेन सामान्यवचनेन प्राप्तः षोडशिग्रहनियम एव द्विरात्रांतरेभ्यो व्यावर्तते। न तु प्रकृत्यतिरात्रानियतप्राप्तः षोडशिग्रहोऽपि। तस्मादाकाशादिषु चिरमचिरं वावस्थानमित्यनियम इति। एवं प्राप्ते सिद्धान्तः—

दुर्निष्प्रपतरमित्यातिशायिनिकस्य तरप्रत्ययस्यास्ति तावत् प्रतियोग्याकांक्षा। तत्र च वाक्ये प्रतियोगी नोपात्तः। स्ववाक्ये प्रतियोग्यनुपादाने च बुद्धिस्थः प्रतियोगी भवति। बौद्धप्रतियोग्यपेक्षयामप्यातिशायिका इति वामनोक्तेः। एवञ्चाकाशादयः प्रागनुक्रान्ताबुद्धिसन्निधानात् तत्प्रतियोगिनोभवंति। तथा च व्रीह्यादिष्वाकाशाद्यपेक्षया चिरावस्थानोक्त्यावाकाशादिष्ववस्थानस्य तदपेक्षयाऽल्पकालत्वावश्यंभावात् आकाशादिषु नातिचिरमेव तिष्ठंति। व्रीह्यादिभ्यो दुर्निष्प्रपतरत्वोक्तिसामर्थ्यादाकाशादिभ्योऽपि दुर्निष्प्रपतत्वमात्रमस्तीति तेष्वपि चिरावस्थानमवगम्यते। अतो नातिचिरं तिष्ठंतीति विशेषितम्॥

संग्रहकारिका ॥

स्थितिरनियतकाला व्योममुख्येषु तेषां
न हि चिरमचिरं वेत्यामनामो विशेषम्॥

अचिरमिति विशेषो-गम्यते व्रीहितादे
रतिचिरमनुवृत्ते रन्नतो वर्णनेन ॥
• इति नातिचिराधिकरणं ॥९॥

---

**अन्याधिष्ठिते पूर्ववदभिलापात् ॥२४॥**
**अशुद्धमितिचेन्न शब्दात् ॥२५॥**
**रेतस्सिग्योगोऽथ ॥२६॥**
**योनेश्शरीरं ॥२७॥**

आकाशादिमेघांतेष्विव तदनन्तरपठितेषु व्रीह्यादिष्वपि संश्लेषमात्रमिति समर्थनात् संगतिः । व्रीह्यादिभावः किमवरोहतां व्रीह्यादिशरीरतापत्तिः उत तत्संश्लेषमात्र मिति जायंत इति श्रवणात् व्रीह्यादिभावनिमित्तकर्मानुपन्यासाच्च संशये जननश्रवणात् व्रीह्यादिभाव इति पूर्वपक्षः । 'न तु मेघोभूत्वाप्रवर्षती ' ति वृष्टिकर्तृत्वश्रवणेपि यथान मेघभावः तथाजायंत-इति श्रवणेपि न व्रीह्यादिभाव इति किंनस्यादिति चेत् उच्यते– प्रवर्षतीत्येतदाचारार्थक्विबंतं योजयितुं शक्यं । अस्ति च वृष्टिसंश्लिष्टेजीवे वर्षशब्दप्रयोगः । 'तस्या आहुतेर्वर्षं संभवती ' ति । जायंत इति तु व्रीह्याद्यात्मन्नाजनन मेवाभिधत्त इत्यस्ति वैषम्यं । न च स्वर्गादवरोहतां ' शरीरजैःकर्मदोषैर्यातिस्थावरतां नर ' इति स्मृतपापफलस्थावरजन्मानुपपत्तिः । श्वसूकरादिजन्मवत्तदुपपत्तेः । न च स्थावरजन्मनिमित्तकर्माश्रवणात् जायंत इत्येतदन्यथा नेयं । यत्र जन्माभिमतं तत्र तद्धेतुकर्मसंकीर्तननियमस्य रमणीयचरणादिवाक्ययोरवधारणादिति वाच्यं । उक्तनियमस्याप्रयोजकत्वात् । श्रुतजन्मोपपत्त्यर्थ मश्रुततद्धेतुकर्मकल्पनौचित्यात् । स्वर्गे फलदानप्रवृत्तस्य यागादिकर्मणोहिंसारूपपापमिश्रितस्यपापांशरूपशेषानुवृत्त्या-स्थावरजन्मोपपत्तेश्च । ' यावत्संपात ' मित्यस्य ' संपतन्त्यनेनस्वर्गं लोक ' मितिव्युत्पत्त्या यागादिपुण्यांशपरत्वात् । न च वैधाहिंसा पापमेव न

भवति । ‘ आहवनीये जुहोती ’ ति सामान्यशास्त्रस्य ‘पदे जुहोती ’ ति विहितपदहोमातिरिक्तहोमविषयत्ववत् ‘ न हिंस्यात्सर्वाभूतानीति सामान्य-निषेधस्य ‘ अग्नीषोमीयं पशुमालभेते ’ ति विशेषविहित वैधहिंसाऽव्यति-रिक्तहिंसाविषयत्वस्योत्सर्गापवादन्यायप्राप्तत्वादिति वाच्यं । विषयभेदेनात्र विरोधाभावात् । पशुहिंसाविधिर्हि हिंसायां क्रतूपकारकत्वं बोधयति । ‘ न हिंस्यादिति निषेधस्तु प्रत्यवायजनकत्वं । नचैकस्येष्टानिष्टोभयजनकत्वं न संभवति । येनाविरोधाय हिंसानिषेधशास्त्रं वैधहिंस्याऽव्यतिरिक्तविषयमिति व्यवस्था कल्प्येत । दृश्यते हि क्षीरपानस्य पुष्ट्यादिरूपेष्टहेतुत्वं मेहादिरू-पानिष्टहेतुत्वंच । अथोच्येत — रागप्राप्त हिंसाविषयो निषेधो न वैधहिं-सामास्कंदति । तत्र विधितः प्रवृत्तेरिति । नैतद्युक्तं । वैधहिंसायामपि रा-गत एव प्रवृत्तेः । न हि विधिसहस्रमपीष्टसाधनताबोधजननद्वारा रागमनु-त्पाद्य पुरुषं प्रवर्तयितुमीष्टे । जैमिनिना च तृतीयाध्याये- सौमिकीमहा-वेदिः केवलप्रधानार्था ‘ इयतिशक्ष्यामह ’ इति तद्वाक्यशेषे एतावति भू-भागे कर्तुं शक्ष्यामहइत्यर्थके तुमुन्प्रत्ययार्थचिकीर्षासंयोगात् । नत्वंगप्रधा-नार्था । अंगानां फलसाधनत्वाभावेनाचिकीर्षितत्वादिति पूर्वपक्षं कृत्वा ‘ तद्युक्तेतु फलश्रुतिस्तस्मात्सर्वचिकीर्षास्या ’ दिति सूत्रेण सकलांगयुक्ते फलश्रुतेस्सर्वत्रप्रधानेऽङ्गकलापे च चिकीर्षास्तीत्यंगानामपि चिकीर्षितत्वा-विशेषात् अंगप्रधानार्था महावेदिरित्ति सिद्धांतयताऽङ्गेष्वपि रागत एव प्र-वृत्तिः स्थापिता । तस्मात् पापरूपहिंसामिश्रितयागादिकर्मविशेषतस्स्थावर-जन्मसंभवतीति एवंमच सांख्यानां मत मिति चेन्नैवं । वैधसंज्ञपनस्य पशुस्वर्गप्राप्ति हेतुतया हिंसात्वाभावस्य शब्दतएव प्रतिपन्नत्वात् । श्रूयते हि- ‘ पशु प्रकृत्य हिरण्यशरीरऊर्ध्वं स्वर्गं लोकमेती ’ ति, मंत्रवर्णश्च ‘न वा उएतन्म्रियसे नरिष्यसि देवानिदेषि पथिभिस्सुगेभिः । यत्र यं तिसुकृतोनापि दुष्कृतःतत्रत्वादेवस्सवितादधात्वि ’ ति । नरिष्यसि- न हिं-स्यसइत्यर्थः । चिकित्सकं च तादात्विकव्रणदाहच्छेदाद्यल्पदुःखकारिण-मपि रक्षकमेव वदंति । एवं ‘स्वधिते मैनं हिंसी ’ रिति यूपच्छेदनस्य

तद्धिंसात्वाभावश्रवणं 'घ्नन्ति वा एतं पशुं यत्संज्ञपयन्ती'त्येतदपि वैधपशुसंज्ञपनं हिंसात्वारोपेण दोषतामापादयत् तस्य वस्तुतो हिंसात्वाभावमवगमयति। अन्यथा प्राणवियोजनार्थव्यापारवाचिसंज्ञपनशब्दपर्यायत्वे 'यत्संज्ञपयन्ती'त्यनेनैव दोषोद्घाटनस्य सिद्धत्वात् घ्नंतिवेत्यनेन दोषरूपं न वक्तव्यं स्यात् । यद्यपि 'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्य' इति श्रुत्यन्तरे हिंसानिषेधे वैधसंज्ञपनपर्युदाससामर्थ्यात् तस्य हिंसारूपत्वं प्रतीयते । गौतमस्मृतौ 'नदोषोहिंसायामाहव' इति आहवाभिमुखहननस्य हंतव्यवीरस्वर्गप्रापकस्यापि हिंसारूपत्व मुच्यते । मरणोद्देश्यकमरणानुकूलव्यापारोहिंसेति प्रसिद्धलक्षणानुसारेणापि तस्य हिंसात्वमायाति । न च तत्र उदर्कमहाफलापर्यवसायित्वमपि लक्षणे विशेषणं । गौरवात् । व्रणदाहच्छेदयोः दाहच्छेदरूपत्वेपि व्रणिरक्षकत्ववत् वैधपशुमारणस्य हिंसात्वेपि अग्रिममहाफलप्रापणेन तद्रक्षकत्वोपपत्तेः । तथापि 'नवा उवेत'दिति मन्त्रार्थवाददृष्ट्या यज्ञार्थस्य परप्राणवियोजनस्याहिंसात्वमपि प्रतीयत इत्येतावदवलंब्य प्रौढ्यर्थं परिहारो भाष्ये दर्शितः । वस्तुतस्तु नहिंस्यादिति वाक्ये पुरुषार्थैव हिंसा धातुना अनूद्यते । न क्रत्वर्थापि । कर्तुराख्यातवाच्यत्वपक्षे तद्वाच्यसंख्याद्याक्षेप्यत्वपक्षे च तस्याः कर्तृत्वरूपपुरुषशेषत्वप्रतीतेः । ततश्च धातुनाऽनूदितायाः पुरुषार्थहिंसाया एव निषेध इति क्रत्वर्थसंज्ञपनस्य हिंसात्वेऽपि न निषेधस्पर्शः । पुरुषस्येव क्रतोस्तस्मिन्वाक्ये अनुपादानात् अहिंसावाक्यस्य अनारभ्याधीतत्वेन क्रतोः प्राकरणिकविपरिवृत्त्यभावाच्चेति भाष्यकाराशयस्थो मुख्यपरिहारोऽनुसंधेयः । तस्माद्यागस्य पापमिश्रत्वाभावात् श्वसूकरादिजन्मनीव पापान्तरसङ्कीर्तनाभावाच्च न पापफलतया इष्टादिकारिणां व्रीह्यादिशरीरकं जन्मेत्येतदुपपद्यते । किं तु तेषामाकाशादिष्विव व्रीह्यादिष्वपि संश्लेषमात्रम् । कथं तर्हि जायन्त इत्युक्तिः ? 'योयोह्यन्नमत्ति यो रेतस्सिञ्चति तद्भूयएव भवती'ति पितृभावोक्तिवदिति ब्रूमः । न हि पूर्वसिद्धपितृभावेन अननं कथमपि संभवति । अतस्तत्र अद्यमानान्नद्वारा पित्रनुप्रवेशेन तत्संश्लेषमात्रं पितृभावरूपतया व्यपदिश्यतइति वक्तव्यम् । इयमेव

व्रीह्यादिभावोक्तिरपीति युक्तं । अतो योनिप्राप्त्यनन्तरमेव ब्राह्मणादिशरीर-प्राप्तिः । ततः प्रागाकाशादिपित्रन्तेषु संश्लेषमात्रमिति सिद्धम् ॥

सङ्ग्रहकारिकाः ॥

वृष्टेः पश्चादनुशयवतां व्रीहिमाषादिभावः
तत्तद्रूपैर्भवतु जननं कर्मणोकीर्तनेऽपि ।
हिंसायोगात्क्रतुपरिषदां पापमिश्रत्वभाजां
पापांशैस्स्यात् स्वरनुभवतोऽनन्तरं स्थावरत्वम् ॥१॥

नात्रोत्सर्गापवदननयश्शास्त्रयुग्मानुसारा-
दिष्टानिष्टोभयविधफलं युज्यते सा हि हिंसा ।
क्षीरं पित्तं हरति कुरुते मेहमित्यादिरूपा
दायुर्वेदप्रथितवचनात्तस्य किन्नो तथात्वम् ॥२॥

वैधीरागाधीनहिंसानिषेधस्वीकारेऽपि स्यान्निषिद्धेव हिंसा ।
तत्तत्साध्येष्वन्तरेणैव रागं कोवा कर्म क्लेशसाध्यं विदध्यात् ॥३॥

मैवं हिंसैव नैषा भवति मखपशोस्स्वर्गतिप्रापकत्वात्
क्षुद्रं दुःखं प्रभूतं फलमपि च यतो रक्षणं तन्नहिंसा ।
दृष्टं ह्येतद्व्रणादेरुपशमनविधौ मंत्रवर्णाच्च लब्धं
तस्माद्व्योमानिलादिष्विव सुकृतकृतान्तेषु संश्लेषमात्रम् ॥४॥

इति अन्याधिष्ठिताधिकरणम् ॥१॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजि-
द्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे
नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे तृतीयस्याध्यायस्य
प्रथमः पादः ॥

---

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

## ॥ तृतीयस्याध्यायस्य द्वितीयःपादः ॥



एवं वैराग्यपादेन संसारस्य क्षयिष्णुत्वसातिशयत्वादिना इह परत्र तृतीयस्थाने च परिभ्रमणेन च दुःखरूपता निरूपिता। अवरोहणे च आकाशादिदेवताभावेन ततः पार्थक्येन वा आकाशादिशरीरकत्वमस्तिचेत् तेन सुखानुभवोऽस्तीति स्यात्। तद्वारणाय मूर्च्छितप्रायाणान्तेषां संश्लेषमात्रमिति निरूपितम्। व्रीह्याद्योषधिभावेन जन्मास्तिचेत् तत्तदभिमानिदेवतारूपत्वप्राप्त्या सुखानुभवोऽस्तीति स्यात्। वनस्पत्यादीन् प्रकृत्य हि पुराणेषु पठ्यते 'पत्रपुष्पफलैर्नित्यं छाययाचैव शाखिनः। परेषामुपयुज्यन्ते तद्धि तेषाम्महत्तपः॥ तेषां दया सदा कार्या भक्तिः कार्या तथैव च। यस्त्वेषां भक्तिमान्नित्यं तस्यास्य किल देवताः॥ सर्वान्कामान्प्रयच्छन्ति प्रसीदन्ति च सर्वदा॥ वानस्पत्ये तथा लोके सर्वेऽप्येते हि शाखिनः। शरीरवत्यस्तिष्ठंति देवता नात्र संशयः॥ द्रुमगोपायितारञ्च परलोकमुपागतम्। हृद्येन गीतवाद्येन रमयन्त उपासत' इत्यादि। अतस्तत्प्रयुक्तसुखांशवारणाय ओषधिवनस्पतिजन्मापि निवारितम्। एवं संसारस्य दुःखभूयिष्ठत्वे प्रतिपादिते परब्रह्मप्रेप्सोत्पादनाय तस्य महिमा निरूपणीयः। अन्यथा सुखलवयुक्ते संसारे वैराग्यं दृढीकृतं नस्यात्। अतस्तस्य स्वप्नाश्चर्यप्रदर्शयितृत्वादिसकलकर्मफलप्रदत्वान्तो महिमाऽनेनोभयलिंगपादेन निरूप्यते—

**संध्ये सृष्टिराह हि ॥१॥**

**निर्मातारञ्चैके पुत्रादयश्च ॥२॥**

**मायामात्रन्तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥३॥**

**पराभिध्यानात्तु तिरोहितं ततोह्यस्य बंधविपर्ययौ॥४॥**

**देहयोगाद्वा सोऽपि॥५॥**

**सूचकश्चहि श्रुतेराचक्षतेच तद्विदः॥६॥**

जागरावस्थावृत्तांतमधिकृत्य प्रथमपादः प्रवृत्तः । इहाधिकरणे स्वप्नावस्थावृत्तांतो विचार्यते । ' न तत्र रथानरथयोगा नपंथानो भवंति अथ रथान् रथयोगान् पथस्सृजते न तत्रानन्दा मुदः प्रमुदोभवन्ति अथानन्दान्मुदः प्रमुदस्सृजते न तत्र वेशन्ताः पुष्करिण्यस्स्रवन्त्योभवंति अथ वेशन्तान् पुष्करिण्यस्स्रवन्त्यस्सृजते सहिकर्ते'ति । तत्र संशयः— किं जीवकर्तृकेयं सृष्टिः, उत ईश्वरकर्तृकेति । जीवकर्तृकेति तावत्प्राप्तं । सहिकर्तेति श्रवणात् । तत्र तत्पदस्य 'पाप्मन आनंदांश्च पश्यती'ति प्रकृतस्वप्नद्रष्टृजीवपरामर्शित्वात् । न च तस्य स्वप्नप्रपञ्चस्रष्टृत्वासम्भवः, तस्य प्रजापतिवाक्योदितसत्यसंकल्पत्वादिमत्वात् जागरदशायां तिरोहितस्यापि तस्य स्वप्ने मुक्ताविवाविर्भावोपपत्तेः । न चैतदयुक्तं पूर्वं पश्चाद्वाऽसतां रथानां रथहयानां रथगमनोचितानां राजपथानांच स्वप्नकालमात्रे भवनवत् सत्यसङ्कल्पत्वस्यापि तत्कालमात्रएवाविर्भावोपपत्तेः । न चैवं सति प्रबुद्धस्य रथादीनद्राक्षमितिवत् रथादीनस्राक्षमित्यपि परामर्शस्स्यादिति वाच्यम् । तदंशे परामर्शादर्शनेन स्वप्नार्थस्रष्टृत्वानुभवस्य शैशवदशानुभवस्येव संस्कारानाधायकत्वकल्पनात् । न च जीवस्य स्वप्नार्थस्रष्टृत्वे शुभसूचकानेव सृष्ट्वा सपश्येत् न त्वशुभसूचकानिति वाच्यम् । तदानीं स्वप्नत्वाशुभसूचकत्वाननुसंधानेन तत्सृष्ट्युपपत्तेः । न च तथापि भयहेतुस्वाग्नचोरव्याघ्राद्यनिष्टस्रष्टृत्वं न स्यात्, स्वप्नएव तदनिष्टत्वानुसंधानप्रयुक्तभयकंपधावनादिदर्शनेन तदननुसंधानकल्पनायोगादिति वाच्यम् । सृष्टिदशायामननुसंहितस्य अनिष्टत्वस्य सृष्ट्यनन्तरमनुसन्धानमितिकल्पनोपपत्तेः । स्वप्ने चिरातीतपितृपितामहादीन् पश्यतां तदानीं तदतीतत्वमननुसंदधानानां स्वप्नएव पुनः क्षणांतरे कथमेते चिरातीतादृश्यन्त इति तदनुसंधानदर्शनात् । 'सहिकर्ते'ति स्वप्नसृष्टेर्जीवकर्तृत्वश्रुत्यनुसारेणैव तावत्कल्पनौचित्यात् । किंच कठवल्लीषु 'य एषसुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाण'इति जीवः कामानां स्रष्टाम्नायते । कामास्तत्र पुत्रादयः। पूर्वत्र 'सर्वान् कामान् छन्दतः प्रार्थयस्व । शतायुषः पुत्रपौत्रान् वृणीष्वे'ति पुत्रादीनां

कामशब्देन परामृष्टत्वात् । अतः पुत्रादिसंबंधलिंगात् कठवल्लीषु जीवः स्वप्नसृष्टिकर्ता प्रतिपाद्यतइति निश्चयेन तदैकार्थ्यादिहापि सएवतत्कर्ता प्रतिपाद्यत इति युक्तम् । तस्मात् जीवकर्तृकैव स्वप्नसृष्टिरिति । एवं प्राप्ते सिद्धान्तः-- सर्वेश्वर एव तत्कर्ता । अत्याश्चर्यरूपा हि स्वप्नसृष्टिः नित्याविर्भूतसत्यसङ्कल्पत्वादिगुणात्ततएवोपपद्यते । जीवस्य सत्यसङ्कल्पत्वादिसत्वेऽपि तस्य सर्वेश्वरसङ्कल्पादनादिकर्मपरंपरारूपाविद्यया देहाचित्प्रकृतियोगाभ्याञ्च तिरोहितत्वात् । तिरोधायकसत्वेच स्वप्नदशायामप्यभिव्यक्त्यसम्भवात् परमेश्वरस्य स्वप्नसृष्टिकर्तृत्वएव च रथादिसृष्ट्युक्त्यनन्तरं स हि कर्तेति हेतूपन्यासस्सङ्गच्छते । स्वप्नदृग्यस्मिन् देशे रथं पश्यति तदानीं तत्र स्थितोऽन्यस्तं न पश्यति, स्वप्नदृगपि प्रबोधानन्तरं तत्र गतस्तन्नपश्यति, न वा तस्यान्यत्र नयनचिह्नानि च पश्यति, कथमेतादृशाश्चर्यसहस्रशालिनी स्वप्नसृष्टिर्भवतीत्याकांक्षायां हि स हि कर्तेति तत्र हेतुरुच्यते । सकलप्रपञ्चनाटकसूत्रधारः सर्वेश्वरः खलु कर्ता किं किमाश्चर्यं स्रष्टुं न शक्नुयादिति तदभिप्रायः । 'य एष सुप्ते' ष्विति मंत्रोऽपि सर्वेश्वरविषयः । तदनन्तरं 'तदेव शुक्रन्तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन्लोकाःश्रितास्सर्वे तदु नात्येति कश्चने 'त्याम्नानात् । अतः 'कामं काम'मिति णमुलन्तं सङ्कल्प्यसङ्कल्प्येत्येवमर्थं योज्यं । एवं परमेश्वरकर्तृकत्वएव च स्वप्ने तैलपानतैलावगाहनमांसभक्षणमध्वशनैकपुण्डरीकधारणादीनामशुभसूचकानां तदानीन्तनानिष्टकारकाणां चोरव्याघ्रादीनां च सृष्टिरक्लेशेन उपपादिता भवति । सर्वेश्वरः तत्तत्कर्मानुसारेण जागरइव स्वप्नेऽपि पदार्थविशेषान् सृष्ट्वा तत्प्रयुक्तसुखदुःखान्यनुभावयतीत्युपपत्तिसत्वात् । अत्रेदं विचारणीयं-- यत्र देशे स्वप्नदृक् रथादीन् पश्यति तत्र स्वयं गत्वा पश्यति उत अपवरके शयानएवेति यांश्च पश्यति कथं देशकालवस्तुविपर्यासेन दृश्यन्त इति च देशान्तरङ्गत्वेति श्रुतिरेवाह-- 'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादवरश्चरित्वा । स ईहते अमृतो यत्र कामं हिरण्मयः पुरुष एकहंस ' इति हि श्रूयते । हिरण्मयःप्रकाशरूपत्वादुज्वलः । एकएव हंति इह परत्र च गच्छतीति एकहंसः । ननु काश्यां रात्रावर्गळिते अपवरके शयितः

स्वप्ने स्वशरीरेणैव उत्तरांदिशं प्रस्थितः मुहूर्तमात्रेण काञ्चीं प्राप्य तत्र वस्तुतो रथादिमत्सु देशेषु रथादीनपश्यन्तं अन्यत्र तान्पश्यन्तं तस्यामेव बहुतिथं कालमतिवाहयन्तमात्मानमनुभवन्नेव यथापूर्वं अर्गळितापवरकशयितेन स्वशरीरेण शयनानन्तरं मुहूर्तमात्रेण प्रतिबुध्यत इत्यनुभवसिद्धम् । कथमेतत्सर्वं सङ्घटनीयमितिचेत् उच्यते— परमेश्वरेण स्वप्ने सृष्टं यथाऽनुभवं पूर्वशरीरसदृशं विसदृशं वा शरीरं पूर्वशरीरविलक्षणमिति न तन्निर्गमने कवाटोद्घाटनापेक्षा, नापि योजनशतप्राप्यदेशप्राप्तौ बहुकालापेक्षा, तदानीमीश्वरसृष्टैः स्वप्नदृगेकानुभाव्यैरादित्यगताद्युपाधिविशेषैरवच्छिन्नानां दिक्कालानां तत्तत्स्वप्नदृगपेक्षया दिगंतरत्वदिवसत्वादिव्यवस्था, मार्गगतानां प्राप्यदेशगतानाञ्च जाग्रद्दशादृश्यवस्तूनामुपलंभाभावः, स्वाप्नचक्षुरादीनां स्वाप्नार्थमात्र ग्रहणयोग्यत्वात् गजादिमत्सु देशेषु रथाद्युपलंभः, स्वप्नजागरार्थानां जलालोकपवनन्यायेन मिथःप्रतिघातकत्वाभावात् मुहूर्ताभ्यन्तरे गणरात्रातिवाहं देवादिकालोपाधिभ्यो मनुष्यादिकालोपाधीनामिव जागरकालोपाधिभ्यः स्वप्नकालोपाधीनां सूक्ष्मत्वतारतम्यादीति सर्वमेतत् स्वप्नाश्चर्यप्रदर्शयितु स्सर्वेश्वरस्य महिम्ना उपपद्यते ।

संग्रहकारिके ।

कर्त्तारस्स्युः प्राणिनस्स्वाप्नसृष्टेर्जीवात्मानस्तत्र कर्तासहीति ।
प्राजापत्यात्सत्यसंकल्पतैषां वाक्यात्सिद्धेत्यत्र नायुक्तताऽस्ति ।
व्यक्तेदानीं नयतसा यदनभिमतसन्दृष्टिकोदर्कदानां
स्वप्नेर्थानांच सृष्टिस्तदिह न घटते कर्तृता प्राणभाजाम् ॥
तस्मादीशोत्र कर्ता श्रुतिषुच पठितस्सोयमाकालिकार्थान्
एतानाश्चर्यभूतान् सृजति बहिरितस्स्वप्नदृङ्मात्रदृश्यान् ॥

इति संध्याधिकरणम् ॥ १ ॥

---

## तदभावो नाडीषु तच्छ्रुतेरात्मनिच ॥ ७ ॥

## अतः प्रबोधोऽस्मात् ॥ ८ ॥

स्वप्नानंतरं सुषुप्तः परीक्ष्यते। इदमाम्नायते 'अथ यत्रैतत्सुप्तस्समस्तस्संप्रसन्नस्स्वप्नं न विजानाति आसु तदा नाडीषु सुप्तो भवती'ति। तथा 'अथ यदा सुषुप्तो भवति यदा न कस्य चन वेद हितानामनाड्यो द्वासप्ततिस्सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीततिशेत'इति। तथा 'यत्रैतत्पुरुषस्स्वपितिनाम सतासोम्य तदा संपन्नो भवति सति संपद्य न विदु'रिति। एवं नाड्यः पुरीतद्धृदयाकाशरूपं ब्रह्मचेति त्रिषु सुषुप्तिस्थानत्वेन श्रूयमाणेषु किमेषां विकल्पस्समुच्चयोवेति एकप्रयोजनवत्वप्रयोजनभेदाभ्यां संशये पूर्वपक्षः। प्रत्येकं सप्तमीभिः नैरपेक्ष्यावगमात् अणोर्जीवस्य युगपत् सुषुप्त्ययोगाच्च विकल्पः। यद्यपि 'सति संपद्य न विदु'रित्यत्र सत्पदेन केवलं ब्रह्मोक्तं, तथाऽपि अपरिच्छिन्नब्रह्मसंबन्धस्य नित्यमेव सत्वात् विशिष्य सुषुप्तिदशायां तत्संपत्त्युक्त्ययोगेन किंचित्प्रदेशावच्छिन्नब्रह्मसंपत्तिविषयत्वकल्पनावश्यंभावेसति 'यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषस्तदैषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेत'इति श्रुत्यन्तरदृष्टं हार्दाकाशरूपमेव ब्रह्माधिकरणं पर्यवस्यति। तस्मात्त्रयाणां विकल्पइति। सिद्धान्तस्तु–प्रासादखट्वापर्यङ्कन्यायेन तेषां प्रयोजनभेदेन समुच्चयसंभवात् 'सत आगम्य न विदुरि'ति सुषुप्तजीवानां ब्रह्मणस्सकाशादेव प्रबोधस्य नित्यवदाम्नानाच्च नाष्टदोषदुष्टो विकल्पो युक्तः। व्रीहियवयोस्त्वगत्या विकल्पः। यथाहुः– 'एवमेषोऽष्टदोषोऽपि यद्व्रीहियववाक्ययोः। विकल्प आश्रितस्तत्र गतिरन्या न विद्यत' इति। प्राप्तप्रामाण्यपरित्यागः, अप्राप्तप्रामाण्यस्वीकारः, परित्यक्तप्रामाण्यस्वीकारः स्वीकृताप्रामाण्यपरित्यागश्चेति व्रीहिशास्त्रे यवशास्त्रे च प्रत्येकं चत्वारो दोषा इत्येवं विकल्पेऽष्टौ दोषाः प्रसिद्धाः। एवमष्टदोषप्रसिद्धिः व्रीहियवरूपप्रसिद्धोदाहरणे। इह नाडीपुरीतद्ब्रह्मणां त्रयाणां विकल्पइति पूर्वपक्षे तु एकैकत्र चत्वारो दोषा इति द्वादशदोषाः प्रसज्यन्ते। तथा हि–एकस्यां सुषुप्तौ नाड्यां शयने पुरीतद्वाक्ये ब्रह्मवाक्ये च प्रत्येकं प्राथमिकौ द्वौ द्वौ दोषौ। सुषुप्त्यंतरे पुरीततिशयने नाडीवाक्ये प्राथमिकौ द्वौ दोषौ। पुरीतद्वाक्ये तु उपरितनमपि

दोषद्वयमिति चत्वारो दोषाः । पुनस्सुषुप्त्यन्तरे ब्रह्मणि शयने ब्रह्मवाक्ये ऽपि उपरितनं दोषद्वयं सुषुप्त्यन्तरे नाड्यां शयने नाडीवाक्येऽपि उपरितनं दोषद्वयमिति स्वापचतुष्टयेन द्वादशदोषाः प्रादुष्युः । व्रीहियवशास्त्रयोस्तु प्रयोगत्रयेण अष्टौ दोषा इति विशेषः । ननु अनेनाधिकरणेन कः परब्रह्मणो महिमविशेषस्सिध्यति सुषुप्तजीवविश्रांतिस्थानत्वगुणनियमइति चेत् मुक्तिसंसारयोरविशेषेण ब्रह्माश्रितस्य जीवस्य नाड्यां पुरीततिवा कदाचित्सुषुप्तिरिति पूर्वपक्षेऽपि तत्तदवच्छिन्नब्रह्मणस्तद्विश्रांतिस्थानत्वानपायात् ॥ उच्यते— दहरविद्यायां सुषुप्तौ दहराकाशरूपं ब्रह्म प्राप्तस्य सकलपाप्मास्पर्शश्श्रूयते 'सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्माह्येष ब्रह्मलोक' इति । एवं ब्रह्मणस्सुषुप्तजीवगतसकलपापास्पर्शहेतुत्वरूपो महामहिमा नियतस्सिध्यति 'तन्नकश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवती'ति।नाडीवाक्यगततेजश्शब्दोऽपि नाडीद्वारा प्राप्यं ब्रह्माचक्षीतेति ततोऽपि तस्य महिमा नियतस्सिध्यति। अन्यथा नाडीवाक्ये शेषो नाडीस्तुतिपर एव स्यादिति सुषुप्तजीवसकलपापास्पर्शहेतुत्वस्य नाडीसाधारण्यापत्त्या समहिमा परब्रह्मासाधारणो न सिध्येत् ॥

संग्रहकारिके ॥

नाड्यादीनि सुषुप्तावनपेक्षत्वाद्विकल्प्येरन् ।
जीवस्याणोस्त्रिषु युगपदवस्थितेरयोगाच्च ॥
प्रासादखट्वापर्यङ्कन्यायात्तेषां समुच्चयः ।
तत्सम्भवे हि स्वीकार्यो न विकल्पोऽष्टदोषभाक् ॥

इति तदभावाधिकरणम् ॥२॥

---

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥१॥

सुप्तस्य प्रबोधश्चिन्त्यत इति संगतिः । किंसुप्तादन्यः प्रबोधउत्तिष्ठति उत सएवेति सुषुप्तौ सकलोपाधिनिर्मोक्षास्तित्वनास्तित्वाभ्यां संशये पूर्वपक्षः । अन्यउत्तिष्ठति । सुषुप्तस्य ' तंनकश्चनपाप्मा स्पृशती ' ति स-

र्वपापास्पर्शोक्त्या सर्वोपाधिविनिर्मोक्षावगमात् बृहदारण्यके सुषुप्तिं प्रकृत्य 'अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णोहितदासर्वान् शोकान् हृदयस्य भवती'ति तस्य पापोच्चीर्णत्वतन्मूलकसर्वदुःखोत्तरणयोः श्रवणात् ।तत्रैव 'सयथा कुमारोवा महाराजोवा महाब्राह्मणोवातिघ्नीमानंदस्य गत्वाशर्यातैव मेवैष एतच्छेत' इति'तद्वा अस्यैतदतिच्छंदा अपहतपाप्माभयं रूपं तद्यथा प्रियया संपरिष्वक्तो नबाह्यं किंचनवेद नांतरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो नबाह्यं किं चन वेदनांतरमि'ति सुषुप्तौ मुक्ताविव ब्रह्मसंपत्त्या निरतिशयानंदश्रवणाच्च । अतिघ्नी अतिशयेनदुःखहन्त्रीमानंदस्य दशांप्राप्येत्यर्थः । तस्मादुपायसहस्रेणापि मुक्तस्येव ब्रह्मप्राप्तस्य पुनरावृत्तिरुपपादयितुमशक्येत्यन्य एवोत्तिष्ठतीत्यभ्युपगन्तव्यम् । यद्येवंसति कर्मानुस्मृतिशब्दविधिविरोधस्स्यादित्यपरितोषस्तदा सुषुप्तस्य सत्संपत्तिरेव त्यक्तव्येति । एवं प्राप्ते ब्रूमः । सुषुप्तएवोत्तिष्ठति। नान्यः। कर्मानुस्मृतिशब्दविधिभ्यः । सुप्तेः पूर्वं पुण्यपापरूपं तत्त्वज्ञानात्प्राक्तनैव हि भोक्तव्यं । योऽहं सुप्तः सोऽहं प्रतिबुद्धोऽस्मीति प्रत्यभिज्ञा च दृश्यते । 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतंगो वा दंशो वा मशको वा यद्यद्भवंति तदा भवंती'ति सुषुप्तिप्राग्रूपस्यैवानुवृत्तिराम्नायते । एते विरुध्येरन् । सुषुप्तस्य मुक्तत्वे मोक्षार्थाश्च विधयोऽनर्थकास्स्युः। कुंभकर्णवत् सुषुप्त्यनुवृत्तिरेव प्रार्थनीयास्यात्। का तर्हि सत्संपत्त्यानन्दानुभववचनयोर्गतिः । नेयमात्यंतिकी सत्सम्पत्तिः । देहेंद्रियकर्माविद्यातिरोधानसत्त्वात् । नाप्यानन्दानुभवोऽस्ति । इंद्रियाणामुपरतत्वेन विषयभोगाभावात् तिरोधायकसत्त्वेन ब्रह्मानन्दानुभवाभावाच्च । अत एव सुषुप्तं प्रकृत्य श्रुतिः— 'नाहखल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामी'ति । किंतु जागरे करणकळेबरव्यापारजटिले श्रान्तस्य विश्रमस्थानं हृदयाकाशरूपं परंब्रह्मप्राप्तस्य सर्वविधशरीरेन्द्रियव्यापारोपरत्या श्रांत्यपनयोभवतीत्येतावान्विशेषः । 'स यथा शकुनिः सूत्रेण प्रबद्धो दिशंदिशं पतित्वाऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेवेदं मनोदिशंदिशं

पतित्वाऽन्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनं हि सोम्य मन' इति सौषुप्तिकसत्सम्पत्तिवाक्यशेषदर्शनात् । अत्र मनःप्राणशब्दौ जीवब्रह्म परौ ।पाप्मा संस्पर्शोक्तिस्तु दिव्यक्षेत्रानुप्रवेशे तं गृहीतवतः पिशाचस्येव सुषुप्तौ हृदयाकाशरूपब्रह्मानुप्रवेशे पाप्माधिकरणस्यान्तःकरणस्यान्तः बहिरेवावस्थानमित्येतदभिप्राया योज्या । तस्मात् सुषुप्तएवोत्तिष्ठति । एवंसत्येव'अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विंदन्त्यनृतेन हि प्रत्यूढा' इति श्रुतिरपि सङ्गच्छते ॥

संग्रहकारिका ॥

मुक्तिवदेव सुषुप्तौ ब्रह्माप्तिस्तस्य न पुनरुत्थानम् ।
तस्मादन्योत्थितिरिति तुच्छमनुस्मरणकर्मविधिशब्दात् ॥
इति कर्मानुस्मृतिशब्दविध्यधिकरणम् ॥३॥

---

## मुग्धेऽर्धसम्पत्तिः परिशेषात् ॥१०॥

जीवावस्थाप्रसङ्गादिदमधिकरणं । मूर्च्छा जागरस्वप्नसुषुप्तिमरणरूपप्रसिद्धावस्थास्वन्तर्भूता उत तद्भिन्नेति भेदकसद्भावासद्भावाभ्यां संशये यद्यप्येषा विशेषविज्ञानाभावान्नजागरः स्वप्नो वा । नापि सुषुप्तिः प्रसन्नवदनत्वश्वासभरितत्वयोरभावात् ।तथाऽपि सर्वेषामिंद्रियाणां प्राणवायोश्च व्यापारादर्शनात् मरणमेवैषेति पूर्वःपक्षः । कराळवदनत्वाद्याकारवैरूप्यात् सूक्ष्मश्वाससञ्चारवत्वान्नमरणं, किं तुवृक्षाग्रपतनादिनिमित्तसौक्ष्म्यापन्नप्राणयुक्तापि चिकित्साद्यभावे मरणपर्यन्तामरणायार्धसम्पत्तिरूपा ततोपि भिन्नेति सिद्धांतः।

सङ्ग्रहकारिका ॥

नांतर्भूता जागरादित्रये चे दज्ञानाद्यैस्तर्हिमूर्च्छामृतिस्स्यात् ।
नैतत्सारं किंचनश्वासदृष्टेर्मर्तुं प्रक्रम्यैव मध्येस्थितस्स्यात् ॥
इति मुग्धाधिकरणम् ॥४॥

---

## नस्थानतोपि परस्योभयलिङ्गं सर्वत्रहि ॥ ११ ॥

भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥१२॥

अपिचैवमेके ॥१३॥

अरूपवदेव हि तत्प्रधानत्वात् ॥१४॥

प्रकाशवच्चावैयर्थ्यात् ॥१५॥

आह च तन्मात्रं ॥१६॥

दर्शयतिचाथो अपि स्मर्यते ॥१७॥

अतएवचोपमा सूर्यकादिवत् ॥१८॥

अंबुवदग्रहणात्तु न तथात्वं ॥१९॥

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवं दर्शनाच्च ॥२०॥

प्रकृतैतावत्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ।२१।

तदव्यक्तमाह हि ॥२२॥

अपि संराधने प्रत्यक्षानुमानाभ्यां ॥२३॥

प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ।२४।

अतोनंतेन तथा हि लिंगं ॥२५॥

पूर्वपादे जीवस्य वैराग्यहेतु गतागतभ्रमणरूप जागरवृत्तांत प्रतिपादनेनास्मिन्पादे परब्रह्मणो विचित्रस्वप्नार्थ स्रष्टृत्व सुषुप्तविश्रांतिस्थानस्वरूपमाहिमप्रतिपादनेन च मूर्च्छायाः मरणार्धसंपत्तिरूपत्व प्रतिपादनद्वारा मूर्च्छामरणावस्थास्वरूप विशदीकरणेन च जीवस्यजागराद्यवस्थासु येदोषाव्यंजितास्ते तदंतर्यामिणोपि भवंतीति उतनभवंतीति जीवदोषहेतूनां कर्मणामीश्वरेपि सद्भावासद्भावाभ्यां तस्मिन्कर्माभावेपि तेषां शरीरावस्थितिप्रयुक्तत्वतदभावाभ्यां च संशयः। एवं तस्य समस्तकल्याणगुणाकरत्वं सं-

भवति नवेति नेतिनेतीत्यादि श्रुतिविरोधाभाव तत्सद्भावाभ्यांच संशयः। एवमुभयलिंगत्वसंशये पूर्वपक्षः। हेयेदेवमनुष्यादिशरीरे स्थितिर्दुःखजननीति जीवे संप्रतिपन्नं कथमंतर्यामिण्यपि सादुःखजननी न भवेत्। अंतर्यामी निरस्तसमस्तहेयस्समस्तकल्याणगुणाकरश्चेति श्रुत्यादिभिःप्रमित इति चेत् किं जीवस्तथा प्रजापतिवाक्येन न प्रमितः। अथ जीवस्य निर्दोषकल्याणगुणाकरत्वं कर्माविद्यादितिरोहितमिति चेत् तुल्यमन्तर्यामिण्यपि सर्वशरीरकतया सर्वशब्दवाच्यस्य तस्य 'ब्राह्मणो बृहस्पतिसवेन यजेतराजा राजसूयेन यजेत न ब्राह्मणस्सुरां पिबेन्न परदारान्गच्छे'दित्यादि विधिनिषेधवाक्यगतब्रह्मक्षत्रियादिशब्दवाच्यस्य विधिनिषेधाधिकारानिवारणात्। मा भूद्वा ब्रह्मणः कर्म तथाऽपि देहे स्थित्या तत्प्रयुक्तदोषाः स्युः। ननु संभोगप्राप्तिरितिचेदित्यादिष्वकर्मवश्यस्य ब्रह्मणः स्थानसम्बन्धप्रयुक्तदोषासंस्पर्शउक्तः। सत्यं तदुक्तिरेवाक्षिप्यते। कर्माण्यपि देहसम्बन्धमापादयन्ति, दोषजननानि भवन्तीति तदेतद्देहयोगाद्वासोऽपीतिपूर्वाधिकरणसूत्रेण दर्शितम्। अतो देहसम्बन्धाविशेषे कर्माभावोक्त्या किं समाहितं स्यात्। मलमूत्रमांसपूयशोणितादिकर्दमितेदेहे रौरवइवावस्थानस्यातिहेयत्वात्। नचान्तर्यामिणश्शरीरेऽवस्थानस्य स्वेच्छाधीनत्वेन कश्चन विशेषः। स्वयमेव स्वकरं छिंदतोऽपि तत्प्रयुक्तदोषापरिहारादिति। एवं निर्दोषत्वं तावन्नसम्भवति। नेति नेतीत्यादिनिर्विशेषश्रुतिविरोधात् कल्याणगुणवत्त्वमपि तस्य न सम्भवति। तस्मान्नोभयलिंगं ब्रह्मेति। एवं प्राप्ते सिद्धान्तः। स्वतो निर्दोषस्य ब्रह्मणस्तत्र तत्र स्थानतोऽपि दोषा न प्रसज्यन्ते श्रुतिषु स्मृतिषुच तस्य निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वलक्षणोभयलिंगत्वप्रतिपादनात्। श्रूयतेह्यपहतपाप्मा विरजो विमृत्यु रित्यादि। स्मर्यते च– 'समस्तहेयरहितं विष्ण्वाख्यं परमं पदं। समस्तकल्याणगुणाकरोऽसावित्यादि। न च देहावस्थितितौल्ये जीववद्दोषाः कथं न प्रसज्यन्त इति वाच्यम्। एतच्छङ्कापरिहारार्थमेवान्तर्यामिब्राह्मणे पृथिव्यादिपर्यायेषु प्रतिपर्यायं 'एषत आत्मांतर्याम्यमृत'इति अमृतत्वोक्तेः। ततश्च तत्र तत्र स्थित्वा नियमनं कुर्वतोऽप्यं-

तर्यामिणो न तत्सम्बन्धप्रयुक्ता दोषा भवन्ति । न हि कारागृहे चोरस्येव तत्क्लेशनार्थं तत्र स्थितस्याधिकारिपुरुषस्य बन्धनताडनादिदोषा भवन्ति । न च तथाऽपि मलमूत्रादिपूरितदेहान्तरवस्थानं स्वयमेव साक्षात् कुर्वतोन्तर्यामिणस्तत्प्रयुक्ता दोषा न भवन्तीति कथं प्रत्येतव्यमितिचेत् । उच्यते । वस्तूनां दोषावहत्वं न तत्तद्वस्तुस्वभावप्रयुक्तम् । देशकालपुरुषादिभेदेनैकस्यैव वस्तुनस्सुखदुःखोभयरूपत्वदर्शनात् । किं तु तत्तत्कर्मविशेषाधीनं । तथोक्तं भगवता पराशरेण— 'नरकस्वर्गसंज्ञे वै पापपुण्ये द्विजोत्तम । वस्त्वेकमेव दुःखाय सुखायेर्ष्यागमाय च ॥ कोपायच्च यतस्तस्माद्वस्तुवस्त्वात्मकं कुत' इति । यदुक्तमीश्वरस्यापि कर्मवश्यता न निवार्येति । तन्न । सर्वज्ञस्य तस्यास्मदादीनामिवेदं कर्म मया कर्तव्यमिति विधिभिर्ज्ञाप्यत्वासम्भवेन सर्वप्रेरकस्य तस्य तत्प्रेर्यत्वासम्भवेन च तत्र कर्मवश्यतोक्तेर्निरालम्बनत्वात् । एवमीश्वरस्य कर्माभावादेवैकदेहस्थितयोरपि जीवेश्वरयोर्भोगतदभावव्यवस्थां दर्शयति 'द्वासुपर्णा सयुजा सखाये'त्यादिमंत्रे । तस्माद्देहावस्थित्या रूपवदपि ब्रह्म रूपरहिततुल्यमेव । 'आकाशो वै नामे'त्यादिश्रुत्या सर्वानुप्रविष्टस्यापि तस्य नामरूपकार्यास्पर्शेन केवलं निर्वोढृत्वप्रतिपादनात् । नन्वस्त्वेवं निर्दोषत्वं ब्रह्मणः कल्याणगुणवत्त्वं कुतः 'सत्यं ज्ञान'मिति हि मंत्रस्तस्य ज्ञानैकरूपत्वमाह । मैवं । अयं हि मन्त्रस्तस्य ज्ञानरूपत्वमात्रं वदति न तु गुणान्तरं वारयति । अतस्सत्यं ज्ञानमित्यतस्तस्य ज्ञानरूपत्ववत् कल्याणगुणवत्वमपि श्रुत्यन्तरादभ्युपेयं । अत एव वेदान्तगणस्तस्य निरस्तनिखिलदोषत्वं समस्तकल्याणगुणाकरत्वं चेत्युभयमपि दर्शयति । 'निष्कळं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् । तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवत'मित्यादिकः ।स्मर्यते च तथा 'सर्वज्ञस्सर्वदृत्सर्वशक्तिज्ञानबलर्द्धिमान् । अन्यूनश्चापि वृद्धिश्च स्वाधीनोऽनादिमान् वशी ॥ तन्द्रीद्वेषभयक्रोधकामादिभिरसंयुत' इत्यादि । एवं देहे स्थितावपि तत्प्रयुक्तदोषभक्त्वाभावादेवशास्त्रे जलदर्पणादिप्रयुक्तदोषास्पृष्टजलसूर्याद्युपमा निबध्यते । 'आकाशमेव हि यथा घटादिषु पृथग्भवेत् । तथाऽऽत्मैकोह्यने-

कस्थो जलाधारेष्विवांशुमान् ॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधाचैव दृश्यते जलचंद्रव' दिति । ननु वस्तुतस्सूर्यो जले नप्रविष्टो भ्रांत्या तत्रस्थ इव प्रतीयते । अंतर्यामी तु वस्तुतो देहेस्थित इत्यस्ति वैषम्यमिति चेत्सत्यं। दोषास्पर्शमात्रे दृष्टांतोऽयं जलवृद्धिह्रासादिप्रयुक्तदोषास्सूर्य इव देहप्रयुक्तदोषा नांतर्यामिणि भवंतीति । एवं दोषस्पर्शमात्रं हि दृष्टांतेन निवर्त्यते। दोषास्पर्शमात्रविवक्षाच'आकाशमेकं हि यथे'त्यादि श्लोके घटादिषु वस्तुतोऽवस्थितस्याकाशस्य जलाधारेषु वस्तुतोऽनवस्थितस्य सूर्यस्यचेति द्विविधस्य दृष्टांतस्योपादानात् ज्ञायते । दोषभाक्त्वाभावमात्रविवक्षायां हि तत्समंजसं भवति । तस्य सूर्याकाशोभयानुगतत्वात् । विवक्षितांशसाम्यमात्रेण च दृष्टान्तीकरणं । लोकेऽपि सिंहो माणवक इत्यादिव्यवहारो दृश्यते। सर्वात्मना साम्यं तु क्वचिदपि न सम्भवति। तस्मान्निरस्तनिखिलदोषं समस्तकल्याणगुणास्पदं चेत्युभयलिंगं ब्रह्म। स्यादेतत् बृहदारण्यके 'द्वेवावब्रह्मणोरूपे मूर्तंचैवामूर्तंचे'त्यादिना स्थूलसूक्ष्मात्मकं सर्वं प्रपञ्चं ब्रह्मणोरूपत्वेन परामृश्य तस्य हैतस्य पुरुषस्यरूपं यथामाहारजनं वासोयथेंद्रकोपोयथाग्नर्चिर्यथा पुंडरीक'मिति तस्याकारविशेषं चाभिधाय अथात आदेशोनेति नह्येतस्मादिति नेत्यन्यत्परमस्तीति प्रकृतं सर्वं ब्रह्मणः प्रकारमिति शब्देन परामृश्य तत्सर्वंप्रतिषिध्य सर्वविशेषाधिष्ठानं सन्मात्रमेव ब्रह्मस्वरूपमिति दर्शयति श्रुतिः। अतः कथमुभयलिंगत्वं ब्रह्मण इतिचेत् , उच्यते । प्रकृतैतावत्त्वं प्रतिषेधतीदं वाक्यं । ये ब्रह्मणो विशेषाः प्रकृताः तद्विशिष्टतया तस्य प्रतीयमानेयत्ता नेति नेतीति प्रतिषिध्यते । उक्तप्रकारमात्रविशिष्टं ब्रह्म न भवतीति यतो निषेधानन्तरं भूयोऽपि तस्य गुणजातं ब्रवीति –नह्येतस्मादिति नेत्यन्यत् परमस्त्यथनामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यमिति। अयमर्थः । नेत्यनेन एतावन्मात्रविशिष्टं न भवतीत्यर्थकेन यद्ब्रह्म प्रकृतं तस्मादेतस्मादन्यत् परमुत्कृष्टं वस्तु नास्ति तदेव सर्वोत्कृष्टं यतस्तस्य ब्रह्मणो नामधेयं सत्यस्य सत्यमिति। तत्र षष्ठ्यन्तसत्यशब्देन वियदादिवत् स्वरूपान्यथाभावरूपविकाररहितो जीववर्ग उच्यते। ततोऽप्येषः प्रकृतः प-

रमात्मा सत्यः कर्मानुगुणज्ञानसङ्कोचविकासरूपधर्मान्यथाभावस्याप्यभावा-दिति तन्निर्वचनमिति । तस्मादेवंविधवाक्यशेषोदितगुणयोगात् ब्रह्मणस्स-विशेषत्वं न प्रतिषिध्यते, किं तु पूर्वप्रकृतेयत्तामात्रं । श्रुत्या पूर्ववाक्ये स्वयमुप-दिष्टस्य मूर्तामूर्तप्रपञ्चवैशिष्ट्यस्य स्वयमेव निषेधायोगात् । न हि ब्रह्मण-स्तद्वैशिष्ट्यं प्रमाणान्तरसिद्धं येनेह तदनूद्य निषिध्येत। ब्रह्मैव हि तावदव्यक्तं 'न सन्दृशे तिष्ठति रूपमस्ये' त्यादिश्रुतेः । तत्र तद्वैशिष्ट्यं कथमन्यतस्सि-ध्येत् । अपि च संराधने सम्यक्प्रीणने महनीयविषयप्रीतिरूपभक्तिदशापन्ने निदिध्यासन एव तस्य दर्शनं नान्यत्रेति 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां। भक्त्यात्वनन्यया शक्य अहमेवंविधोऽर्जुन। ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपे' त्यादिश्रुतिस्मृतिभ्यामवगम्यते । अतोऽपि तत्र प्रागप्रसिद्धं मूर्तामूर्तवैशिष्ट्यं नानुवदितुं क्षमं। इतश्च ज्ञानानन्दवत् ब्र-ह्मणो जगदैश्वर्यमपि वस्तुतो रूपं तत्संराधनाभ्यां तत्साक्षात्कृतब्रह्मणा सा-क्षात्कारे ज्ञानानन्दादिस्वरूपवत् मूर्तामूर्तविशिष्टताया अपि ब्रह्मगुणत्वावै-शेष्यमवभासते 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चे' त्यादिश्रुतेः । अतस्तत्त्वसाक्षात्कारे भासमानस्य पारमार्थिकत्वनियमान्नप्रप-ञ्चवैशिष्ट्यं निषेधक्षममिति प्रकृतेयत्तामात्रस्य निषेधः । अत उक्तैर्हेतुभि-र्ब्रह्मणोऽनन्तकल्याणगुणविशिष्टत्वसिद्धेरुभयलिंगमेव ब्रह्म ॥

सङ्ग्रहकारिकाः ॥

शरीरादौ हेयेस्थितिरवसिता दुःखकरिणी
कथं न ब्रह्मांतर्यमयितृ भवेद्दुःखकलुषम् ।
श्रुतिस्मृत्युद्घोषान्मितमुभयलिङ्गं तदिति चेत्
मितं प्राजापत्या द्वचस इह जीवोपिहि तथा ॥
अथकर्मतिरोहितं तदीयं यदिनिर्दोषगुणाकरत्वलिंगम् ।
अदसीयमपीत्थमेव साम्यादुभयोः कर्मनिकायवश्यतायाः ॥
शास्त्रं हि ब्रह्मापि क्रोडीकुरुते स्फुटं नियोज्यतया ।
ब्रह्मक्षत्रादिपदैरुदितं तत्तच्छरीरकत्वेन ॥

माभूत्कर्मस्वेच्छयावास्य देहैस्संबंधोस्तुस्यादनर्थायसोपि ।
किंनच्छिन्द्याद्राजकोपं विनापि स्वेच्छामात्रात्तीक्ष्णखड्गप्रहारः ॥
न च तस्य गुणास्संतिनेतिनेता तिशब्दतः ।
विज्ञानमात्रतोक्तेश्च साक्षाच्चागुणताश्रुतेः ॥
नैवं कर्मनिबंधनमिदं न वस्तुस्वभावकृतम् ।
देहेंद्रियविषयाणामचितां यद्दुःखहेतुत्वम् ॥
अत एव हि कल्पंते भोजकभेदाच्च कालभेदाच्च ।
ते दुःखाय सुखाय च महतः पुरुषस्य संकल्पात् ।
नास्यकर्मविधिभिर्नियोज्यता ब्रह्मणोस्त्यपरतंत्रवृत्तिनः ।
ज्ञाप्यता न खलु सर्ववेदितुः प्रेर्यतापि च न सर्वशासितुः ॥
तस्मादयं कर्मतिरोधिहीनः निर्दोषकल्याणगुणाकरत्वात् ।
हेयेषु तिष्ठन्नपि तेषुतेषु स्पृश्यो न दोषैस्सवितेव तोये ॥
विज्ञानाकारतोक्त्या शुभगुणनिकरानव्यवच्छेद मर्ह-
न्त्याम्नातत्वाविशेषात्तादितरविषयस्स्याद्गुणानां निषेधः ।
एतावत्वं निषेधन्प्रकृतपरिमितं नेतिनेतीति शब्दो
भूयोऽन्यच्चव्यनक्ति क्षिपति न विहितं ब्रह्मणो रूपयुग्मम् ।
इति उभयलिंगाधिकरणम् ॥५॥

---

**उभयव्यपदेशात्त्वहिकुंडलवत् ॥२६॥**

**प्रकाशाश्रयवद्वा तेजस्त्वात् ॥२७॥**

**पूर्ववद्वा ॥२८॥**

**प्रतिषेधाच्च ॥२९॥**

मूर्तामूर्तब्राह्मणोक्त प्रपञ्चस्य ब्रह्मरूपत्वं कीदृशमिति विचार्यत इति संङ्गतिः। किंतदहिकुण्डलयोरिव भेदाभेदाभ्यां, उतप्रभाप्रभावतोरिवैकजाति-योगेन,अथवाजीवस्येव शरीरतयेति संशये यथाहेरहित्वेनाभेदपि कुण्डल-

भावऋजुभावरूपसंस्थानविशेषापत्त्या भेदः एवं ब्रह्मणःस्वरूपाभेदेपि कार्यप्रपञ्चरूपापत्त्याभेदः 'ब्रह्मैवेदं सर्वमिति नामरूपे व्याकरवाणी'ति भेदाभेदोभयव्यपदेशादित्येकः पक्षः । तथा सति ब्रह्मणो निर्विकारत्वश्रुतिविरोधःस्यात्। अतोभिन्नयोरेव ब्रह्मादिप्रपञ्चयोरेकजातियोगेनाभेदव्यपदेशः सर्वमिदं तेज इति व्यवहारवत् सर्वं खल्विदं ब्रह्मेति व्यवहार इति पक्षांतरम् । गोत्वस्य खण्डमुण्डादाविव ब्रह्मत्वस्य घटपटादावनुवृत्तेः सकलश्रुतिस्मृतिव्यवहारविरुद्धत्वाज्जीववदचित्प्रपञ्चस्यापि शरीरतयैव ब्रह्मविशेषणता । अत एव शरीरधर्माणां शरीरिणि प्रसक्तौ 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत'इति तत्प्रतिषेधः । तस्मादुपपन्नं ब्रह्मणः पूर्वाधिकरणोक्तं निर्दोषत्वम् । अस्य पृथगधिकरणत्वे प्रकृतैतावत्त्वमित्यादेः पूर्वाधिकरणानुप्रविष्टत्वे च हेतुः श्रोतव्य इत्युक्तं श्रुतप्रकाशिकायाम् ॥

संग्रहकारिके ॥

संस्थानविशेषतया विश्वस्य ब्रह्मरूपत्वम् ।
अहिकुण्डलतावत्स्याद्रुचिदीपवदेकजात्याद्वा ॥

जीवस्येवांशत्वं विशिष्टवस्त्वेकदेशतारूपम् ।
रूपत्वं विश्वस्य श्रुतिनिकुरुम्बाविरोधेन ॥

इति अहिकुण्डलाधिकरणम् ॥६॥

---

**परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॥३०॥**

**सामान्यात्तु ॥ ३१ ॥**

**बुध्यर्थः पादवत् ॥ ३२ ॥**

**स्थानविशेषात्प्रकाशादिवत् ॥ ३३ ॥**

**उपपत्तेश्च ॥ ३४ ॥**

**तथाऽन्यप्रतिषेधात् ॥ ३५ ॥**

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३६ ॥

उभयलिंगाधिकरणे 'नह्येतस्मादितिनेत्यन्यत्परमस्ती'ति ब्रह्मणोऽन्य-दुत्कृष्टं वस्तु नास्तीत्युक्तम् । तदाक्षिप्य समर्थ्यत इति सङ्गतिः । अहिकु-ण्डलाधिकरणं तु प्रासङ्गिकमिति मूलाधिकरणेनेयं सङ्गतिः । जन्मादिसूत्रमा-रभ्य प्रतिपादितात् ब्रह्मणः परंवस्त्वस्ति नवेति सेतुत्वादिव्यपदेशानां ग-त्यन्तरासम्भवसम्भवाभ्यां संशये पूर्वः पक्षः । ब्रह्मणः परमपि किंचित्तत्त्व-मस्ति । सेत्वादिव्यपदेशेभ्यः । सेतुव्यपदेशस्तावत् 'अथ य आत्मा स से-तुर्विधृतिरेषां लोकानामसम्भेदाये'ति । अनेन प्रसिद्धसेतोः कूलान्तरमिव ब्र-ह्मणः प्राप्यान्तरमस्तीति गम्यते। नच 'एषां लोकानामसम्भेदाये'ति श्रुतासङ्क-रकारित्वेन दहराकाशरूपस्य ब्रह्मणस्सेतुत्वव्यपदेशोपपत्तिरितिवाच्यम्।'एतं सेतुं तीर्त्वान्धस्सन्ननन्धोभवती'ति तत्रैव प्रकरणे तरितव्यत्वश्रवणेन प्राप्या-न्तरप्रापकत्वस्यापि ततस्सेतुशब्दात् प्रतीतेः । तथा इयत्तापरिच्छेद-रूपोन्मानव्यपदेशो दृश्यते 'तदेतद्ब्रह्मचतुष्पात्षोडशकल'मिति । चत्वारः पादास्तत्रैव निरूपिताः 'प्राचीदिक्कलाप्रतीचीदिक्कलादक्षिणादिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम पृथिवीकलान्त-रिक्षंकला द्यौः कलासमुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽ नन्तवान्नाम अग्निः कलासूर्यः कला चन्द्रः कलाविद्युत्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम प्राणःकलाचक्षुःकला श्रोत्रंकला मनः कलैषवैसोम्य चतुष्कलः पादोब्रह्मण आयतनवान्नामेति । गवांपादेषु पुरतौ द्वौ खुरौ पश्चाद्द्वौपार्ष्णी इत्येकैकस्मिन् पादे चत्वारश्चत्वारश्शफास्सं-ति ते कलाशब्देनोच्यंते । एवं परिमितं ब्रह्मेत्यपरिमितं यत्प्राप्यं मोक्ष-शास्त्रेषु 'पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवी'त्यादिषु स्वैकदेशवि-श्रांतसकलप्रपञ्चं प्रसिद्धं तत्ब्रह्मणोन्यत् तत्प्राप्यमवसीयते। साक्षादेवमुक्त-प्राप्यस्य ब्रह्मणश्च प्राप्यप्रापकभावसंबंधस्यापि व्यपदेशो दृश्यते । 'अमृ-तस्य परं सेतुं दग्धेंधनमिवानल'मिति । तथाभेदव्यपदेशश्चदृश्यते । 'तेनेद

पूर्णं पुरुषेण सर्व'मिति ब्रह्मप्रकृत्य 'ततोयदुत्तरतरंतदरूपमनामयं य एतद्वि-
दुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ती'ति। एवमेभ्यो हेतुभ्यः परस्मा-
द्ब्रह्मणः परं मुक्तप्राप्यं तत्वमस्तीति। प्राप्तेऽभिधीयते। नास्तिपरब्रह्मणः
परंतत्वांतरम्। न हि जन्मादिसूत्रमारभ्य सकलजगदाभिन्ननिमित्तोपादा-
नतया मुक्तोपास्यतया मुक्तप्राप्यतया च तत्र तत्र प्रतिपादितादनुपदमेव
'नह्येतस्मादिति नेत्यन्यत्परमस्ती'ति सर्वोत्कृष्टतया प्रतिपादिताच्चब्रह्मणः
परं तत्त्वांतरमस्तीति शङ्का हृदयमधिरोहति। सेत्वादिव्यपदेशानां गति-
मात्रं वक्तव्यं तदुच्यते। सेतुव्यपदेशो वाक्यशेषश्रुतासंकरकारित्वमात्रेण।
सेतुं तीर्त्वेति तरतिः प्राप्त्यर्थः यथावेदं तरतीति। चतुष्पाद्ब्रह्मेत्यादिव्यप-
देशउपासनार्थः। स्वयमनुन्मितस्योपासनार्थमपि कथमुन्मितत्वव्यपदेश इति
चेत्।प्रकाशवदिति ब्रूमः। दृश्यते हि सौरप्रकाशादेर्विततस्यापि वातायनादि-
स्थानभेदोपाध्यवच्छेदात् परिच्छिन्नत्वं। प्राप्यप्रापकभावव्यपदेशश्चाभेदेऽप्यु-
पपद्यते प्राप्यस्य परमपुरुषस्य स्वप्राप्तौ स्वस्यैवोपायत्वात्। 'यमेवैष वृणुते
तेन लभ्यस्तस्यैषआत्मा विवृणुते तनूं स्वा'मित्यनन्योपायत्वश्रवणात्। अतो
नातिवाहिकवत्ब्रह्मणः प्राप्यांतरप्रापकत्वम्। भेदव्यपदेशस्त्वसिद्धः। 'ततो
यदुत्तरतर'मित्यत्र ततइत्यस्य हेतुपञ्चमीत्वेनावधिपञ्चमीत्वाभावात्। यस्मा-
त्परं नापरमस्ति किंचिदिति पूर्वमंत्रे ब्रह्मणोन्यत्परमुत्कृष्टं नास्तीत्युक्तत्वेन
'वेदाहमेतं पुरुषं महान्त'मिति पूर्वमंत्रे तद्वेदनस्यामृतत्वसाधनताया उक्त-
त्वेन च तदनन्तरं तस्मात्परस्योक्तेस्तद्वेदनरहितानाममृतत्वाभावोक्तेश्चोपक्रम-
विरुद्धत्वात्। अतः पूर्वोक्तं परमपुरुषादन्यदुत्कृष्टं नास्तीत्येतत्तस्यैव सर्वो-
त्कर्षत्वे हेतुत्वेन तत इति पञ्चम्यन्तं पदं परामृशतीत्येव युक्तम्। अपि च
'तेनेदं पूर्णं पुरुषेण सर्वं। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणःस्थित'इत्यादि-
कात् परमपुरुषस्य सर्वव्यापकत्ववचनजातादपि तस्मात्परं तत्त्वं नास्तीत्यव-
सीयते। तदधिकतत्त्वान्तरसद्भावे तस्य सर्वशरीरकतया सर्वव्यापकोक्त्ययो-
गात्। तस्माद्ब्रह्मणः परं तत्त्वान्तरं नास्ति ब्रह्मैव मुमुक्षूपास्यं मुक्तप्राप्यं च
परं तत्त्वमिति सिद्धम्॥

संग्रहकारिकाः ।

तरितव्यसेतुभावोमिति रन्यप्रापकत्वमन्यावरता ।
गमयन्ति कारणमपि प्रापकमिति बोद्धृवत्ततोऽन्यत् ॥
प्राप्यं भैवं कारणमेव हि सर्वत्र प्राप्यमाम्नातम् ।
सेतुत्वाद्युक्तीनां तदनुगुणा वृत्तिरेष्टव्या ॥
सेतुरिहासङ्करकृत्तरतिः प्राप्तिर्मितिः परोपाधिना ।
स्वस्य स्वप्रापकता चेष्टव्या पंचमी च हेत्वर्था ॥

इति पराधिकरणम् ॥७॥

---

**फलमत उपपत्तेः ॥३७॥**

**श्रुतत्वाच्च ॥ ३८ ॥**

**धर्मं जैमिनिरतएव ॥ ३९ ॥**

**पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४० ॥**

संसाराद्वैराग्योपायस्य जागराद्यवस्थासु जीवस्य दोषजातस्य निरूपणानन्तरं परब्रह्मप्रेप्सया तदुपासनेच्छोत्पादनाय परब्रह्मणो निर्दोषत्वं कल्याणगुणाकरत्वं सर्वस्मादुत्कृष्टत्वं च प्रतिपादितम् । अतः परमुपासनं निरूपयिष्यन् उपासनानामस्मात्परमपुरुषादेव तत्प्राप्तिरूपं फलमिति विवक्षया विशेषे प्रस्तुते सामान्याभिधानरूपेणाप्रस्तुतप्रशंसालङ्कारेण सकलकर्मफलप्रदत्वमनेनाधिकरणेन प्रतिपाद्यते । अथवा महाप्रभुर्महावदान्यश्च महाफलार्थिभिस्सेव्यः । न तु महाविभवयुक्तोऽपि कदर्यः नापि महावदान्यप्रकृतिरप्यकिंचनः । अतः परब्रह्मण उपासनाभिस्सेव्यत्वसिध्यर्थं तस्य 'स्वल्पसेवयापि महाफलप्रदत्वरूपं महावदान्यत्वं प्रदर्श्यते इति सङ्गतिः । विधिश्रुतेः 'अन्नादो वसुदान'इत्यादिश्रुतेश्च संशये पूर्वःपक्षः । कर्मोपासनाभिराराधनात् प्रसन्नस्य परमपुरुषस्य फलदातृत्वे कर्मानुष्ठानानन्तरमेव प्रसादो वक्तुं न शक्यते । परमस्वतंत्रस्य प्रसादेसति फलविलम्बायोगात्सङ्कीर्तनादिना

फलजननाभावप्रसङ्गाच्च भाविसङ्कीर्तनेन फलाजननमननुसन्धाय हठात्प्रसी-
दतश्चासर्वज्ञत्वप्रसङ्गात् प्रयाजादिभिस्तदनुष्ठानानन्तरमेव प्रसादेसति प्रधा-
नानुष्ठानेऽप्यङ्गान्तरवैकल्येऽपि फलनिष्पत्तिप्रसङ्गात् सर्वेश्वरप्रसादस्य वंध्य-
त्वायोगात् । तस्मात्कर्मभिरपूर्वेनिष्पन्ने तस्य सङ्कीर्तनादिनाशहेतुरहितस्य
फलजननौन्मुख्ये सति परमेश्वरः प्रसीदतीति वक्तव्यम् । ततश्चावश्याभ्युप-
गन्तव्यापूर्वेणैव निर्वाहे किमीश्वरप्रसादस्यापि कल्पनया । अतः कृष्या-
दिकर्मवत् कस्यापि प्रसादमनपेक्ष्यैव यागादिकं फलजनकमिति । एवंप्राप्ते
सिद्धान्तः । क्षणविध्वंसिनः कर्मणः कालान्तरभाविफलजननार्थं 'तृप्त ए-
वैनमिंद्रः प्रजया पशुभिस्तर्पयती' त्यादिवाक्यशेषावगतदेवताप्रीतिद्वारक-
स्यौचित्यात् । न च प्रतिमन्वन्तरं भिन्नानामिंद्रादीनां मन्वन्तरान्तरभावि
कर्म । 'अन्नादो वसुदान' इत्यादिस्त्वीश्वरस्य देवतात्वेन यागाङ्गत्वात्
तत्प्रशंसापरः । कृषिकर्मणि साहाय्यं कृतवतामपिहि भवद्भिरेवेदं सर्वं कृ-
षिफलं दत्तमिति प्रशंसा दृश्यते । फलदातृत्वायोगात् एतादृशार्थवादाः क-
र्मान्वयिदेवताप्रशंसामात्रपराइति वाच्यम् । तेष्विंद्रादिशब्दानां तत्तदन्त-
र्यामिपरमात्मपरत्वात् । 'इष्टापूर्तं बहुधाजातं जायमानं विश्वंबिभर्ति भुवन
स्यनाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः । यो यो यां यां तनुं भक्तः
श्रद्धयाऽर्चितुमिच्छति । तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स
तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहिता-
न्हितान् ॥ 'अहंहि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इत्यादिश्रुतिस्मृतिदर्श-
नात् । एवं रात्रिसत्रन्यायसाम्येन वाक्यशेषश्रुतेदेवताप्रसादे द्वारे क्लृप्ते
तन्निर्वाहार्थमङ्गप्रधानापूर्वकल्पनागौरवं फलमुखत्वान्नदोषः । तस्मात्साङ्ग-
कर्मानुष्ठानेनापूर्वं सम्पाद्य तस्य यावद्विपाकमसंकीर्तनादिभ्यस्संरक्षणेसति
अविकले भृत्यस्य सेवनेसति नृपतिरिव प्रसन्नः परमेश्वरस्तत्फलं प्रयच्छति
'सवा एष महानज आत्माऽन्नादो वसुदानः । एषह्येवानन्दयाती' ति तस्य
भोगापवर्गरूपसकलफलप्रदत्वश्रवणात् कर्मणः फलसाधनत्ववचनानां त-
त्प्रसादद्वारकत्वेऽप्युपपत्तेरिति ॥

सङ्ग्रहकारिके ॥

कृषिमर्दनादिरीत्या यागादितएव फलमितिचेत् ।
तत्र हि कल्प्यमपूर्वं श्रुतिसिद्धंत्वीश्वरस्य फलदत्वम् ॥
तस्मादग्न्यादिदेवात्मा शुद्धोवाऽप्यभिपूजितः ।
कर्मोपासनजातस्य हरिरेव फलप्रदः ॥

इति फलाधिकरणम् ॥८॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे तृतीयस्याध्यायस्य द्वि तीं यः पा दः ॥

---

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

## ॥ तृतीयस्याध्यायस्य तृतीयःपादः ॥

एवं परब्रह्मणस्सर्वज्ञत्वसर्वशक्तिमत्त्व निरतिशयदयाशालित्व सत्यसङ्कल्पत्वादिकेषु महावैभवमहावदान्यत्वपर्यंतेषूपास्यत्वोपयुक्तेषु कल्याणगुणेषु तत्तदधिकरणोदाहृतविषयवाक्यैश्शब्दतोर्थतश्च सिद्धेषु समुपजाततदुपासनाभिलाषस्य कथमुपासनं कार्यं किमेकस्योपासनस्य कस्यांचिच्छाखायां यावन्तोगुणा आम्नाताः तावदुपसंहारेणैव तदुपासनं कार्यं उत शाखांतरगत तदुपासनाप्रकरणाम्नात गुणांतरोपसंहारेणेत्याकाङ्क्षायां तदुपसंहारेण कार्यमिति प्रदर्शयितुं शाखाभेदेपि चोदनाद्यविशेषेसति नोपासनं भिद्यतइति तदभेदनिरूपणमिह पादे क्रियते । तद्भेदनिरूपणं तदपवादत्वेन कचित कचित् क्रियते । अतः फलतोगुणोपसंहारः पादार्थः । इहाधिकरणे सामान्यतः प्रतिशाखं वैश्वानराक्षरदहरादिविद्यानभिद्यन्त इति प्रसाध्यते—

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥१॥**

**भेदान्नेतिचेदेकस्यामपि ॥२॥**

**स्वाध्यायस्य तथात्वे हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥३॥**

**दर्शयति च ॥४॥**

**उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥५॥**

वैश्वानरादिविद्याः प्रतिशाखं भिद्यन्ते नवेति प्रत्यभिज्ञाविच्छेदकसद्भावासद्भावाभ्यां संशये अभ्यासप्रकरणभेदाभ्यां भिद्यत एव। शाखांतरे तयोर्भेदावश्यंभावात् । न च तयोस्तत्तच्छाखाध्यायिरूपप्रतिपत्तृभेदेन साफल्योपपत्तेः शाखांतराधिकरणसिद्धांतः सूत्रदर्शितचोदनाद्यविशेषप्रयुक्तप्रत्यभिज्ञानेन शाखाभेदेऽपि कर्मैक्यवद्विद्यैक्यं स्यादितिवाच्यम् । मुण्डकेऽक्षरविद्यायां 'तेषामेवैतां ब्रह्मविद्यांवदेत शिरोव्रतंविधिवद्यैस्तुचीर्ण' मिति तस्याश्शाखांतराम्नाताक्षरविद्यातो भेदलिङ्गदर्शनात् । शिरोव्रतं शिरस्यंगारपात्रधारणरूपं आथर्वणिकानामेव नियतम् । अतस्तेषामेव तद्विद्योपदेशनियमः तस्याश्शाखांतराम्नाताक्षरविद्यातो भेदलिंगं । विद्यैक्येहि तदङ्गस्य शिरोव्रतस्य शाखांतराध्यायिभिरप्यनुष्ठेयत्वा दाथर्वणिकानामेव शिरोव्रतमित्ययं नियमो नोपपद्येत । नन्वध्ययनांगमिदं शिरोव्रतं 'नैतदचीर्णव्रतोधीत' इति तत्रैव 'तेषामेवैतां ब्रह्मविद्यांवदेत'त्यस्य प्रथमश्रुततया तदनुसारेण तस्यान्यथानयनोपपत्तेः श्रवणात् । अतस्तदनुसारेण तेषामेवेति वचनमाथर्वणिकानामेवेति ब्रह्मविद्याप्रतिपादकमुपनिषद्ग्रंथ मध्यापयेदित्यर्थः कल्प्यत इति वाच्यम् । चरमश्रुतानुसारेण प्रथमवाक्यगत ब्रह्मविद्याशब्दस्य लक्षणाकल्पनायोगात् । तेषामेवैतामित्येनेनापि अध्ययनांगत्वस्यैव बोधने पौनरुक्त्यापत्तेश्च । तस्मादाथर्वणिकनियतशिरोव्रताङ्गकत्वलिंगेनाक्षरविद्यानां चोदनाद्यविशेषप्रयुक्तप्रत्यभिज्ञाविच्छेदात् भेदावश्यंभा-

वेन तथैव वैश्वानरविद्याअपि प्रतिशाखं भिद्येरन् अभ्यासप्रकरणान्तराविशेषात् । ननु तर्ह्याथर्वणिकमात्राधिकारिकशिरोव्रताङ्गकत्वानुरोधेन नानाशाखाम्नाताप्यक्षरविद्याऽऽथर्वणिकमात्राधिकारिकेत्यधिकारसंकोचोऽस्तु । दृश्यते ह्यंगानुरोधेनाधिकारसंकोचः । यथा 'ऋद्धिकामास्सत्रमासीर'न्नित्यविशेषश्रवणेऽपि सत्रे 'ये यजमानास्त ऋत्विज' इति ब्राह्मणैककर्तृकेषु ऋत्विक्कर्मसु यजमानानां कर्तृत्वविध्यनुरोधेन ब्राह्मणानामेवाधिकारइति संकोच इति चेत् नैवम् । मुण्डकाक्षरविद्यायाः शाखान्तरोक्ताक्षरविद्यातो भेदेनाभ्यासप्रकरणभेदोपष्टब्धेनाधिकारासंकोचोपपत्तौ प्रधानवाक्यावगताधिकारसंकोचनायोगात् । नचाभ्यासप्रकरणान्तरयोः प्रतिपत्तृभेदेन साफल्योक्तिरपि युक्ता । तथाऽपि कृतस्वशाखाध्ययनस्य पुनश्शाखान्तराध्ययनस्य तत्तच्छाखाध्यायिभ्यः तत्तद्वाक्यश्रवणस्य च संभवेन तं प्रति तस्य वाक्यस्यानुवादकत्वं स्वशाखाध्यायिनं प्रति प्रमापकत्वमिति वैरूप्यानिवारणात् । तस्मादभ्यासप्रकरणभेदाभ्यां चोदनाद्यविशेषप्राप्तप्रत्यभिज्ञाविच्छेदकाक्षरविद्याम्नातविद्याभेदलिंगोपष्टब्धाभ्यां प्रतिशाखं विद्याभिद्यत एवेति । एवंप्राप्ते सिद्धान्तः । प्रतिशाखं विद्यानभिद्यते । चोदनाद्यविशेषात् । तथा हि छान्दोग्यवाजसनेयकयोर्वैश्वानरविद्यायां 'वैश्वानरमुपास्त' इति चोदना तावदेकरूपा । यागस्य द्रव्यदेवतावत् उपास्तेर्वेद्यरूपमिति । इह वैश्वानराख्यं वेद्यं रूपमप्यविशिष्टम् । वैश्वानरविद्येत्याख्याप्यविशिष्टा । ब्रह्मप्राप्तिरूपः फलसंयोगोऽप्यविशिष्टः । अत एव हि प्रत्यभिज्ञानात् शाखान्तरेऽपि विद्यैक्यम् । नचाभ्यासप्रकरणभेदाभ्यां तद्भेदश्शंकनीयः । विध्यानर्थक्यप्रसंगरूपन्यायमूलौहितौ । 'समिधो यजती' त्यादौ विशेषणसंक्रान्तिरहितया विधिश्रुत्या कर्मविधिसिद्धौ विहितस्य कर्मणो विधानमनर्थकमित्यानर्थक्यन्यायमूलोऽभ्यासेन कर्मभेदः । एवमग्निहोत्रप्रकरणे विहितस्य नित्याग्निहोत्रस्य कुण्डपायिनामयनप्रकरणे पुनर्विधानमनर्थकमित्यानर्थक्यन्यायमूलएव प्रकरणान्तरेणापि कर्मभेदः । नचेहानर्थक्यमस्ति । तत्तच्छाखाध्यायिरूपप्रतिपत्तृभेदेन साफल्यात् । न च प्रमापकत्वानुवादकत्वरूपवैरूप्यापत्तिदोषः । वाक्यान्त-

रेण प्राप्तिमपेक्ष्यार्थज्ञानजनकत्वं ह्यनुवादकत्वं न ज्ञातज्ञापकत्वमात्रं, स्वशाखागतवाक्यस्यापि पुनश्श्रवणे अनुवादकत्वेन वैरूप्यापत्तेः । न च नानाशाखागतेष्वग्निहोत्रादिवाक्येषु किंचिदपि वाक्यं शाखान्तरवाक्यतः प्राप्तिमपेक्ष्य स्वार्थं बोधयति । अतो नानुवादकृतवैरूप्यापत्तिः । नाप्यक्षरविद्यायां पूर्वपक्षोक्तं भेदलिंगमस्ति । शिरोव्रतस्य विद्यांगत्वाभावात् । स्वाध्यायसंस्कारार्थो हि शिरोव्रतनियमः । 'नैतदचीर्णव्रतोऽधीत' इत्यध्ययनसंयोगात् अध्ययनशरीरानुपकारकस्य शिरोव्रतस्य अध्ययनसंस्कार्योपनिषदंगत्वपर्यवसानात् आथर्वणिकानां समाचाराख्ये ग्रंथे 'इदमपि वेदव्रतेन व्याख्यात'मिति शिरोव्रते पुष्कलोपदेशं कृत्वा व्रतान्तरं प्रस्तुत्य तत्र शिरोव्रतधर्मातिदेशाच्च । तथा च यथा सप्तसूर्याख्यहोमप्रभृतिश्शतौदनाख्यहोमपर्यन्तः तेषामेवाथर्वणिकानां सवहोमगणतदीयैकाग्निसम्बन्धात् तत्रैव भवति, न त्रेताग्निषु, एवं शिरोव्रतमपि तदीयाध्ययनसम्बन्धात्तदध्ययनसंस्कार्यायां तस्यामेवोपदिष्टं भवति । एवंचाथर्वणिकनियतशिरोव्रतांगकत्वानुरोधेन सैवोपनिषदक्षरविद्याप्रतिपादकोपनिषदन्तराद्भिद्येत । नत्वक्षरविद्या । तस्याएवोपनिषदआथर्वणिकमात्राधिकारिकशिरोव्रतांगत्वानुरोधेन तन्मात्राध्येयत्वं सिध्यति । नत्वक्षरविद्यामात्रस्याथर्वणिकैकाधिकारित्वं । तस्माच्छाखांतराध्यायिनां अक्षरविद्या शाखांतराध्ययनेन मुण्डकाध्यायिवचनेन च लब्धा फलं प्रयच्छतीति न कश्चिद्दोषः । नच ब्रह्मविद्याशब्दस्य मुण्डकोपनिषदि लक्षणादोषः । तदुपक्रमे 'द्वेविद्येवेदितव्ये इति हस्म यद्ब्रह्मविदोवदंति पराचैवापराच । तत्रापराऋग्वेदो यजुर्वेदस्सामवेदोथर्ववेदश्शिक्षाकल्पोव्याकरणं निरुक्तंछन्दोज्योतिषमितिहास पुराणन्यायमीमांसाधर्मशास्त्राणीत्यथ पराययातदक्षरमधिगम्यत' इति विद्याशब्दस्य विद्यास्थानपरत्वस्यावगततयोपसंहारेपि तस्य तादर्थ्योपपत्तेः । न चैवं सति नैतदचीर्ण इत्यग्रिमवाक्यमपि तदध्ययनसंस्कार्योपनिषदंगत्वप्रतिपादकामितिपौनरुक्त्यम् । अग्रिमवाक्य मचीर्णव्रतस्याध्ययननिषेधपरं, पूर्ववाक्यं अचीर्णव्रतं प्रत्यध्यापननिषेधपरमिति शूद्रविषयाध्ययनाध्यापननिषेधवाक्य-

योरिव विषयभेदसत्त्वात् तस्माद्विद्याभेदलिंगासिद्धेश्शाखाभेदेपि चोदनाद्य-विशेषात् विद्यैक्यमितिस्थितम् । तदिदंविद्यैक्यं छांदोग्ये दहरविद्यायां विहितमपहतपाप्मत्वादिगुणाष्टकं सिद्धं कृत्वा तैत्तिरीयके केवलं तस्मिन्यदन्तस्तदुपासितव्यमित्युपासनामात्रविधानलिंगमपि द्योतयति । अपेक्षितं हि तैत्तिरीयके छांदोग्योक्तपाप्मजरामरणाद्यभावसंकीर्तनं सहस्रशीर्षं देवमित्यादिना भगवतो विग्रहविधानेन पाप्मजरामरणादिप्रसक्तिसत्वात । एवंसर्वेषु वेदांतेषु समाने सत्युपासने वेदांतराम्नातगुणानामुपसंहारः कार्यः स्ववेदोक्तगुणानामिव वेदांतरोक्तगुणानामपि तदुपकारकत्वाविशेषात् ॥

सङ्ग्रहकारिकाः ।

अभ्यासात्प्रकरणभेदतश्च विद्याभिद्यन्ते प्रतिनिगमांतमित्ययुक्तम् ।
रूपाख्याफलविधि चोदनाविशेषादभ्यासादिक मवबोध्यभेदतस्स्यात् ।
विद्यांगंयदिहि शिरोव्रतंमितं स्यात्तास्स्युस्त त्प्रातिनियतत्वतोविभिन्नाः ।
तद्वेदाध्ययनविधेः प्रसिद्धमङ्गं यद्वेदव्रतमिति तत्समामनंति ॥

तस्माच्छाखाभेदेऽप्यस्त्यन्योन्यं गुणोपसंहारः ।
संज्ञाफलाद्यभेदे विद्यानामुपकृतेः सिध्यै ॥

इति सर्ववेदान्तप्रत्ययाधिकरणम् ॥१॥

---

## अन्यथात्वं शब्दादितिचेन्नाविशेषात् ॥६॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥७॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥८॥

## व्याप्तेश्च समञ्जसम् ॥९॥

चोदनाद्यविशेषाद्विद्यैक्ये सति गुणोपसंहार इति निरूपितम् । विद्यैक्यस्य क्वचिदपवादः क्रियत इति सङ्गतिः । अस्त्युद्गीथविद्या वाजिनां छन्दोगानां च । वाजिनां तावत् ‘ द्वयाहप्राजापत्याः देवाश्चासुराश्चे’त्यारभ्य ‘ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामे ’ति तेषां प्रतिज्ञामभिधायोद्गीथे

वागादिमन.पर्यन्तदृष्टावसुरैरभिभवमुक्त्वा 'अथ हेममासन्यं प्राणमूचु'रित्यादिना आस्यभवमुख्यप्राणदृष्ट्या ऽसुरपराभवमुक्त्वा 'भवत्यात्मना परास्य भ्रातृव्यो भवति य एवंवेदे' ति शत्रुपराभवफलाय प्राणदृष्ट्योपासनं विहितम् । एवं छन्दोगानामपि 'देवासुरा ह वै यत्र संयेतिर' इत्यारभ्य 'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम' इति उद्गीथेनासुरपराभवप्रतिज्ञामुक्त्वा उद्गीथे वागादिदृष्टौ तद्वदेव दोषमभिधाय 'अथ ह यएवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिर' इत्यादिनोद्गीथे प्राणदृष्ट्यैवासुरपराभवमुक्त्वा 'यथाऽश्मानमाखणमृत्त्वा विध्वंसेतैवं हैवसपाप्मना विध्वंसते य एवंविदि पापं कर्म कामयत' इति शत्रुपराभवफलायोद्गीथे प्राणदृष्ट्योपासनं विहितं। आखन्यते अनेनेत्याखनः। करणार्थे घप्रत्ययः। छान्दसं णत्वम् । आखणमित्येतदश्मविशेषणं। खनित्रादिवत् खननसाधनत्वेन दृढमश्मानं प्राप्येत्यर्थः। अर्थाल्लोष्टादिकमिति प्राप्तिकर्तृलाभः ।'यथाऽश्मानमृत्वा लोष्टो विध्वंसेते'ति समानप्रकरणे श्रवणात्। इहाप्यग्निमवाक्ये 'एषोऽश्माखण' इत्याखणशब्दस्याश्मविशेषणत्वाच्च । अत्र विद्यैक्यमुत विद्याभेदइति प्रत्यभिज्ञासद्भावासद्भावाभ्यां संशये पूर्वपक्षः । एकैवविद्याप्रत्यभिज्ञासद्भवात्देवासुरसंग्रामप्रवृत्तिः देवानामुद्गीथेनासुरपराभवाभिप्रायः तत्पराभवार्थे देवानां वाग्घ्राणचक्षुश्श्रोत्रमनस्समाश्रयणं तेषामसुरैरभिभवे कृते मुख्यप्राणसमाश्रयणं तद्वीर्यादश्मलोष्टदर्शनेनासुरविध्वंसनमित्येतस्य सर्वस्य प्रत्यभिज्ञापकस्यसत्वात्। ननु वाजिनां'अथहेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तेभ्य एषप्राणउदगाय'दित्यादिनोद्गानकर्तरि प्राणदृष्टिविधानं' छंदोगानांतु ' तमुद्गीथमुपासांचक्रिरे ' इत्यादिनोद्गीथे प्राणदृष्टिविधानमिति रूपभेदाद्विद्याभेदस्स्यादिति चेन्नैवम्। सारूप्यबाहुल्येनाल्पवैषम्यलक्षणस्यभेदकत्वाभावात् । देवासुरसंग्रामप्रवृत्तिः देवानामुद्गीथेनासुरपराभवाभिप्रायः असुरपराभवार्थे देवानां वाग्घ्राणचक्षुश्श्रोत्रमनस्समाश्रयणं वागादीनामसुरकृताभिभवः ततोमुख्यप्राणस्याश्रयणं तद्वीर्यादश्मलोष्टनिदर्शनेनासुरविध्वंसनमित्येतत्सर्वमुभयत्रापि समानमिति । अतस्तदनुसारेण वाजसनेयिनामप्युद्गीथोपक्रमाविशे-

षात् तदनुसारेण च वाजिनामुद्गानकर्मण्येव सौकर्यातिशयविवक्षया तत्कर्तृत्वव्यपदेशः । यथा स्वयमेवासिश्छिनत्तीति सौकर्यातिशयविवक्षया छिदिकरणे तत्कर्तृत्वव्यपदेश इति नेयं । तस्मादुभयत्रापि विद्यैक्यमिति । एवं प्राप्ते सिद्धान्तः । न विद्यैक्यं । एकत्रोद्गीथे प्राणदृष्टिरन्यत्रोद्गानकर्तरीति रूपभेदात् वेद्यतया प्रधानरूपभेदे अर्थवादसाम्यमात्रस्य विद्यैक्यहेतुत्वाभावात् वाजिनामुद्गीथोपक्रमस्य उद्गानकृदुद्गीथकर्मकगानकर्तरि प्राणदृष्टिविधानेऽप्युपक्रान्तोद्गीथापरित्यागेनविरोधाभावात् । न ह्युपक्रमाधिकरणेऽप्युपक्रमानवगतउपसंहारावगतो विशेषस्त्याज्यइत्युक्तम् । किंतूपक्रमावगतस्य त्यागो न कार्य इति । ततश्च रूपभेदादुद्गीथे हिरण्मयपुरुषदृष्टिविधानतः परोवरीयस्त्वादिगुणकाकाशदृष्टिविधानवदुद्गीथेऽवयवे प्राणदृष्टिविधानात् उद्गातरि प्राणदृष्टिविधानं भिद्यत इति न विद्यैक्यं रूपभेदेसत्युद्गीथविद्येति संज्ञैक्यस्यानुवादोदाहृतहिरण्मयपुरुषादिदृष्टिविधानयोरपि दर्शनेन तस्य विद्यैक्याप्रयोजकत्वात् । किं च छन्दोगानामिहोद्गीथशब्द उद्गीथावयवप्रणवपरः । 'ओमित्येतदक्षरमुद्गीथमुपासीते' त्युद्गीथावयवप्रणवोपक्रमस्य प्रथमप्रपाठकसमाप्तिपर्यन्तव्याप्तेः । वाजसनेयिनान्तु स कृत्स्नोद्गीथपरः । तत्र तदवयवपरत्वकल्पकप्रमाणाभावादित्यतोऽपि विद्याभेदादिति सिद्धम् ॥

संग्रहकारिकाः ।

उद्गीथविद्ययोरैक्यं प्राणदृष्टिविशिष्टयोः ।
चोदनाद्यविशेषात्स्यान्नैवं रूपविभेदतः ॥
एकत्र रूपमुद्गानकर्ता समुपवर्णितः ।
अन्यत्रोद्गीथ इत्येवं रूपभेदो हि दृश्यते ॥
एकत्रोपक्रान्तो यद्यपि फलवानुपास्य उद्गीथः ।
न ततोपि स घटतेऽस्मिन्नुपसंहारश्रुताधिकावापः ॥
अन्यत्रोद्गीथांशः प्रकृतः प्रागेव न समाप्तः ।

तदुपरितनविद्यास्वपि तस्य व्याप्तेरुपास्यतया ॥
इति अन्यथात्वाधिकरणम् ॥२॥

---

## सर्वाभेदादन्यत्रेमे ॥१०॥

पूर्वत्र दृष्टिविशेषणतया प्राणः प्रस्तुतः । तत्प्रसङ्गात्तद्विषयस्वतंत्रोपासनविचारः क्रियत इति सङ्गतिः । 'यो ह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणोवाव ज्येष्ठश्च श्रेष्ठश्चे'ति छन्दोगा वाजिनश्च ज्येष्ठत्वादिगुणकं प्राणमुपास्यमधीयते । 'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवती'ति वाजसनेयिपाठइति विशेषः । तथैव कौषीतकिनश्चाधीयते त्रिभिरपि वागादिकरणग्रामस्थितेस्तत्कार्यस्य प्राणहेतुकत्वेनैकेनैव रूपेण प्राणस्य श्रैष्ठ्यमुपपादितम् । छन्दोगवाजसनेयिनां वाक्चक्षुश्श्रोत्रमनस्सु वसिष्ठत्वप्रतिष्ठात्वसम्पत्त्यायतनत्वाख्यगुणान्प्रतिपाद्य तेषां प्राणे समर्पणमप्युक्तम् । 'अथ हैनं वागुवाच यदहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति अथहैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति अथहैनं श्रोत्रमुवाच यदहं सम्पदस्मि त्वं तत्सम्पदसीति अथहैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसी'ति । कौषीतकिनां तु वागादीनां वसिष्ठत्वादिकं तेषां प्राणे समर्पणंचेत्युभयमपि नोक्तम् । तत्र छन्दोगवाजसनेयिनां प्राणविद्यैक्ये नास्ति संदेहः । कौषीतकिनां प्राणविद्या ततो भिद्यते नवेति संशये पूर्वपक्षः । भिद्यत एव । प्राणस्य वसिष्ठत्वादिगुणकत्वाभावेन रूपभेदात् । नचान्यतस्तदुपसंहारः । स्वप्रकरणाम्नातगुणैर्नैराकाङ्क्ष्यात् । ननु प्रकरणाम्नातगुणैर्नैराकाङ्क्ष्ये शाखाद्वयोक्तगुणानामन्योन्यमुपसंहारः क्वचिदपि न स्यादिति चेत् सत्यम् । अस्तीह नैराकाङ्क्ष्यहेतुः प्रकरणाम्नातगुणविरोधस्तदुपपादनीयाभावश्चेति नैराकाङ्क्ष्यमुक्तवतां प्राचीनानामभिप्रायः । कौषीतकिनामुपनिषदि दशमाध्याये छान्दोग्यवाजसनेयकरीत्या प्रवृत्तायां प्राणविद्यायां वागादीनां वसिष्ठत्वादिगुणमात्रमेवोक्तं न तु तेषां प्राणे समर्पणमपि । अतस्तद्वत्त्वेन वागाद्यनुसन्धानमेव ततो लभ्यते । न तु प्राणस्य वागादिसमर्पितवसिष्ठत्वादि-

मत्तयानुसन्धानम् । छान्दोग्यवाजसनेयकृतस्तदुपसंहारे यथाश्रुतवागादिषु तदनुसन्धानमपहाय प्राणे तदनुसन्धानं कार्यं स्यादिति यथाश्रुतिलभ्यं विरुध्येतेति । तस्मात्प्राणगतवसिष्ठत्वादिरूपसत्त्वासत्त्वाभ्यां छान्दोग्यवाजसनेयकाम्नातप्राणविद्यातः कौषीतकीशाखाम्नाता साभिद्यत इति । एवं प्राप्ते ब्रूमः । न साभिद्यते । तस्यामपि वसिष्ठत्वादिगुणानामुपास्यत्वात् । तत्र प्रतिज्ञातप्राणश्रैष्ठ्योपपादनप्रकारस्य सर्वस्याप्यभेदात् । तथा हि छान्दोग्ये प्राणविद्यायां 'अहं श्रेयसे व्यूदिर' इत्युपक्रम्य वाजसनेयके– 'एताहवै देवता अहंश्रेयसे विवदमाना' इत्युपक्रम्य उभयत्रापि वागाद्येकैकोत्क्रमणे अन्येषां प्राणानां शरीरस्य स्थितिं तत्तत्कार्यंचाविकलं प्रतिपाद्य मुख्यप्राणोत्क्रमणे सर्वेषां विशरणकार्यकरत्वं चाभिधाय सर्वेषां मुख्यप्राणाधीनस्थितित्वतदधीनकार्यत्वाभ्यां तस्य श्रैष्ठ्यमुपपादितम् । एवमुपपादितं वागादिकार्यस्य प्राणाधीनत्वम् 'अथहैनंवागुवाच यदहं वसिष्ठास्मित्वं तद्वसिष्ठोसी' त्यादिना वागादिभिरनूद्यते । कौषीतकिशाखायामपि प्राणश्रैष्ठ्यप्रतिपादनाय वागादिषु वसिष्ठत्वादयउक्ताः । वागादिभिःप्राणावागादयश्च देहश्च प्राणाधीना इति प्राणस्य श्रैष्ठ्यमप्युपपादितं । वागादिभिः स्वस्वगुणानां प्राणे समर्पणोक्तिभंग्या तेषांप्राणाधीनत्वानुवादमात्रं न कृतं । नैतावतारूपभेदः । वागादीनां स्वस्वगुणान्वितानां प्राणाधीनकार्यत्वोक्त्यैव प्राणस्य वागादिगुणहेतुत्वसिद्धेः । तदेव प्राणस्य वसिष्ठत्वादिमत्वं यत्प्राणादिगतवसिष्ठत्वादिहेतुत्वं । वाचि वसिष्ठत्वं हि वागधीनसद्व्यवहारजननेन वसुमत्त्वसम्पादकत्वम् । चक्षुषः प्रतिष्ठात्वञ्च चक्षुष्मतस्समविषमभूतलादिप्रदर्शनेन प्रतिष्ठासम्पादकत्वम् । श्रोत्रस्यसम्पत्त्वं वेदशास्त्रतदर्थश्रवणादिसम्पादनेन सम्पत्करत्वम् । मनस आयतनत्वं सन्निहितस्रक्चन्दनादिविषयज्ञानरूपभोगायतनत्वम् । छान्दोग्यवाजसनेयकगतवासिष्ठत्वादिवेदनफलकीर्तनेन तथैव विवरणात् । सर्वमिदं वागादिकार्यं प्राणाधीनमिति स्फुटमेवअतः । कौषीतकीशाखायामपि वसिष्ठत्वादिगुणकप्राणः प्रतिपन्न इति नास्ति विद्याभेदः ॥

संग्रहकारिके ॥

ज्यैष्ठ्यश्रैष्ठ्यादिसाम्येपि वासिष्ठ्याद्यधिकं क्वचित् ।
तेन रूपविभेदेन प्राणविद्या विभिद्यते ॥
मैवं वागादिषुहितत्प्राणाधीनं निरूपितम् ।
तेनार्थसिद्धं प्राणेतदिति नैषा विभिद्यते ।

इति सर्वाभेदाधिकरणम् ॥१३॥

---

**आनन्दादयः प्रधानस्य ॥११॥**

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहिभेदे ॥१२॥**

**इतरेत्वर्थसामान्यात् ॥१३॥**

**आध्यानाय प्रयोजनाभावात् ॥१४॥**

**आत्मशब्दाच्च ॥१५॥**

**आत्मगृहीतिरितरवदुत्तरात् ॥१६॥**

**अन्वयादितिचेत्स्यादवधारणात् ॥१७॥**

यथा प्राणस्य वसिष्ठत्वाद्यनुसन्धानेन विना ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानानुपपत्तेरनुक्तानामपि वसिष्ठत्वादीनां कौषीतकिप्राणविद्यायां प्राप्तिस्तथा ब्रह्मस्वरूपानुसन्धानं यैर्गुणैर्विना न सिध्यति ते ब्रह्मविद्यासु सर्वास्वनुसन्धेया इत्यर्थः प्रतिपाद्यते । किमानन्दादयो गुणा यासु विद्यासु श्रूयन्ते तास्वेव प्रियशिरस्त्वैश्वर्यादिवद्व्यवतिष्ठन्ते उत सर्वासु विद्यासु उपसंहर्तव्याइतिसंशये पूर्वः पक्षः । व्यवतिष्ठन्त एव । उपसंहारे प्रमाणाभावात् । ब्रह्मगुणत्वेनोपसंहारे प्रियशिरस्त्वादीनामैश्वर्यौदार्यकारुण्यादिगुणानांचोपसंहार्यत्वप्रसङ्गादिति । सिद्धान्तस्तु । आनन्दादयस्सर्वासु विद्यासूपसंहर्तव्याः सत्यत्वज्ञानत्वानन्दत्वामलत्वानन्तत्वानां 'सत्यंज्ञानमनन्तं ब्रह्मे'त्यादि श्रुतिषु ब्रह्मस्व-

रूपधर्मत्वेन प्रतिपादितानां तत्प्रतीत्यनुबन्धित्वात् । नचैषां सर्वविद्यासु प्राप्तावुच्यमानायां प्रियशिरस्त्वादीनां प्राप्तिर्भवति । तेषां ब्रह्मगुणत्वाभावात् । अन्यथा ब्रह्मणआनन्दादिरूपत्ववत् प्रियादिरूपत्वस्यांगीकारे कालभेदेन वृद्धिह्रासभाजां प्रियादीनामनित्यत्वेन तस्याप्यनित्यत्वप्रसङ्गात् । ऐश्वर्यौदार्यादयो यद्यपि ब्रह्मगुणाः तदपृथक्सिद्धा भवंति तथाऽपि तं प्रतीत्यनुबंधित्वाभावाद्ये यत्र श्रुतास्ते तत्रैव व्यवतिष्ठन्ते । प्रियादीनां ब्रह्मगुणत्वाभावेऽपि निरतिशयानन्दरूपतया ब्रह्मस्वरूपस्योपासनोपयोगिबुध्यारोहार्थमानन्दमयशब्देन निरतिशयानन्दरूपतया प्रतिपन्नस्य तस्य लोकप्रसिद्धाः प्रियाद्यानन्दास्तदेकदेशत्वज्ञापनाय शिरस्त्वादिना रूपिताः । आनन्दमयश्च परमेव ब्रह्म नत्वन्नमयादिवदब्रह्मेत्येवमादिकं सर्वमानन्दमयाधिकरणएव प्रपञ्चितमिह सूत्रभाष्यादिषु स्मारितम् ॥

सङ्ग्रहकारिका ॥

आनन्दाद्या न तत्तत्प्रकरण पठितास्सर्वविद्यासु चिंत्या-
श्चित्याश्चेत्सर्वएव प्रकरणविमुखाः किं न पारिप्लवास्स्युः ।
मैवं ब्रह्मप्रतीतावुपकरणतया तत्र ये सानुबन्धा-
स्तेषामेषा गुणानामनुगतिरितरे नातियंति व्यवस्थाम् ॥

इति आनंदाधिकरणम् ॥१४॥

—*—

## कार्याख्यानादपूर्वम् ॥१८॥

दृष्टान्तसङ्गत्या प्राप्तमानन्दादिगुणोपसंहारं विचिंत्य पूर्वप्रस्तुतप्राणविद्याशेषश्चिंत्यत इति सङ्गतिः । छान्दोग्ये प्राणविद्यायां 'त्वं नः श्रेष्ठोऽसी' ति वागादिभिः प्राणस्य श्रैष्ठ्ये निर्धारिते 'किं मेऽन्नं भविष्यती' ति वागादीन् पृष्टवते प्राणाय 'यदिदं किं चिदाश्वभ्य आशकुनिभ्य' इति श्वादिपर्यंत प्राणिजातमन्नमुक्तम् । तत्र तावत् दृष्टिविधिरसन्दिग्धः । सर्वप्राण्य-

दनस्याशक्यत्वात् । ' नहवाएवंविदि किञ्चनानन्नं भवति न हवाअस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं यएवमेतदन्नस्यान्नं वेदे ' ति फलार्थवादश्रवणाच्च । तदनंतरं ' किंमेवास ' इति प्रश्नांतरस्योत्तरे अपांप्राणवासस्त्वमुक्त्वाऽऽम्नातं ' तस्माद्वाएतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधती' ति वाजसनेयिषु । काण्वा अप्येतावदेवामनंति । माध्यन्दिनास्तु अपां प्राणवासस्त्वमुक्त्वा 'तस्मादेवंविदाशिष्यन्नाचामे दशित्वाचाचामेदेतदेवतदशनमनग्नं कुरुत ' इत्यधिकमामनंति । किमत्राचमनं विधेयं उताचमनीयास्वप्सुप्राणवासस्त्वचिन्तनमिति । आचमनेविधिश्रवणात् प्राणवासस्त्वे उपक्रमादिसद्भावाच्च संशये पूर्वः पक्षः । विधिश्रुत्योपक्रमादिसमभिव्याहाररूपवाक्यप्रमाणात् बलीयस्याऽऽचमनमेव विधीयते । न च तस्य स्मृत्याचारप्राप्तत्वाद्विध्यसम्भवः, प्रणयनाधिकरणन्यायेनाचमनांतरविधिसंभवात् । चातुर्मास्येषु 'द्वयोःप्रणयन्ती ' ति द्वयोर्वरुणप्रघाससाकमेधपर्वणोरग्निप्रणयनविधानस्य प्रकृतिप्राप्ताग्निप्रणयनव्यतिरेकेण प्रणयनांतरविषयत्वस्य विधिसार्थकत्वाय कौमारिलैरभ्युपगतत्वात् । अनग्नतादिसङ्कीर्तनं त्वाचमनस्यैवाचमनीयानामपां स्तुतिद्वारा स्तुत्यर्थम् । यथा पूर्ववाक्ये 'नहवाअस्यानन्नं जग्धं भवती ' त्यादिकं प्राणस्य० सर्वान्नत्वदृष्टिविधेः स्तुत्यर्थमिति । एवं प्राप्ते सिद्धांतः । आचमनीयानामपां प्राणवासस्त्वानुसंधान॰मेवेहविधीयते । विधेरप्राप्तपक्षपातित्वात् । छांदोग्ये ' लंभुकोहवासो भवत्यनग्नोभवती ' ति, 'यद्यप्येतत् शुष्कायस्थाणवे ब्रूयाज्जायेरन्नेवास्मिन् शाखाः प्ररोहेयुः पलाशानी ' तिच तद्वेदनफलार्थवादश्रवणाच्च । विधिस्तुत्योस्समानविषयत्वानियमेन यत्र स्तुतिस्तत्र विध्यवश्यंभावात् । सर्वान्नत्वदृष्टिविधिसाहचर्याच्च 'किंमेवासः आपोवासः ' इत्युपक्रमोपसंहाराभ्यामप्सु प्राणवासस्त्वदृष्टिविधिपरत्वप्रतीतेश्च । तस्मादाचमनेच श्रुतस्यविधेः दध्नाजुहोतीति विधेरिव विशेषणसङ्क्रमो युक्तइति नास्त्याचमनेविधिः । अतएव छंदोगानां काण्वानांच न तथाभूतविधिश्रवणमस्ति ॥

संग्रहकारिके ।

उचितं प्राणविद्याङ्गे विधिराचमनांतरे ।
अनग्नताकीर्तनंतु स्तुतिस्तस्येतियुज्यते ॥
अपूर्वत्वादुपक्रांतिसमाप्त्योरपि कीर्तनात् ।
शाखाद्वयानुयायित्वाद्युक्तो वासस्त्वधीविधिः ॥

इति कार्याख्यानाधिकरणम् ॥९॥

---

## समानएवंचाऽभेदात् ॥१९॥

पूर्वाधिकरणे प्राणविद्याशेषत्वेन प्रसक्तं चिंतितम् । तत्पूर्वाधिकरणे स्वरूपप्रतीत्यन्तर्भूतगुणानामुपसंहार्यत्वमुक्तम् । तथैव सत्यसङ्कल्पत्वान्तर्भूतवशित्वादिगुणानामप्युपसंहार्यत्वमुच्यत इति सङ्गतिः । वाजिनामग्निरहस्ये शाण्डिल्यविद्याम्नाता ' स आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपंसत्यसङ्कल्पमाकाशात्मानं कामरूपिणं मनोजवसं सत्यसङ्कल्पं सत्यधृतिं सर्वगन्धं सर्वरसं सर्वादिशोऽनुप्रभूतं सर्वमिदमभ्यात्तमवाक्यनादरं यथा व्रीहिर्वायवोवे ' त्यादिना । तदनन्तरं बृहदारण्यके पुनरपि साऽऽम्नाता 'मनोमयोऽयं पुरुषो भास्सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवोवा स एष सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिस्सर्वमिदं प्रशास्तिं यदिदं किंचे'ति । किमनयोर्विद्या भिद्यते नवेति रूपभेदसत्त्वासत्त्वाभ्यां संशये बृहदारण्यकाम्नातवशित्वादिगुणात्मकरूपभेदाद्विद्याभेदइति पूर्वः पक्षः । ननु वशित्वादीनामग्निरहस्येऽप्युपसंहारसम्भवात् कथं रूपभेदउच्यते । एकस्यां शाखायामेकस्याविद्याया उभयत्र विधेः शाखाद्वयाम्नातैकविद्याविधिवत्तत्च्छाखाध्यायिरूपप्रतिपत्तृभेदेन साफल्याभावादभ्यासाधिकरणन्यायमूलानर्थक्यप्रसक्तिसत्त्वेनाविशेषपुनश्श्रवणाभावेऽप्यभ्यासाधिकरणन्यायसाम्यात् तत्र विद्याभेदोऽवश्याभ्युपगन्तव्य इत्यमुमर्थं सिद्धं कृत्वा तदुपजीवनेनाग्निरहस्यानाम्नातवशित्वादिगुणाम्नानमुपन्यस्तमतोऽत्र विद्याभेद इति । सिद्धान्तस्तु । विधिद्वयश्रवणं तावदसिद्धम् । यत्र भूयांसो गुणास्तत्राग्निरहस्ये विद्याविधिः

अन्यत्र गुणविधिरित्युपपत्तेः। एकत्र गुणभूयस्त्वस्य विनिगमकस्य सत्त्वात्। लोकेऽपि हि यत्र रथगजतुरगादिबाहुल्यं तत्र राजाऽन्यत्रामात्यादिस्तद्गुण इत्यवधार्यते । अयं न्यायः पूर्वतंत्रेऽपि 'भूयस्त्वेनोभयश्रुती' त्यधिकरणे समाश्रितः । तथाग्निरहस्ये वशित्वाद्यनधिगतिरप्यसिद्धा । 'सत्यसङ्कल्प' मित्यनेन तेषामपि संग्रहात् । मनोमयत्वादिसाम्येन गुणिप्रत्यभिज्ञया सत्य-संकल्पत्वं शाखान्तराम्नातानि स्वकार्याणि वशित्वादीन्यप्यवगमयति । अयं न्यायोऽग्निरहस्याम्नातकामरूपित्वादिना बृहदारण्यकउपसंहारेऽपि द्रष्टव्यः। तत्र भूतवशित्वादिना तत्कार्यकामरूपित्वाद्यवगमनोपपत्तेः । तस्मादभ्यास-न्यायस्य रूपभेदस्य च भावान्नविद्याभेद इति । यद्यपि मनोमयत्वादिबहु-गुणसाम्येनविद्यैक्यसिद्धावन्योन्यगुणोपसंहारस्सर्ववेदान्तप्रत्ययाधिकरणन्या-यत एव सिध्यति तथाऽप्याम्नातगुणैस्स्वकार्यतयाऽन्यत्राम्नातगुणानां स्मार-रणमिति कश्चित्तदुपसंहारोपाय इति न्यायान्तरप्रदर्शनमत्र कृतम् । यद्यपि छान्दोग्येऽपि शाण्डिल्यविद्याम्नाता, तथाऽप्येकशाखागतयोरेव वाक्ययोर्भा-ष्यादिषूदाहरणमभ्यासन्यायमूलोऽत्र पूर्वपक्ष इति विभावयितुं । तेनैव वि-भावितत्वात् तस्य न्यायस्येह कण्ठतोऽनुपन्यासः ॥

संग्रहकारिके ॥

स्थानद्वंद्वे वाजिनां रूपभेदादन्यान्येवाभाति शाण्डिल्यविद्या ।
एकत्रासौ सत्यसङ्कल्पयुक्ताह्यन्यत्रोक्तैषा वशित्वाद्युपेता ॥
अन्तर्भूतं सत्यसङ्कल्पतायामन्यत्रोक्तं यद्वशित्वाद्यशेषम् ।
तत्तत्क्षिप्तव्यस्तरूपे किमस्मिन्युक्तिद्वैधे रूपभेदस्य चोद्यम् ॥

इति समानाधिकरणम् ॥६॥

---

**सम्बन्धादेवमन्यत्रापि ॥२०॥**

**नवाविशेषात् ॥२१॥**

**दर्शयति च ॥२२॥**

यथा मनोमयत्वादिगुणकस्यैवोपास्यत्वाद्विद्यैक्यम् । एवमक्ष्यादित्यस्थस्य व्याहृतिशरीरकस्यैवोपास्यत्वाद्विद्यैक्यमिति शङ्कया सङ्गतिः । बृहदारण्यके 'सत्यं ब्रह्मे' त्युपक्रम्य 'तद्यत्सत्यमसौ स आदित्यो य एतस्मिन्मण्डले पुरुषो यश्चायंदक्षिणेऽक्ष' न्नित्यक्ष्यादित्ययोरुपास्यं पुरुषमुपदिश्य तस्य भूर्भुवस्सुवरिति व्याहृतित्रयं शिरोबाहुद्वयपादद्वयरूपं शरीरमिति व्याहृतिशरीरत्वमक्ष्यादित्यस्थानयोः प्रत्येकमुपादिश्य द्वे रहस्यनामनी व्यवस्थिते 'तस्योपनिषदह' रित्यादित्यस्थस्याम्नातं 'तस्योपनिषदह' मित्यक्षिस्थस्य । ते एते नामनी किं यथाश्रुतस्थानविशेषनियतत्वेन व्यवस्थिते उतोभयत्रोभे अनियमेनानुसन्धेये इति विद्यैक्यतद्भेदाभ्यां संशये पूर्वपक्षः । विद्या तावदेका । उभयत्र व्याहृतिशरीरस्य सत्यस्य ब्रह्मण उपास्यस्य स्वरूपस्याभेदात् नामि च सत्यं ब्रह्मैकमेव । अतो विद्याया नामिनश्चैक्यादनियमेनानुसन्धेये नामनी इति प्राप्ते सिद्धान्तः । नास्ति विद्यैक्यम् । उपास्यरूपभेदात् । यद्यप्युपास्यं सत्यं ब्रह्मैकं, तथाऽपि तदेकत्रादित्यमण्डलस्थतयोपास्यमन्यत्राक्ष्याधारतयेत्यस्तिस्थानसम्बन्धिस्वरूप विशेषणभेदाद्रूपभेदः अतस्तद्भेदाद्विद्याभेदः । शाण्डिल्यविद्यायां तु उपास्यं हृदयस्थानमेकमेवेति वैषम्यम् । अतो विद्याभेदान्नामिभेदाच्च व्यवस्थिते नामनी । दर्शयतिचान्यत्र स्थानभेदेन विद्याभेदं विद्याभेदाद्गुणानुपसंहारंच श्रुतिः 'यथा तस्यैतस्य तदेव रूपं यदमुष्यरूप' मिति । अत्रह्यादित्यपुरुषस्यैकस्यैवोपास्यत्वेऽप्यक्ष्यादित्यस्थानभेदेन विद्याभेदादनुपसंहारप्राप्तावयमतिदेशः ॥

सङ्ग्रहकारिके ॥

सत्यं व्याहृतिदेहं ब्रह्मोपास्यं विकर्तनेऽक्षिणि च ।
तदभेदात्तन्नाम्नोरहरहमोर्न व्यवस्थितिर्युक्ता ॥
स्थानाभेदस्ततथा रूपसिद्ध्यै तद्भेदेस्यान्नो कथं रूपभेदः ।
तस्माद्विद्याभेदतस्तद्व्यवस्थानोचेन्नस्यात्स्थानभेदेऽतिदेशः ॥

इति सम्बन्धाधिकरणम् ॥७॥

## सम्भृतिद्युव्याप्त्यपि चातः ॥२३॥

पूर्वाधिकरणे नाम्नोस्स्थानभेदाद्व्यवस्था कृता । तथाऽनारभ्याधीतस्य संभृत्यादिकस्यापि स्थानभेदाद्व्यवस्थोच्यत इति सङ्गतिः । अनारभ्य श्रूयते 'ब्रह्मज्येष्ठा वीर्यासंभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्म भूतानां प्रथमोत जज्ञे तेनार्हति ब्रह्मणा स्पर्धितुं कः' इति राणयनीयानां खिलेष्वयं पाठः । तैत्तिरीयाणां तु 'ऋतस्य ब्रह्म प्रथमोत जज्ञे' इति तृतीयपादपाठः । तत्र ब्रह्मणा ज्येष्ठानि प्राचीनानि वीर्याणि देवासुरसङ्ग्रामादिषु पराक्रमरूपाणि संभृतानीति या संभृतिरुक्ता या च द्वितीयपादेन द्युव्याप्तिरुक्ता तदिदं सम्भृतिद्युव्याप्ति ब्रह्मद्वारा विद्यान्वयि । यथा जुहूद्वारा पर्णता क्रत्वन्वयिनी । अव्यभिचरितविद्यासम्बन्धित्वात् ब्रह्मणः । न च जुहूवत् प्रकृतौ वा अद्विरुक्तत्वादिति न्यायेनानारभ्यश्रुतत्वेऽपि प्रकृतिगामित्वं वक्तुं शक्यम् । विद्यासु प्रकृतिविकृतिभावाभावादिति स्थिते किं सर्वार्थःप्रकरणादिति तदधिकरणपूर्वपक्षन्यायेन सर्वासु परविद्यास्वन्वयः उत कासुचिदेवेति सर्वविद्यान्वयसम्भवासम्भवाभ्यां संशये सर्वासु परविद्यास्वन्वयः । कासुचिदनन्वये हेत्वभावात् । न च हृदयाद्यल्पायतनास्वपि विद्यासु द्युव्याप्त्यन्वयो न संभवतीति वाच्यम् । दहरशाण्डिल्यादिविद्यास्वपि 'यावान्वा अयमाकाशः ज्यायान्दिव' इत्यादि श्रवणेन तद्वद्द्युव्याप्तेरप्युपसंहारसम्भवादिति । सिद्धान्तस्तु । वस्तुसामर्थ्यरूपाद्विशेषादल्पस्थानव्यतिरिक्तास्वेव वैश्वानरादिविद्यासु द्युव्याप्तिरुपसंहार्या । तत्साहचर्यात् सम्भृत्यादिकमपि तत्रैवोपसंहार्यम् । 'यावान्वा' इत्यादिकं तु उपास्यमहिमख्यापनार्थं नोपास्यगुणसमर्पणार्थमिति न विरोधः । नन्वेवं सति 'आनन्दादयः प्रधानस्ये' त्यधिकरणोक्तः सत्यज्ञानादिवदानन्त्यस्य सर्वासु विद्यासूपसंहारः कथं घटते । देशकालवस्तुपरिच्छेदराहित्यमानन्त्यं । तत्र देशपरिच्छेदराहित्यं व्यापकत्वम् । कालपरिच्छेदराहित्यं नित्यत्वम् । वस्तुपरिच्छेदराहित्यं स्वपृथक्सिद्धवस्त्वन्तरराहित्यरूपमद्वितीयत्वं स्वरूपतो गुणतो विभूतितश्चेयत्तापरिच्छेदराहित्यं वेति हि सिद्धान्तमर्यादा । यद्युच्येत विचित्रशक्तिमतः

सर्वेश्वरस्य व्यापकत्वेऽप्यल्पायतनत्वं घटते । 'इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् । मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा । अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदे'त्यादिगीतावचनदर्शनात् । भगवतः कृष्णस्य बन्धने सर्वेषामपि दाम्नामपर्याप्तेस्तदानीमेवैकेन दाम्ना बद्धत्वस्य च पुराणेषु प्रतिपादनाच्च । तस्मादानन्त्येऽप्यल्पायतनत्वं घटत इति । एवं तर्हि द्युव्याप्तिरपि तथैव घटत इति सर्वासु विद्यास्वानन्दवत् द्युव्याप्तेरप्युपसंहारो युज्यतएव कोऽन्वत्र दोष इति चेत् । अत्रेदं समाधानम् । न्यायनिष्ठे शास्त्रे केवलपुराणेतिहासावलम्बनः परिहारो न हृदयङ्गम इति न्यायमनुसृत्य द्युव्याप्त्यादीनामल्पस्थानास्वनुपसंहार उक्तः । एवं च न्यायतौल्यादानन्त्यस्यापि तासु नोपसंहारः । 'आनन्दादयः प्रधानस्ये'त्यधिकरणे आनन्दत्वादीनां सर्वासु विद्यासूपसंहार उक्तः । तत्र चतुर्णां विशेषेण सर्वासूपसंहारः । आनन्त्यस्याल्पस्थानातिरिक्तास्विति विभागो विवक्षितोऽनुसन्धेयः । एवं विवक्षैतदधिकरणपर्यालोचनयावगन्तुं शक्येति तत्र नोद्धाटिता ॥

सङ्ग्रहकारिके ।

सम्भृत्यादिगुणौघः प्रकरणपाठस्य वैधुर्यात् ।
अविशेषात्सर्वास्वपि परविद्यासूपसंहार्यः ॥
द्युव्याप्ते न घटत इति स्वल्पस्थानासु विद्यासु ।
तत्सहपठनात्सम्भृत्याद्या अपि तासु नोपसंहार्याः ॥

इति सम्भृत्यधिकरणम् ॥८॥

---

## पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥२४॥

द्युव्याप्तिसन्निधिसमाम्नातस्य सम्भृत्यादेः तत्समानस्थानानुप्रवेशादेकविद्यान्वय उक्तः । एवं ब्रह्मविद्यासन्निधिसमाम्नातपुरुषविद्यायास्तच्छेषत्वमिति सङ्गतिः । तैत्तिरीये 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानश्श्रद्धा पत्नीशरीरमिध्ममुरोवेदिर्लोमानि बर्हिर्वेदश्शिखाहृदयं यूपः काम आज्यं मन्युः

पशुस्तपोऽग्निश्शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनोब्रह्मा श्रोत्रमग्नी द्यावद्ध्रियते सा दीक्षा यदश्नाति यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्सञ्चरत्युपविशत्युत्तिष्ठते च सप्रवर्ग्यो यन्मुखं तदाहवनीयो यदस्य विज्ञानं तज्जुहोति यत्सायं प्रातरत्ति तत्समिधः यत्सायंप्रातर्मध्यंदिनञ्च तानि सवनानि ये अहोरात्रेते दर्शपूर्णमासौ ये अर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतव स्ते पशुबन्धा ये संवत्सराश्च परिवत्सराश्च तेऽहर्गणास्सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथ' इति । शमयिताअन्नसंस्कर्ता । छान्दोग्येऽपि पुरुषविद्याऽऽम्नाता । 'पुरुषोवाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातस्सवनं चतुश्चत्वारिंशद्वर्षाणि माध्यंदिनं सवनमष्टाचत्वारिंशद्वर्षाणि तृतीयसवनं यदशिशिषति यत्पिपासति यन्नरमते सा तस्य दीक्षायद्धसति जक्षति मिथुनीभवति तानिस्तुतशस्त्राणि यत्तपोदानमार्जवमहिंसा सत्यवचनं ता दक्षिणा यन्मरणं तदवभृथ' इति । अनयोः पुरुषविद्ययोरैक्यं भेदोवेति तैत्तिरीयाम्नातपुरुषविद्यायाः प्रकृतब्रह्मविद्याङ्गत्वाभावतद्भावाभ्यां संशयः । तस्याः प्रकृतब्रह्मविद्याङ्गत्वाभावे ब्रह्मप्राप्तिफलकत्वाभावात् पुरुषविद्यासंज्ञकछान्दोग्यसमाम्नातविद्योक्तायुःप्राप्तिरेव फलमिति फलाभेदात् रूपाभेदाच्च विद्यैक्यं स्यात् । तस्याः प्रकृतब्रह्मविद्याङ्गत्वे तत्फलेन ब्रह्मप्राप्तिरूपेण फलवत्तया फलभेदाद्रूपभेदाच्च विद्याभेद इति फलफलिभावः । तत्र पूर्वःपक्षः । पुरुषविद्यानामैक्यात् पुरुषावयवेषु यज्ञावयवकल्पनासाम्येन रूपैक्यात् तैत्तिरीयके फलाश्रवणेन 'प्रह षोडश वर्षशतं जीवती' ति छान्दोग्यपुरुषविद्याम्नातषोडशाधिकवर्षशतरूपपूर्णायुःप्राप्तेरेव तत्रापि फलत्वेन ग्राह्यतया फलसंयोगस्याप्यविशेषात् मरणावभृथत्वसाम्याच्च विद्यैक्यमिति । ननूभयत्रापि सवनत्रयकल्पनादिसाम्येऽप्येकत्र प्रातर्मध्याह्नसायाह्नेषु तत्कल्पना अन्यत्र त्रेधा विभक्तायुरंशेष्वित्यवान्तरभेदसत्त्वाद्यथाकथञ्चित् सवनत्रयकल्पनादिमात्रान्नरूपैक्यम् । फलैक्यमप्यसिद्धम् । तैत्तिरीयके पूर्वानुवाकान्ते ब्रह्मविद्याफलत्वेन श्रुतायाः ब्रह्ममहिमावाप्तेः 'तस्यैवंविदुष' इत्याद्यनुवाकान्ते पुरुषविद्याफलत्वेनापि श्रुतत्वात् पुरुषविद्या-

नामैक्यन्तूद्गीथविद्यानामैक्यवत् न विद्यैक्यप्रयोजकम् । मरणावभृथत्वसाम्यमात्रमवशिष्यते । बहुवैषम्येसति तदप्रयोजकम् । एकत्रोद्गीथे प्राणदृष्टिरन्यत्रोद्गानकर्तरीति प्रधानरूपवैषम्येसत्यर्थवादसाम्यमिव । तस्मात्सर्वमिदमयुक्तमिति चेत् । उच्यते । ब्रह्मविद्यैकफलभूता ब्रह्मावाप्तिः पुरुषविद्याफलत्वार्हा । अतस्तदुपसंहारे श्रुतापि सा पूर्वप्रस्तुतब्रह्मविद्यान्वयिन्येव । न च पुरुषविद्यायास्तदङ्गत्वात् तत्फलेन फलवत्तास्यादिति वाच्यम् । तस्यास्तदङ्गत्वे प्रमाणाभावात् । न च फलवदफलन्यायेन तदङ्गता । शाखान्तराम्नातपुरुषविद्यातः फलप्राप्तिसम्भवेनाफलत्वाभावात् तद्वत् स्वातंत्र्योपपत्तावङ्गत्वकल्पनायोगाच्च । एवं तैत्तिरीयके छान्दोग्याम्नातफलापेक्षावश्यंभावेन तत एव विद्यैक्ये सिध्यति यथाकथंचित् पुरुषावयवेषु यज्ञावयवकल्पनास्तीति रूपैक्यं नामैक्यं मरणावभृथत्वसाम्यञ्च तदुपष्टंभकं भविष्यतीत्येतैर्हेतुभिः पुरुषविद्ययोरैक्यमिति । न च तथाऽपि छान्दोग्ये पुरुषस्यैव यज्ञत्वेन प्रक्रमः, तैत्तिरीयके 'तस्यैवंविदुषो यज्ञस्ये'ति विद्वच्छब्दोक्तपुरुषसम्बन्धित्वेन तस्य प्रक्रम इति प्रक्रमभेदाद्विद्याभेदस्स्यादितिवाच्यम् । विदुषो यज्ञस्येति षष्ठ्योः सामानाधिकरण्यात् 'पुरुषोवाव यज्ञ' इति शाखान्तरानुसारात् सामानाधिकरण्यसम्भवे वैयधिकरण्यकल्पनायोगात् । नचैवंसति 'यज्ञस्यात्मा यजमान' इति पृथङ्निर्देशानुपपत्तिः । यज्ञस्य स्वरूपमिति तदर्थोपपत्तेः । अतो युक्तोऽयं पूर्वपक्षः । एवं प्राप्ते सिद्धान्तः । उभयत्राम्नातयोः पुरुषविद्ययोः भेदोऽस्त्येव । एकस्यां शाखायामाम्नातानां गुणानामन्यत्रानाम्नानात् तद्विरुद्धानामेव गुणानामाम्नानात् । एकत्रायुःप्राप्तिः फलमन्यत्र ब्रह्मप्राप्तिरिति फलभेदाच्च । तैत्तिरीयके हि पूर्वानुवाके 'ब्रह्मणे त्वामहस ओमित्यात्मानं युञ्जीते'ति ब्रह्मविद्यामुपदिश्य 'ब्रह्मणो महिमानमाप्नोती'ति तत्फलमुक्त्वा 'तस्यैवं विदुष' इत्यनुवाकान्ते पुरुषविद्याफलत्वेनापि तत्कीर्तितम् । न च तस्य तत्फलत्वासम्भवः । साक्षादसम्भवेऽपि प्रधानफलस्याङ्गे कीर्तनोपपत्तेः । 'सोमापौष्णं त्रैतमालभेत पशुकाम' इति श्रुतस्य प्रधानफलस्य 'औदुंबरो यूपोभवत्यूर्ग्वा उदुंबरऊर्क्पशव ऊर्जैवास्मा

ऊर्जं पशूनाप्नोती' ति तदङ्गयूपोदुंबरतायामपि कीर्तनदर्शनात् । न च तैत्तिरीयके पुरुषविद्याया ब्रह्मविद्यांगत्वासिद्धिः । ब्रह्मविद्याफलस्य तत्सन्निधिपठितायां पुरुषविद्यायां कीर्तनेन 'तस्यैवंविदुष' इति सर्वनाम्ना प्रस्तुतब्रह्मविद्यावतः पुरुषविद्याविधानेन च तस्यास्तदंगत्वावगमात् । एवं प्रक्रमभेदादपि पुरुषविद्ययोर्भेदः । 'विदुषो यज्ञस्ये' ति षष्ठ्योः 'आत्मा यजमान' इत्याग्रिमवाक्ये विद्वदात्मनश्चेतनस्य यजमानतया पृथङ्निर्देशेन वैयधिकरण्यावगमात् आत्मशब्दस्य स्वरूपपरत्वे प्रसिद्धार्थत्यागात् पूर्ववाक्यसिद्धार्थानुवादवैफल्याच्च आत्मोद्देशेन यजमानत्वविधानप्रतीतेश्च । तस्मात्पुरुषविद्ययोर्नैक्यम् । एवं सति सवनत्रयकल्पनादिषु परस्परविरुद्धेष्वनुष्ठानविकल्पशङ्काऽपि न भविष्यति । एकत्वात् संज्ञायाः यज्ञावयवप्रकल्पनासत्त्वात्फलभेदानाम्नानाच्चैकत्वं पुरुषविद्ययोर्युक्तम् ॥

सङ्ग्रहकारिका ।

संज्ञैकत्वे सत्यपि यज्ञावयवप्रकल्पवैरूप्यात् ।
परविद्याशेषत्वस्वातंत्र्याभ्यां च भिन्नतैव तयोः स्यात् ॥

इति पुरुषविद्याधिकरणम् ॥९॥

---

## वेधाद्यर्थभेदात् ॥२५॥

ब्रह्मविद्यासन्निधिसमाम्नातायाः पुरुषविद्यायास्तदंगत्वमुक्तम् । एवं ब्रह्मविद्यासन्निधिसमाम्नातानां वेधादिमंत्राणां तदङ्गत्वं स्यादिति शङ्कया संगतिः । आथर्वणिकानामुपनिषदारम्भे 'शुक्रं प्रविध्य हृदयं प्रविध्य सर्वं प्रविध्य धमनीः प्रवृज्य शिरोभिव्रज्य त्रिधा विवृक्त' इत्यादिमंत्राः पठ्यन्ते। वाजसनेयिनामुपनिषदारम्भे 'देवाहवै सत्रं निषेदु' रित्यादिना प्रवर्ग्यब्राह्मणं पठ्यते । ऐतरेयिणां 'इन्द्रो वै वृत्रं हत्वा महानभवत् तन्महाव्रतस्य महाव्रतत्व' मित्यादिना महाव्रतब्राह्मणं पठ्यते । कठानां तैत्तिरीयाणां च 'शंनोमित्रश्शंवरुण' इत्यादिमंत्राः पठ्यंते । एवमन्येषामपि शाखिनामुपनिषदारम्भेष्वन्यदन्यत्पठ्यते । किमेते मन्त्राः कर्माणि च विद्यांगानि नवेति

विद्यासन्निधेर्लिंगादितश्च संशये पूर्वपक्षः । यद्यपि 'शुक्रं प्रविध्ये' त्यादि-मंत्राः वैधलिंगादभिचारप्रथनाथर्ववेदपठितत्वाच्चाभिचारकमर्थाः, प्रवर्ग्यो विनियोजकवाक्येन ज्योतिष्टोमार्थः, महाव्रतं गवामयनार्थं, 'शन्नोमित्र' इत्यादि मंत्राः 'तेजस्विनावधीतमस्त्वि' त्यादिलिंगादध्ययनार्थाः, तथाऽपि सन्निधिबलात् विद्यार्थत्वमपि भवन्ननिवार्यते । न च प्रबललैंगिकाविनियोगिकादिना प्रथमप्रवृत्तेन नैराकाङ्क्ष्यात् दुर्बलेन समानबलत्वात् । अत एव 'अथातोऽग्निमग्निष्टोमेनानुयजन्ती'ति वाक्यविनियुक्तेनेष्टकाभिश्चेतव्येन स्थण्डिलरूपेणाग्निनाऽऽहवनीयस्याधाराकाङ्क्षानिवृत्तावप्युत्तरवेद्याः अग्निष्टोमप्रकरणाम्नानवैयर्थ्यपरिहारार्थं तस्या अप्याहवनीयाधारतया तदंगत्वमुपेयत इति । सिद्धान्तस्तु– उदाहृतानां मंत्राणां प्रवर्ग्यब्राह्मणादीनाञ्चोपनिषत्सु विद्यासन्निध्याम्नातस्यारण्येऽनुवाक्यत्वलाभार्थत्वेनान्यथासिद्धत्वात् प्रबलैः श्रुतिलिंगवाक्यैरभिचारादिष्वेव विनियोग इति वेधमन्त्रादीनामतिस्पष्टालिंग-प्रकरणादिभिरन्यत्र विनियोगः स्फुटतरइति तत्र पूर्वपक्षो यद्यपि मन्दः, तथाऽपि 'शन्नोमित्र' इत्यादिमंत्राणां लिंगमात्रं न तथा स्फुटतरमिति तद्विषयमिदमधिकरणम् । वेधाद्युदाहरणन्तु दृष्टान्तार्थमिति भविष्यति ॥

संग्रहकारिके ।

शन्नोमित्रस्सहनाविति मंत्रौ तैत्तिरीयकाम्नातौ ।
विद्याप्रकरणपाठाद्विद्यांगत्वेन गम्येते ॥
अध्ययनलिंगवत्त्वात्तदंगभूताविमौ मंत्रौ ।
वेधादिवत्तु विद्यासन्निधिरारण्यकत्वकृतः ॥

इति वेधाद्यधिकरणम् ॥१०॥

---

## हानौतूपायनशब्दशेषत्वात्कुशाछन्दस्तुत्युपगानवत्तदुक्तम् ॥ २६ ॥

'शुक्रं प्रविध्ये' त्यादि विद्यासन्निधिसमाम्नातमन्त्रविचारप्रसंगात्सन्निधिसमाम्नातहानोपायनविषयचिंतान्तरं प्रस्तूयतइति संगतिः । 'अश्वइव

रोमाणि विधूय पापं चन्द्रइव राहोर्मुखात्प्रमुच्य । धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानी'ति छन्दोगा मुच्यमानस्य पाप्मनां हानमात्रमामनंति । शाट्यायनिनस्तु 'तस्य पुत्रादायमुपयंति सुहृदस्साधुकृत्यां द्विषंतःपापकृत्या'मिति तेषां सुहृद्विषत्कर्तृकमुपायनमात्रमामनंति । कौषीतकिनस्तूभयमप्यामनंति 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयस्सुकृतमुपयन्ति अप्रियादुष्कृत'मिति । सर्वमिदमनुचिंतनार्थं न केवलं विद्यामहिमप्रख्यापनार्थं विद्याप्रकरणपाठस्य स्थानगुणादिपाठवदनुचिंतनार्थत्वात् । 'ज्यायान्दिव' इत्यादाविव विरोधाभावाच्च । शांडिल्यविद्यायां 'एतमितःप्रेत्याभिसम्भविताऽस्मी'ति फलभूताया ब्रह्मप्राप्तेरनुचिंतनीयत्वोक्तेः । इहापि 'अश्वइव रोमाणि' इति मंत्रे तदुक्तेः । एवमनुचिंतनीययोर्हानोपायनयोरेकैकमुभयंच विकल्पेनानुचिंतनीयमुतोभयमपि सर्वत्रोपसंहरणीयमित्युपायनस्य हानं प्रत्यशेषत्वशेषत्वाभ्यां संशये पूर्वपक्षः । हानमात्रश्रुतावुपायनं उपायनमात्रश्रुतौ हानंच नोपसंहार्यं । उपसंहारप्रयोजनस्य विद्यैक्यस्याभावात् । ननु विद्यैक्याभावेऽपि हानोपायनयोः परस्परापेक्षयोपसंहारः स्यात् । उपायनं हि हानमन्तरेणानुपपन्नं हानमपेक्षते, हानमप्युपायनमपेक्षतएव । अवश्यं हि कुतश्चित्प्रहीणं किंचिदुपैति यथाऽश्वात्प्रहीणं रोमबृन्दं भूभागमितिचेत् सत्यं । अर्थस्वभावस्तथैव । अनुचिंतनं त्वेकैकस्योभयस्य च विकल्पेन कार्यं न समुच्चयेन । समुच्चयस्य सर्वत्र कौषीतकिवाक्येन प्राप्तिसंभवेन शाखान्तरेष्वेकैकाम्नानस्य विकल्पार्थत्वाभावे वैयर्थ्यापत्तेः । नचाध्येतृभेदेन सार्थक्यमिह वक्तुं शक्यम् । अविशेषपुनश्श्रवणाभावात् । अतश्शाखाभेदेनैकैकस्योभयस्य च श्रवणमुदितानुदितहोमवद्विकल्पार्थमित्येव न्याय्यम् । नचेदं विद्याभेदेन व्यवस्थापयितुं शक्यम् । हानस्य ब्रह्मप्राप्त्यर्थं सर्वासु विद्यास्वपेक्षितत्वादिति । सिद्धान्तस्तु— एकैकश्रुतावन्यदप्युपसंहार्यम् । शाट्यायनिशाखायां दायसंक्रमणदृष्टान्तेनह्येवमेव गम्यते । यथा मुच्यमाने धने तंप्रति यथेष्टविनियोगार्हता हीयते । पुत्रान्प्रतिच सा सम्पद्यते । एवं तस्य पुण्यपापयोस्तं प्रति फलजननार्हता हीयते । प्रियाप्रियान्प्रतिच सम्पद्यते इति

श्रुतिषु हानोपायनशब्दाभ्यां विवक्षितमिति तत्र हानं ब्रह्मप्रेप्सोः फलरूपत्वात्तत्क्रतुन्यायतस्सर्वविद्यानुसन्धेयतयोपसंहर्तव्यमिति तदुपपादकत्वेन तच्छेषतया फलभूतमुपायनमपि सर्वत्रोपसंहर्तव्यम् । पुण्यपापयोः फलजननार्हत्वस्यान्यत्र संक्रान्तौ हि हानमुपपद्यते।सङ्कीर्तनप्रायश्चित्तादिभिरनष्टतया विद्यमानयोस्तयोः फलजनकत्वावश्यम्भावात् दायदृष्टान्तानुगुण्याच्च। ततश्च यथाकालं नवीना वानस्पत्याः कुशा इति सामान्यवचनस्यौदुंबर्यः कुशा इति शाट्यायनिनां विशेषवचनं वाक्यशेषतामापद्यते । देवासुराणां छंदोभिरित्यविशेषवचनस्य 'देवछंदांसि पूर्व'मिति क्रमविशेषवचनं 'हिरण्येन षोडशिनस्स्तोत्रमुपाकरोती'त्यविशेषवचनस्य शाखान्तराम्नातवचनस्य 'समयाविषिते सूर्ये षोडशिनस्तोत्रमुपाकरोती'ति समयाविषितशब्दोक्तसूर्यास्तमयसन्निहितकालविशेषविषयानियमार्थविशेषवचनं 'ऋत्विज उपगायन्ती'त्यविशेषवचनस्य शाखान्तराम्नातस्य भाल्लविनां 'नाध्वर्युरुपगाये'दित्यनध्वर्युविषयतापादकं विशेषवचनमिति । एवं सामान्येनावगतमर्थं विशेषे व्यवस्थापयितुं क्षमस्य वाक्य[illegible]स्य तच्छेषत्वानङ्गीकारे तयोर्विकल्पए[illegible]ष्टव्यः । स च गतौसत्यां न युज्यते[illegible]घ। तदुक्तं पूर्वकाण्डे 'अपितु वाक्यशेषस्स्यादन्याय्यत्वाद्विकल्पस्य विध[illegible]ामेकदेशः [illegible]था'दिति । 'यज्ञेषु ये यजामहं करोति नानूयाजे'ष्वित्य[illegible]रहन[illegible]भ्य श्रू[illegible]न्त्रौ तत्र सामान्यतस्सर्वयज्ञेषु येयजामहस्य विधिस्ततो विशिष[illegible]ानूयाजेषु [illegible]न्निषेध इति पर्युदासाधिकरणे पूर्वपक्षः कृतः । तत्र सिद्धान्तसूत्रमिदम् । त[illegible]ा सत्यनूयाजेषु येयजामहतन्निषेधयोः षोडशिग्रहणाग्रहणयोरिव विकल्पो भवेत् । नचाहवनीयपदशास्त्रवदिह सामान्यविशेषन्यायः प्रवर्तते । तत्र होमसामान्यद्वारा पदशास्त्रविषये होमे प्राप्तव्यपर्यवसानादाहवनीयशास्त्रात्प्रागेव आहत्यहोमविशेषविषयतया तत्र शीघ्रप्रवृत्तिकेन पदशास्त्रेणापहृतविषयविशेषमाहवनीयशास्त्रं तदितरविशेषविषयं व्यवतिष्ठत इति युक्तम् । इह तु सामान्यविषयमपि विधिशास्त्रमेवानूयाजानपि क्रोडीकृत्य प्रथमं प्रवर्तत इति वक्तव्यम् । अन्यथा प्रसक्त्यभावेन निषेधायोगात् । एवं शास्त्रप्राप्तस्य शास्त्रान्तरेण सर्वथा

निषेधे प्रापकशास्त्रस्य अप्रामाण्यं स्यात्- अतस्तत्परिहारार्थं अनूयाजेषु येयजामहविधिनिषेधयोर्विकल्पोऽङ्गीकार्यस्स्यात् । सचान्याय्यः । तस्मात् नानूयाजेष्वित्ययमंशः पर्युदासवृत्त्याऽनूयाजव्यतिरिक्तपरो यज्ञेषु येयजामहमित्यत्र यज्ञविशेषणसमर्पकतया तदेकदेशतामश्नुतइति सूत्रार्थः । एवं शाखान्तराम्नातोपसंहारेण सर्वास्वपि शाखासु हानोपादानशब्दवत्त्वाविशेषो लभ्यतइत्यविशेषपुनश्श्रवणसत्त्वात् तस्याध्येतृभेदेन परिहर्तुं शक्यत्वाच्च । पूर्वतंत्रसूत्रोक्तन्यायेनात्राप्यष्टदोषदुष्टो विकल्पो न समाश्रयणीय इति हानोपादानद्वयं समुच्चयेनानुसन्धेयत्वादुपसंहार्यम् । नन्वन्यदीययोः पुण्यपापयोरन्यत्र संक्रमणायोगात् प्रियाप्रिययोस्तत्संक्रमवचनं ब्रह्मविन्महिमप्रख्यापनार्थं, ब्रह्मवित्सु भक्तिरभ्युदयाय भवति द्वेषोऽनर्थायेत्येतद्बोधनार्थंवा । अतो नोपायनं श्रुतमुपसंहृतंवाऽनुसन्धेयम् । मुच्यमानानां पुण्यपापासंस्पर्शस्तु ब्रह्मज्ञानेन तयोर्नाशादेव भविष्यति । 'क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टे परावरे' इति श्रुतेरितिचेन्मैवं । 'यदेनश्चकृमावयं यद्वा यदन्यकृतमारिम ऋताममामुञ्चतांहसः यदन्यकृतमारिमे' त्यादिमंत्रवर्णतोऽन्यकर्मफलस्यान्यानुभाव्यत्वप्रतीतेः । वैश्वानरेष्ट्यपूर्वन्यायेनान्यस्थितस्यैवान्यत्र फलजनकत्वोपपत्त्याऽन्यसंक्रमवचनानामन्यत्र फलजननतात्पर्यसम्भवात् । 'क्षीयंते चास्य कर्माणी' त्यादिवचनानां ब्रह्मविदि तत्कर्मणां फलाजननतात्पर्यसंभवाच्च ॥

संग्रहकारिकाः ॥

सुकृतदुष्कृतयोर्विदुषः क्वचिन्निगमसीमनिहानमुदीरितम् ।
क्वचन संक्रमणं प्रियवैरिणोस्तदुभयं क्वचन प्रतिपादितम् ।
हानंविद्याविशेषप्रकरणपठने सत्यपिस्यादपेक्षा-
सामर्थ्यात्सर्वविद्यान्वयि तदनुसरन्नन्यतस्संक्रमश्च ।
हानं शेष्यस्य विद्याव्यभिचरितसमायोगिविद्यैककार्यं
तद्द्वारा सर्वविद्यासमधिगतिरतो युज्यते संक्रमस्य ॥
एवंसत्यपि हानसंक्रमयुगं सर्वासु विद्यास्विदं
गृह्णीते नियमेन नैव तु समुच्चित्यानुसन्धेयताम् ।

हानोपायनयोस्तदाहि पृथगाम्नातं निरर्थं भवे-
दुक्ताध्येत्रभिदाविशेषपुनराम्नाने हि साफल्यता ॥
मैवं हानवचोऽन्वयं कलयते संक्रांतिवाक्यंकुशा-
च्छन्दस्तुत्युपगानवर्णननयाच्छाखान्तरेऽपि स्थितम् ।
हानोपायनयोस्ततश्च पृथगाम्नानस्य वैधुर्यतः
सिध्यत्येव तयोस्समाधिषु समुच्चित्यानुसन्धेयता ॥

इति हान्यधिकरणम् ॥११॥

---

**सांपराये तर्तव्याभावात्तथाह्यन्ये ॥२७॥**

**छन्दत उभयाविरोधात् ॥२८॥**

**गतेरर्थवत्वमुभयथाऽन्यथा हि विरोधः ॥२९॥**

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥३०॥**

**यावदधिकारमवस्थितिराधिकारिकाणां ॥३१॥**

पुण्यपापयोर्हानमुपायनं च सर्वासु विद्यासु चिन्तनीयमित्युक्तम् । तद्धानं कदेति चिंत्यत इति सङ्गतिः । सुकृतदुष्कृतहानं देहवियोगकाले देहादुत्क्रान्तस्याध्वनि च उत देहवियोगकालएवेत्युभयविधश्रुतिदर्शनात् देहवियोगानन्तरं कर्मसाध्यफलाभावाच्च संशये पूर्वःपक्षः । उभयत्रेति युक्तम् । उभयथा श्रुतत्वात् । 'अश्वइव रोमाणी'ति मन्त्रे 'तस्य पुत्रादायमुपयंती'ति शाट्यायनिश्रुतौ च देहवियोगकाले पुत्रेषु दायसंक्रमणसमसमये पुण्यपापहानं श्रूयते । 'सआगच्छति विरजां नदीं तां मनसाऽत्येति तत्सुकृतदुष्कृते विधूनुत' इति कौषीतकिवाक्ये तदध्वनि श्रूयते । एवं पुण्यपापयोरेकदेशस्य देहवियोगकाले क्षयो विरजानद्यतिक्रमणानन्तरमित्युभयथाकर्मक्षये सत्येव देवयानगतिश्रुतिरर्थवती भवेत् । देहवियोगकाल एव सर्वकर्मक्षये तन्मूलस्य सूक्ष्मशरीरस्यापि विनाशात् केवलस्यात्मनो गमनासम्भवात् गतिश्रुत्याविरोधः स्यात् । वसिष्ठावान्तरतपःप्रभृतीनां च साक्षात्कृतपरब्रह्मणां

देहपातसमय एव सर्वकर्मक्षये देहान्तरसम्बन्धो न स्यात् । तस्मादुभयत्र कर्मक्षयः । एतेन देहपातादूर्ध्वं कर्मणाप्राप्यं नास्तीति निरस्तम् । सर्वेषां ब्रह्मविदां देवयानगतेः केषांचिद्देहान्तरसम्बन्धस्य च कर्मप्राप्यस्य सत्त्वात् इति । एवं प्राप्ते सिद्धान्तः । देहपातकाल एव विदुषः पुण्यपापयोः निरवशेषक्षयः । तस्य देहवियोगानन्तरं कर्मप्राप्यस्य सुखदुःखभोगस्याभावात् । तथैव हि छन्दोगास्तस्य देहपातादूर्ध्वं ब्रह्मप्राप्तिव्यतिरिक्तसुखदुःखभोगाभावमधीयते 'अशरीरंवावसन्तं न प्रियाप्रिये स्पृशतः । एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इति । एवं तर्हि श्रुतेरर्थस्वभावाच्च देहवियोगकाल एव पुण्यपापहानिरित्यवधृते सति श्रुत्यर्थस्वभावाविरोधार्थं यथायोगं पदानामन्वयो वर्णयितुं युक्तः । अतः कौषीतकिवाक्ये 'तत्सुकृतदुष्कृते विधूनुत' इति चरमश्रुतो वाक्यावयवः 'स एतं देवयान' मित्यतः प्राग्योजनीयः । देवयानगतिस्तु विद्यामाहात्म्यात् । विद्या हि सूक्ष्मशरीरस्यानारम्भिकापि स्थूलशरीरस्य सर्वकर्मणां च क्षयेऽपि स्वफलब्रह्मप्राप्तिप्रदानाय देवयानेन पथा ब्रह्मविदं नेतुं सूक्ष्मशरीरं स्थापयति । यथा लोके सस्यार्थं निर्मिते तटाके तद्धेतुषु तदिच्छादिषु विनष्टेष्वपि तटाकमाशिथिलं स्थापयन्तस्तत्र स्नानपानादिकंकुर्वंति तद्वद्वसिष्ठादीनांत्वाधिकारिकाणां यावदधिकारंप्रारब्धकर्मानुवृत्त्यादेहांतरसंबंधउपपद्यते।

सङ्ग्रहकारिकाः ॥

किंचित्कर्म क्षीयते साम्पराये किंचिन्नद्यां वाक्ययुग्मानुरोधात् ।
मैवं मार्गे शर्मदुःखाद्यभावात्प्राङ्नेतव्या नद्यतीतौ तदुक्तिः ॥
कर्माभावेऽप्यर्चिराद्यध्वगत्यै विद्याशक्त्या सूक्ष्मदेहस्थितिस्स्यात् ।
यावद्ब्रह्मप्राप्ति विद्यावतां यो धीसङ्कोचस्सोऽपि सूक्ष्मानुवृत्त्या ॥
देहान्ते येनार्चिरादिं लभन्ते विद्यावन्तो देहमन्यं भजन्तः ।
तेषां यावत्स्वाधिकारस्थितीनां तद्देहान्तेनैव कर्मक्षयोऽस्ति ॥

इति साम्परायाधिकरणम् ॥१२॥

—————

## अनियमस्सर्वेषामविरोधश्शब्दानुमानाभ्याम् ॥३२॥

देवयानगतिप्रसङ्गात्तन्नियमानियमचिंतेति संगतिः । देवयानगतिः उपकोसलविद्यापञ्चाग्निविद्यापर्यङ्कविद्यादिषु श्रूयते । सा किं तास्वेव व्यवतिष्ठते उत सर्वविद्यासाधारणीति तस्यास्साधारण्यबोधकशास्त्रासत्त्वतत्सत्त्वाभ्यां संशये पूर्वःपक्षः । तास्वेव व्यवतिष्ठते । साधारण्यबोधकशास्त्राभावात् । ननु छान्दोग्ये 'तद्य इत्थंविदुर्येचेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवंती'त्यादिश्रूयते । वाजसनेयके 'यएवमेतद्विदुर्येचामी अरण्ये श्रद्धांसत्यमुपासतेतेर्चिषमभिसंभवंती'त्यादिश्रूयते। तत्रोभयत्रापि'तद्यइत्थंविदुरिति प्रकृतान् पञ्चाग्निविदइव 'येचेम'इतिविद्यांतरनिष्ठानप्युद्दिश्य अर्चिरादिगतिर्विधीयते। मैवं। तत्र श्रद्धासत्यवचनतपोंनिष्ठानामेव हि सा विधीयते । श्रद्धादिपदानां प्रसिद्धार्थातिक्रमे कारणाभावात् । 'येचेम'इत्यादेस्सर्वब्रह्मविद्यासाधारण्ये तत एव पञ्चाग्निविदामप्यर्चिरादिगतिप्राप्त्या 'तद्य इत्थं विदु'रिति विशेषवचनवैफल्यापत्तेश्चेति । सिद्धान्तस्तु । उपकोसलविद्यानिष्ठानामेवार्चिरादिगतिरिति ननियमः । किं तु ब्रह्मविद्यान्तरनिष्ठानामपि । 'येचेमेऽरण्य'इत्याविशेषाम्नानात् । तत्र तपस्सत्यशब्दयोर्ब्रह्मपरत्वात् । सत्यशब्दस्य हि ब्रह्मवाचित्वं निर्विवादम् । श्रुत्यन्तरंच 'सत्यंत्वेव विजिज्ञासितव्य'मिति । तपश्शब्दस्यापि तदैकार्थ्यात् ब्रह्मपरत्वमवसीयते । न च प्रसिद्धार्थातिक्रमो दोषः । 'विद्यया तदारोहंति यत्र कामाः परागताः । न तत्र दक्षिणा यांति नाविद्वांसस्तपस्विन'इति विद्यारहितानां केवलतपोनिष्ठानां दक्षिणमार्गएवेति तेषामर्चिरादिगतिकीर्तनमनुवादमात्रम् । न च गत्यनुचिंतनमुपकोसलविद्यादिष्वेवेति नियमार्थं विशिष्य पृथक्कीर्तन स्यादिति वाच्यम् । गतेस्साधारण्ये सर्वासु विद्यासु तत्क्रतुन्यायानुरोधेन तच्चिंतनावश्यम्भावात् ॥ संग्रहकारिकाः ॥

ब्रह्मप्रतिपादनपरसत्यतपश्शब्दघटितवाक्याभ्याम् ।<br>यद्यप्यन्वेति गतिर्विहिता सर्वासु विद्यासु ॥

न तथाऽपि तासु सर्वास्वनुसन्धेया भवत्येषा ।
एकस्याद्यर्थस्तथासति स्याद्विशिष्य विद्याविशेषयोः पाठः ॥
साधारणीगतिर्ध्यचिन्ता तस्याः कथं न स्यात् ।
कामं स्यादनुवादस्तस्या विद्याविशेषयोः पाठः ॥
इति अनियमाधिकरणम् ॥१३॥

---

## अक्षरधियांत्ववरोधस्सामान्यतद्भावाभ्या-मौपसदवत्तदुक्तम् ॥३३॥

## इयदामननात् ॥३४॥

आर्चिरादिगतिवदस्थूलत्वादेरपि सर्वविद्यासाधारण्यं निरूप्यतइति संगतिः । बृहदारण्यके श्रूयते— 'एतद्वैतदक्षरं गार्गि ब्राह्मणाअभिवदन्त्य-स्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छाय' मित्यादि । अथर्वणे श्रूयते 'अथ परायया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्ण' मित्यादि । एतेचकिमस्थूलत्वादयः सर्वासु परविद्यासु उपसंहार्या नवेति तेषां ब्रह्मस्व-रूपनिरूपकत्वतदनिरूपकत्वाभ्यां संशये पूर्वःपक्षः । यत्र श्रुतास्तत्रैव व्यवतिष्ठन्ते । विद्यान्तरश्रुतगुणानां विद्यान्तररूपत्वे प्रमाणाभावात् । न च स्वरूपनिरूपकत्वाद्विद्यान्तरेष्वप्युपसंहारः । आनंदादिभिरेव स्वरूपनि-रूपणसिद्धेस्तैर्निरूपितस्वरूप एव ब्रह्मण्यधिकरणे स्थूलत्वादिप्रतिषेधानां बोद्धव्यत्वादिति । सिद्धांतस्तु । अक्षरसंबन्धिनीनामस्थूलत्वादिधियां सर्वासु ब्रह्मविद्यासु संग्रहः कार्यः । सर्वास्वप्युपास्यस्यब्रह्मणएकत्वात् । आनन्दमात्रस्य प्रत्यगात्मसाधारण्येन समस्तहेयराहित्यविशेषितमेवान-न्दादिक मेवासाधारणं ब्रह्मणो निरूपकमित्यस्थूलत्वादीनामप्यानन्दादि-वद्ब्रह्मस्वरूपप्रतीत्यनुबन्धित्वात् । यद्यप्यानन्दाद्यन्तर्गतेनामलत्वेन प्रत्य-गात्मव्यावृतिस्संभवति । तेन तद्व्यावृत्तस्वरूपएवच ब्रह्मणि स्थूलत्वादिप्रति-षेधोबोद्धव्यः । तथापि सामान्यतो दोषाभावानुसन्धानादपि जीवेषु सतां शरीरेंद्रियदोषाणां विशिष्याभावानुसंधाने तद्वैलक्षण्यदार्ढ्यं लभ्यते । तत-

स्तेऽपि सर्वासु विद्यास्वनुसंधेयाः । प्रधानानुसारित्वाद्गुणानां । यथौपसदानां जामदग्न्यचतूरात्रोपसत्संबंधिसामवेदोत्पन्नतद्गुणभूतमन्त्राणाम् । तथाहि– सामगानां पञ्चविंशब्राह्मणे जामदग्न्यचतूरात्रस्योपसत्स्वेककपालादिद्वादशकपालान्तपुरोडाशद्रव्यकाः द्वादशहोमा विहिताः । तेषां च 'अग्नये वेर्होत्रमवेरध्वरमाविदुरं वैश्वानरमवसेकरिंद्राय देवेभ्यो जुहुता हविः स्वाहे' त्याद्याः द्वादशमन्त्रास्समाम्नाताः । तेषां सामवेदोत्पन्नत्वादुच्चैस्साम्नेति सामवेदस्वरप्राप्तावुपांशुयाजुर्वेदिकप्रधानोपसत्स्वरएवेति गुणमुख्यव्यतिक्रमसूत्रेणोक्तं गुणमुख्ययोर्मन्त्रोपसदोर्व्यतिक्रमे स्वस्ववेदविहितस्वरप्राप्त्या विरोधे सति मुख्येन प्रधानानुसारेण वेदसंयोगः स्वरविधायकवेदसम्बन्धः । प्रधानानुसारित्वाद्गुणानामित्यर्थः । तदिहोदाहृतं सूत्रकारेण तदुक्तमिति । शबरस्वामिना तु गुणमुख्यव्यतिक्रमाधिकरणस्योदाहरणान्तरं लिखितम् । 'य एवंविद्वानग्निमाधत्त' इति यजुर्वेदविहितस्याधानस्याङ्गानि वारवन्तीयादिसामानि यजुर्वेद एव विहितानि 'यएवं विद्वान् वारवन्तीयं सामगायती' त्यादिना । तेषां साम्नामुच्चैस्स्वरूपोत्पत्तिवेदस्वरप्राप्तावुत्पत्तेर्विनियोगार्थत्वेन विनियोगस्य प्राधान्याद्याजुर्वेदिकोपांशुत्वरूपो विनियोगवेदस्वर एव ग्राह्यः प्रधानानुसारित्वाद्गुणानामिति । इदमपि न्यायतौल्यादुदाहरणतामर्हतीति । एवमन्यदपि ह्यत्रोदाहरणतामर्हतीति । उद्गातृवेदोत्पन्नानां मन्त्राणामुद्गातृप्रयोगे प्राप्ते अध्वर्युकर्तृके पुरोडाशहोमे विनियुक्तत्वादध्वर्युणैव तेषां प्रयोगः कार्यः प्रधानानुवर्तित्वाद्गुणानामिति । ननु यद्यमुं न्यायमवलम्ब्य विद्यान्तरेष्वप्यक्षरधियां निवेशः क्रियते, तदा सर्वकाम इत्यादीनामपि सर्वासु विद्यासु निवेशस्स्यादिति चेत् । उच्यते । उपासनार्थं सर्वासु विद्यास्वियदेव गुणजातमुपसंहर्तव्यं यदस्थूलत्वादिविशेषितमानन्दत्वादिकम् । इयतैव प्रत्यगात्मव्यावृत्तासाधारणब्रह्मस्वरूपानुसन्धानासिद्धेरतो नातिप्रसङ्गः ॥

संग्रहकारिके ।

प्रत्येतव्या लब्धरूपे परस्मिन्नानन्दाद्यैः पूर्वपस्थूलताद्याः ।
आनन्दाद्यैस्तस्य भेदप्रसिद्धेर्व्यर्थं तेषां सर्वसाधारणत्वम् ॥

जीवन्यायाच्चेतनत्वप्रसक्तेरस्पृष्टस्य ब्रह्मणो दोषवर्गैः ।
ताद्रूप्येण स्फूर्तयेऽपेक्षणीयस्सर्वेष्वेव ब्रह्मणो वेदनेषु ॥

इति अक्षरध्यधिकरणम् ॥ १४ ॥

---

**अन्तराभूतग्रामवत्स्वात्मनोऽन्यथा भेदानुपपत्तिरिति चेन्नोपदेशावत् ॥ ३५ ॥**

**व्यतिहारो विशिंषन्तिहीतरवत् ॥ ३६ ॥**

**सैवहि सत्यादयः ॥ ३७ ॥**

हेयप्रत्यनीकत्वं ब्रह्मासाधारणञ्चेदशनायाद्यतीतमेव ब्रह्म स्यात् । प्राणितृत्वादिविशिष्टस्तु जीवः स्यादिति शङ्कया संगतिः । बृहदारण्यके याज्ञवल्क्यं प्रत्युषस्तिप्रश्नएवमाम्नायते — 'यत्साक्षादपरोक्षाद्ब्रह्म यआत्मा सर्वान्तरस्तं मे व्याचक्ष्वे' ति । तस्य प्रतिवचनम्– 'यः प्राणेन प्राणिति सत आत्मा सर्वान्तरो योपानेनापानिति सत आत्मा सर्वान्तर' इत्यादि । अतुष्टेन तेन पुनःपृष्टस्य प्रतिवचनम्– 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः एषत आत्मा सर्वान्तरोऽतोऽन्यदार्त' मिति । तदनन्तरं 'यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वे' ति कहोळप्रश्ने– 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येत्येतं हैवमात्मानं विदित्वा ब्राह्मणः पुत्रेषणायाश्च वित्तेषणायाश्चेत्यादि अतोऽन्यदार्त' मित्यन्तं प्रतिवचनमाम्नायते । अनयोर्विद्या भिद्यते नवेति उषस्तिप्रश्नप्रतिवचनयोर्जीवविषयत्वब्रह्मविषयत्वान्यतरानवधारणात्संशये पूर्वपक्षः । उषस्तिप्रश्नप्रतिवचनं प्राणितृत्वादिलिंगाज्जीवविषयं कहोलप्रश्नप्रतिवचनमशनायाद्यतीतत्वलिंगात् ब्रह्मविषयमित्युपास्यरूपभेदाद्विद्याभेदोऽवश्यंभावी । अतः प्रथमप्रश्ने ब्रह्मशब्दो जीवविषयः । तत्रापि तत्प्रयोगदर्शनात् । तस्य साक्षादैन्द्रियकवृत्त्यनपेक्षापरोक्षत्वं स्वप्रकाशत्वात् । सर्वान्तरत्वं शरीरेन्द्रियाद्यान्तरत्वात् । यद्युच्येत ब्रह्मशब्दस्य

परब्रह्मणि मुख्यस्य जीवे नयनं न युक्तम् । साक्षादित्यस्य ब्रह्मविशेषणत्वे च तस्य जीवव्यावृत्त्यर्थत्वात् सर्वथा तन्नयुक्तम् । अपरोक्षलक्षणया सर्वदेशकालसम्बन्धित्वं सन्निकृष्टदेशकालं हि वस्त्वपरोक्षं भवति । प्राणितृत्वादिविषयप्रतिवचनानुसारेणोपक्रमगतस्य ब्रह्मशब्दस्यान्यथानयनं च नयुक्तम् । अतः प्रश्नानुसारेण प्रतिवचनगतं प्राणितृत्वादिकमेव ब्रह्मणि योज्यम् । 'कोह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो नस्या' दिति तस्य प्राणनादिव्यापारहेतुत्वश्रवणादिति । एवमुभयोरप्युषस्तिकहोळब्राह्मणयोर्ब्रह्मविषयत्वेऽपि रूपभेदाद्विद्याभेदो न निवार्यत इति । एवंप्राप्ते सिद्धान्तः । न तावदिह जीवब्रह्मविषयत्वेन विद्याभेदो युक्तः । प्रथमप्रश्नगतब्रह्मशब्दादिस्वारस्यातिलंघनकारणाभावात् । ब्रह्मविषयकहोळप्रश्नगतेन यदेवेत्यवधारणेन तस्य प्रथमप्रश्नसमानविषयत्वावगमाच्च । प्राणितृत्वादिकं तु ब्रह्मण्येवोपपन्नतरम् । प्रत्यगात्मनस्सुषुप्तौ प्राणनकर्तृत्वासम्भवात् । एवमजानतोषस्तेन प्राणनकर्तृत्वं प्रत्यगात्मनोऽप्यस्तीति प्रतिवचनस्य तत्साधारण्यं विचिन्त्यातुष्टेन पुनः पृष्टः प्राणनकर्तृत्वं निरुपाधिकं प्रत्यगात्मन्येवोक्तमिति दर्शयितुमाह 'नदृष्टेर्द्रष्टार' मित्यादि । ओदनपाकं पचतीतिवत् दृष्टेर्द्रष्टारमिति प्रयोगः । दर्शनश्रवणमननविज्ञानानां कर्ता प्रत्यगात्मा प्राणनकर्तृत्वेनोक्त इति नमन्वीथाः । किंतु सुषुप्तिसमयाद्यनुगतनिरुपाधिकप्राणनकर्ता परमात्मैवोक्तइति तदभिप्रायः । एवं प्रथमप्रश्नप्रतिवचनयोः परमात्मविषययोर्द्वितीयप्रश्नप्रतिवचने तद्विषये इत्यसन्दिग्धमिति न विद्याभेदः । एवमुभयोर्ब्रह्मविषयत्वादेव उभयत्रापि अतोऽन्यदार्तमित्युपसंहारः । न च विद्याभेदे प्रश्नप्रतिवचनभेदानुपपत्तिः । कृत्स्नप्राणिप्राणनहेतुतामशनायाद्यतीततां च प्रतिपादयितुं तदावृत्त्युपपत्तेः । सद्विद्यायामपि 'भूय एव मा भगवान्विज्ञापय' त्विति प्रश्नानां तत्प्रतिवचनानांचावृत्तिदर्शनात् । तस्माज्जीवब्रह्मविषयत्वेन विद्याभेदशङ्का न युक्ता । ननूभयोर्ब्रह्मविषयत्वेऽपि रूपभेदप्रयुक्तविद्याभेदः स्यात् । न हि खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवतीत्युपक्रान्तोद्गीथावयवैकविषयत्वेऽप्युद्गीथविद्यानामभ्यसनीयप्राणाकाशाहिरण्मय

पुरुषादिरूपभेदान्नभेदः । सद्विद्यान्यायात् भेद इति चेत् न । तत्रापि प्रतिख-ण्डिकं विद्याभेदोपपत्तेरितिचेत् । उच्यते । स च सर्वान्तरब्रह्मोपक्रमस्यातोऽन्यदार्तमित्युपसंहारस्य च उभयत्रापि समानत्वादशनायाद्यतीतत्वस्य निर्दोषत्वरूपतया सकलविद्योपसंहरणीयस्य उद्गीथावयवाध्यसनीयप्राणाकाशहिरण्मयपुरुषादिगुणान्तरवत् भेदकत्वाभावात् 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासे' दित्यादेर्ब्राह्मणद्वयसाधारणस्य विद्याविधेः कहोळप्रश्नएव श्रवणादुषस्तब्राह्मणे प्राणितृत्वादिना ब्रह्मणस्सर्वान्तरत्वे प्रतिपादितेऽपि जीवव्यावृत्तस्फुटसर्वान्तरत्वप्रतिपत्त्यर्थं उषस्तस्यैव प्रश्नांतरवत् स्फुटतरसर्वान्तरत्वप्रतिपत्त्यर्थं कहोळप्रश्नोपपत्तेश्च नात्र विद्याभेदः । सद्विद्यायामपि प्रतिखण्डिकं न विद्याभेदः । 'सेयं देवतैक्षते' ति या परा देवता सैव हि सर्वेषु पर्यायेषु प्रदर्श्यते । 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मे' ति प्रथमपर्यायोदितास्सत्यादयस्सर्वेषु पर्यायेषूपपाद्योपसंह्रियन्ते । उपपादनप्रकाराः परं 'भूय एव माभगवान्विज्ञापयत्वि' ति पुनः प्रष्टुः श्वेतकेतोराशयगतानां शङ्काविशेषाणां निराकरणार्थतया भिद्यन्ते । न तावता विद्याभेदः । तथा हि । सुषुप्तौ जीवा यत्रापियन्ति तत्सदिति नवखण्डीमध्ये प्रथमखण्डेन बोधितेसति सुप्तौ सत्सम्पन्ना जीवाः किमिति सत्सम्पत्तिं न विदुरिति अभिप्रायेण प्रश्नः 'यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ती' त्यादि द्वितीयखण्डे नानावृक्षरसान्मधुमक्षिकाभिर्मधुत्वेन समाहृतान् प्रस्तुत्य यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमास्सर्वाः प्रजास्सति सम्पद्य न विदुस्सति सम्पद्यामहइति ' इति प्रतिवचनभङ्ग्यासमाहितः । ननुयुक्तं सुप्तौ सर्वेन्द्रियोपरमात्सत्संपत्ते रवेदनं। उत्थिताःसतोहमागताइति किमिति नविदुः स्वगृहेसुप्तोत्थिताहि स्वगृहादहमागत इति जानन्तीत्यभिप्रायेण द्वितीयप्रश्नः 'इमास्सोम्यनद्यः पुरस्तात्प्राच्यस्स्यन्दन्त ' इत्यादि तदनन्तरखण्डे समुद्रादाकृष्य जलधरमुक्तैर्जलैः सम्भृताः प्रवहन्तीर्नदीः प्रस्तुत्य तायथा तत्र न विदुरियमहमस्मीयमहमस्मीत्येव मेव खलु सोम्येमाः सर्वाः प्रजास्सत आ-

गत्य न विदुस्सत आगच्छामह इति ' प्रतिवचनभङ्ग्या समाहितएव । तृतीयादिप्रश्नानामपिशङ्काविशेषाभिप्रायः, तत्तदनन्तरखण्डगतदृष्टांतविशेषोपन्यासयुक्तप्रतिवचनभङ्ग्यैव तत्समाधानानिच द्रष्टव्यानि । तस्मान्नसद्विद्यायां विद्याभेदइति तत्रेवात्रापि न विद्याभेदः ॥

संग्रहकारिकाः ।

यत्साक्षादितिजीवो यदेवसाक्षादितितुपरः प्रतिपाद्यः ।
प्राणितृताद्यशनायारहितताविलिङ्गगणात् ।
ब्रह्मैवयद्यपिभवेदुभयत्र साक्षाद्ब्रह्मेतिजीवविभिदार्थविशेषणोक्तेः ।
सर्वांतरत्वनियताननकर्तृभावनिश्शेषदेशसमयान्वयवर्णनाच्च ॥
साक्षादिहैवच निवारणतोनदृष्टेर्द्रष्टारमित्यसुभृतः प्रतिपाद्यतायाः ।
एवंस्थितेपिचयथोदितरूपभेदाद्विद्याविभेदमिहयुक्ततरंप्रतीमः ॥
मैवं प्रश्नेद्वितीयेह्यवधृतिसहिते प्राच्यधर्मैर्विशिष्टम्
पृष्टं ब्रह्मात्रवर्ण्या स्त्वघाविहातितयासर्वविद्यानुवृत्ताः ।
तेतत्सर्वांतरत्वं विशदतरयितुञ्जीववैधर्म्यरूपा
धर्माः पृष्टद्वयेप्यव्यतिहरणजुषस्तत्कृतोरूपभेदः ॥
सद्विद्यायां देवताकारणात्मा भूयोभूयः प्रश्नभेदोन्यरूपि ।
यद्वत्तेतं श्रोतृबुद्धौ प्रतिष्ठामेवं सर्वाभ्यन्तरं ब्रह्मचात्र ॥
नचसद्विद्यायामपि विद्याभेदस्समाशङ्क्यः ।
पर्यायेष्वखिलेष्वपि साम्यात्तत्सत्यमित्यादेः ॥

इति अंतरत्वाधिकरणम् ॥ १९ ॥

---

**कामादीतरत्र तत्रचायतनादिभ्यः ॥३८॥**

**आदरादलोपः ॥३९॥**

**उपस्थितेतस्तद्वचनात् ॥४०॥**

प्राणितृत्वादीनामशनायाद्यतीतत्वादीनां च भेदकत्वाभावाद्विद्यैक्यं

समर्थितम्। इह अपहतपाप्मत्वादिविशिष्टाकाशरूपत्वस्य वशित्वादिविशिष्टाकाशत्वस्य भेदकत्वेन रूपभेदात् विद्याभेदइति प्रत्यवस्थानात्सङ्गतिः। छान्दोग्ये 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्य'मिति आकाशः स्वान्तर्वर्तिगुणाष्टकविशिष्ट उपास्यः श्रूयते। बृहदारण्यके 'सवा एष महानजआत्मे'त्युपक्रम्य 'य एषोऽन्तर्हृदयआकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशान' इति वशित्वादिगुणविशिष्टआकाशे शयान उपास्यः श्रूयते। किमनयोर्विद्याभेदोऽस्ति नवेति रूपभेदाभेदाभ्यां संशये पूर्वपक्षः। विद्याभेद इति युक्तम्। रूपभेदस्य निगदव्याख्याततया स्फुटत्वात्। न च वाजसनेयकगताकाशशब्दो भूताकाशपरः, वशित्वादिकं गुणाष्टकान्तर्भूतसत्यसङ्कल्पत्वविशेषरूपमिति न विरोध इति वाच्यम्। वाजसनेयकश्रुतान्तर्हृदयवर्त्याकाशस्य समानप्रकरणश्रुत्यन्तरानुरोधेन दहराकाशरूपत्वावश्यम्भावात् दहराकाशो 'वेदनिहितं गुहायां परमे व्योम'न्निति श्रुत्यन्तरश्रुतं परमं व्योम, वाजसनेयकश्रुतआकाशे शयस्तु व्योमातीतं परंब्रह्मेत्युपपत्तेः। 'तत्रापि दह्रं गगनं विशोकः तस्यान्ते सुषिरं सूक्ष्म'मिति तैत्तिरीयकश्रुतयोर्गगनसुषिरशब्दयोरपि परमव्योमपरत्वोपपत्तेरित्येवंप्राप्ते सिद्धान्तः। छान्दोग्ये वाजसनेयके च सत्यकामादिविशिष्टमेव ब्रह्मउपास्यं। हृदयायतनत्वसेतुत्वविधरणत्वादिगुणानामुभयत्रापि साम्यात्। 'अथ य आत्मा ससेतुर्विधृतिरेषां लोकानामसम्भेदाये'त्यादेरेकत्र 'एष सेतुर्विधरण एषां लोकानामसम्भेदाये'त्यादेरन्यत्रच श्रवणात् वशित्वादीनां छान्दोग्ये श्रुतसत्यसङ्कल्पत्वविशेषरूपत्वाच्च वशित्वादिरूपतया सत्यसङ्कल्पसत्त्वे तत्साहचर्येण सत्यकामादीनामपि प्राप्तेश्च फलसंयोगाविशेषाच्च 'परंज्योतिरुपसंपद्ये'त्यादेरेकत्र 'अभयं वै जनकप्राप्तोऽसि अभयं वै ब्रह्मभवती'त्यादेरन्यत्र च श्रवणात्। तस्माद्वाजसनेयकश्रुताकाशशब्दस्तैत्तिरीयकश्रुतौ गगनसुषिरशब्दाश्च भूताकाशपराः। दहराकाशस्तु प्रागुक्तरीत्या ब्रह्मैव। न च ब्रह्मभूताकाशव्यतिरेकेण परमव्योमनामकिञ्चिदस्ति तद्वर्तिब्रह्मव्योमातीतमिति सिध्येत्। क

चित् ब्रह्मैव परमव्योमेति व्यपदिश्यते । यथा— 'सैषा भार्गवी वारुणीविद्या परमे व्योमन्प्रतिष्ठिते' ति । क्वचित्तस्य स्थानतया प्रशस्तो हृदयान्तरवकाशरूपो भूताकाशो व्यपदिश्यते 'यो वेद निहितं गुहायां परमे व्योम' न्निति । नैतद्व्यतिरेकेण परमव्योमनामकिंचिदस्ति । ननु गार्गिब्राह्मणे सर्वलोकाधारप्रश्ने तदाधारमाकाशमुक्त्वा आकाशाधारप्रश्ने परंब्रह्म तदाधारतयोक्तम् । 'एतस्मिन्खल्वक्षरे गार्ग्याकाशओतश्च प्रोतश्चे' ति । सचाकाशो देवतारूपः । प्रथमप्रवृत्तस्य सर्वलोकाधारप्रश्नस्य वक्ष्यमाणाकाशविषयत्वमालोच्य 'अनतिप्रश्न्यां वै देवतामतिपृच्छसी' ति तन्निषेधादर्शनात् अस्यैव देवतापरमव्योमेतिचेत् न । आकाशाधारविषयो द्वितीयः प्रश्नः परब्रह्मविषयो भविष्यतीति तदभिप्रायेणानतिप्रश्नानित्यादिप्रवृत्तेः तत्र देवतापदस्य प्रथमप्रश्नविषयत्वआकाशस्सम्प्रतिपन्नाचित्प्रकृतिरस्तु न तद्व्यतिरेकेण परमव्योमनामकिंचिदस्ति । यच्छांदोग्यादिष्वाकाशादिशब्दैरुक्तं स्यात् । अतश्छान्दोग्यबृहदारण्यकयोर्न विद्याभेदः । अथापि स्यात् । उभयत्रापि सत्यकामादिवशित्वादिगुणविशिष्टोपासनयोर्मोक्षरूपफलसंयोगाविशेषो यउक्त स्स नोपपद्यते । वाजसनेयके 'नेह नानास्ति किंचनमृत्यो स्समृत्युमाप्नोति य इह नानेव पश्यती' ति ब्रह्मणि नानाभूतवस्तुनिषेधेन वशित्वादीनां पारमार्थिकत्वावगमात् । छान्दोग्ये 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ती' त्यादिना सत्यकामादिगुणविशिष्टवेदनस्य सांसारिकफलश्रवणात् । अतो मुमुक्षोर्ब्रह्मावगमे वशित्वादिकं सत्यकामत्वादिकं च लुप्यत इतिचेत् नैव लुप्यते । श्रुतेस्तत्रादरदर्शनात् । छान्दोग्येतावत् 'तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेषु कामचारो भवती' ति गुणविशिष्टोपासनस्य फलमुक्त्वा 'अथ य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामान् तेषां सर्वेषु लोकेष्वकामचारो भवती' ति निंदा गुणविशिष्टवेदनविषयमादरं दर्शयति । वाजसनेयकेऽपि 'सर्वस्य वशी सर्वस्येशान एष सर्वेश्वरः एष भूताधिपतिरेषभूतपाल' इति पुनःपुनरैश्वर्योपदेशस्तद्विषयमादरं दर्शयति । 'स यदि पितृलोककाम' इत्यादिकं न सांसा-

रिककीर्तनं, किं तु मुक्तौ यद्धाविफलं तत्कीर्तनमेव। ब्रह्मप्राप्ते पुंसि ब्रह्मप्राप्त्यैव हेतुना तथाभूतफलवचनात्। 'परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वे' त्यादिकं हि श्रूयते। 'नेह नानास्ति किंचन एकधैवानुद्रष्टव्यम्' इतितु सर्वस्य ब्रह्मकार्यत्वेन तदात्मकत्वादेकधीदर्शनं विधायाब्रह्मात्मकत्वेन पूर्वसिद्धंनानात्वदर्शनं प्रतिषेधति नतु वशित्वादि निषेधति। स्वयंविधाय स्वयंप्रतिषेधायोगात्। 'अग्राह्यो नगृह्यते अशीर्योनशीर्यते असङ्गो नहिसज्जते' इत्याद्यनन्तरवाक्यैः प्रमाणांतराग्राह्यत्वेन ब्रह्मप्रतिपादनात्। छांदोग्येपि— 'नास्यजरयैतज्जीर्यति नवधेनास्यहन्यन्ते एतत्सत्यं ब्रह्मपुरमस्मिन्कामास्समाहिता' इति लोकसिद्धविजातीयत्वेन सत्यकामादिविशिष्टत्वेन ब्रह्मणःप्रतिपादनाच्च। तस्माद्गुणानां पारमार्थिकत्वात् मोक्षार्थविद्यासु नलोपइति सिद्धम्॥ संग्रहकारिकाः।

क्वचिदाकाशोदहरस्समुपास्यः सत्यकामादियुतः।
अन्यत्राकाशशयो वशित्वमुख्यैर्गुणैर्युक्तः॥
तस्माद्विद्याभिद्यते रूपभेदाच्छान्दोग्येचारण्यके वाजिनांच।
मैवं ब्रह्मैवोभयत्रापि हार्दं तत्वाम्नातं वाजिभिर्हृत्सुषिस्थम्।
तैराम्नाता ये वशित्वादयस्तेह्यन्तर्भूतास्सत्यसङ्कल्पतायाम्।
आतस्तेषांसत्यकामादयोन्येप्यानेयत्वं यांति तत्साहचर्यात्॥
नन्वेनयोस्सगुण निर्गुणविद्ययोस्ते युज्येत नैवमुपसंहृतिवादएषः॥
आद्यापराप्यपरमार्थगुणावलं..................................*

इति कामाद्यधिकरणम्॥१६॥

---

## तन्निर्द्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलं॥४१॥

* कर्मपदसमभिव्याहाराभावात्। न च रात्रिसत्रन्यायेन फलविपरिणामः कर्तव्यः। पर्णतादिवत् क्रतुफलेनैव फलत्वसंभवेनापापश्लोकश्रव-

---

* अत्र कश्चित् ग्रन्थः गळितः नोपलभ्यते।

णादिवत् फलविपरिणामानपेक्षणात् । ननु तथापि 'तेनोभौकुरुतो यश्चैवं वेदयश्चनवेद यदेव विद्ययाकरोति श्रद्धयोपनिषदा तदेववीर्यवत्तरं भवती' ति क्रतुषूद्गीथादिविद्यानामनियमश्रवणादनियतगोदोहनादिवत् पुरुषार्थतैव युक्तेतिवाच्यम् । षोडशिग्रहणादिवदनियतत्वेपि क्रत्वर्थतोपपत्तेः । 'यदेवविद्याया करोती' त्यत्रैव तृतीयया विद्यायाः करोतिशब्दोक्तकर्मांगत्वप्रतीतेश्च । नचवीर्यवत्तरमित्यनेन विद्यायाः फलांतरप्रतीतेः पुरुषार्थस्स्यादिति वाच्यम् । वीर्यवत्तरमित्यस्य षोडशिग्रहणपक्षइव विद्यानुष्ठानपक्षे कर्मभूयस्त्वात् फलभूयस्त्वमितिन्यायेन भूयःक्रतुफलं भवतीत्येतदर्थकत्वोपपत्तेः । किंच 'तेनोभौकुरुत' इत्यादिवाक्येन भवन्नियमोपि पूर्वप्रस्तुताप्त्यादिगुणकोद्गीथविद्यामात्रस्य भवेत् । नतु तदनंतरं वक्ष्यमाणानां मुख्यप्राणदृष्ट्यादिविशिष्टोद्गीथोपासनानां । 'यश्चैव' मित्येवंशब्दस्य प्रकृताप्त्यादिवैशिष्ट्यपरत्वात् । सर्वथापर्णतादिवत् क्रत्वर्थतया नियतैवोपासना इत्येवं प्राप्ते सिद्धांतः– अङ्गावबद्धोपासनानां क्रतुष्वनियमः । विनियोजकप्रमाणाभावेन तेषां तदङ्गत्वाभावात् । नचाव्यभिचरितसंबन्ध्युपस्थापित क्रतुबोधकशब्दाध्याहारेण पर्णतायाइव वाक्यं क्रतौ विनियोजकं स्यादितिवाच्यम् । पर्णतायास्सिद्धरूपजुहूसम्बन्धेऽपि व्यापाररूपत्वालाभात् फलनिष्पादकत्वं नस्यादिति तत्सिद्धये क्रतूपरागेण पुरुषानुष्ठेयव्यापाररूपतां सम्पादयितुं जुहूलिंङ्गेन क्रतुमुपस्थाप्य तत्संबन्धबोधकः शब्दः कल्प्यते । इहोपासनानां व्यापाररूपाणां स्वतएवानुष्ठेयतया फलवत्वसंभवे किमुद्गीथाद्युपस्थापितक्रतुसंबन्धकल्पनया । नचोपासनानां फलवत्त्वसिध्यर्थं तत्कल्पना । उपासनावाक्यशेषतएव विपरिणामेन फललाभसंभवात् । तस्माद्गोदोहनविधिवदाश्रित्यविधिना सरूपा अङ्गावद्धोपासनाविषयः । अतएव न्यायप्राप्तनियमानुवादकं 'यश्चैवंवेदे' त्यादिवाक्यं न्यायसाम्यात् । सर्वेषामङ्गावबद्धोपासनानामनियमस्योपलक्षणं । फलंच तेषां क्रतुफलवीर्यवत्तरत्वं क्रतुफलाप्रतिबंधरूपं क्रतुफलात्पृथग्भूतमेव । न तु क्रतुफलभूयस्त्वं । वीर्यंहिलोके कार्यानुकूलं बलमिति प्रसिद्धम् । न तु कार्य-

मेव। बलवत्तरत्वं च कर्मणः स्वफलजननप्रतिबन्धकापेक्षया वक्तव्यं। अन्यस्य प्रकृतानुपयोगात्। अतः फलदानोन्मुखेन विरोधिकर्मान्तरेणाप्रतिबद्धत्वं वीर्यवत्तरत्वमित्यवसीयते। एवंच 'यदेवविद्यये' ति तृतीयाश्रुतिर्नमुख्यकर्मशेषत्वपरा। किंतु कर्मभिरविलंबेन फलेजननीये तेषामुपकारकत्वमस्तीत्यमुख्यशेषत्वपरेति योज्यम्। तस्मात् क्रतुफलाप्रतिबन्धरूपफलांतरवन्त्यङ्गावबद्धोपासनानि क्रत्वर्थत्वाभावात् क्रतुषु न नियतानीति सिद्धम्। अप्रतिबन्धफलोक्तिश्चोद्गीथविद्याविशेषाणां यानि प्रातिस्विकफलानि तेषामप्युपलक्षणम्। प्रातिस्विकफलान्यपिहि श्रूयन्ते–'आपयिताहवैकामानां भवति, वर्षतिहास्मैवर्षयतिच, कल्पन्तेहास्मैलोका ऊर्ध्वाश्चावृत्ताश्चे' त्यादीनि॥

संग्रहकारिका।

उद्गीथाद्याश्रयाविद्या क्रत्वङ्गं पर्णतानयात्।
तेनोभौवाक्यतोनाङ्गं स्वतस्साध्यापृथक्फला॥

इति तन्निर्धारणानियमाधिकरणम्॥१७॥

---

## प्रदानवदेवतदुक्तम् ॥४२॥

पूर्वाधिकरणं प्रासङ्गिकम्। तत्पूर्वाधिकरणप्रस्तुतदहरविद्याविषयनिरूपणं क्रियतइतिसङ्गतिः। दहरविद्यायां 'तद्यइहात्मानमनुविद्यव्रजंती'ति दहराकाशस्योपासनमुक्त्वा 'एतांश्चसत्यान्कामानि' तिगुणानामपि पृथगुपासनं विहितम्। तत्रसंशयः– गुणचिन्तनेष्वपि तत्तद्गुणविशिष्टतया दहराकाशस्य चिन्तनमावर्तनीयं नेति प्राथमिकधर्मिचिन्तनेनैव पर्याप्त्यपर्याप्तिभ्यां संशये पूर्वपक्षः– धर्मी दहराकाशस्तावत्प्रथमं चिन्तनीयः। तदुपासनस्य प्रथमं पृथग्विधानात्। तदुपजीवनादेव धर्माणामुपासनासिद्धेस्तेषामुपासनार्थं पुनर्धर्मिचिन्तनं नावर्तनीयमिति। सिद्धान्तस्तु– प्रतिधर्मोपासनमावर्तनीयं धर्मिचिंतनम्। गुणिनोदहराकाशत्वेपि तस्यप्रथमं चिंतितत्वेपि तत्स्वरूपमात्रादपहतपाप्मत्वादिगुणविशिष्टाकाराणां भिन्नत्वात्।

यथा ‘ इन्द्रायराज्ञे पुरोडाशमेकादशकपालंनिर्वपे दिन्द्रायाधिराजायेंद्राय स्वराज्ञ ’ इति अत्रेंन्द्रस्यैकस्ययष्टव्यत्वेपि तस्यैवराजादिगुणविशिष्टत्वेपि तत्तद्गुणसंबन्धयाकारभेदात्प्रदानावृत्तिः क्रियते । तदुक्तंसङ्कर्षे– ‘ नानावा-देवतापृथक्त्वादि ’ ति । तन्नानाप्रदानाधिकरणमित्थमस्ति । त्रैधातवीये-ष्टिः । सा ‘ इन्द्रायराज्ञ ’ इत्यादिवचनविहितत्रिपुरोडाशा । तेषां पुरोडा-शानामुपर्युपर्यधिश्रयणं सर्वेषां युगपदवदानं च विहितम् । तेषां यद्यपि पूर्वार्धादवदानं प्रकृतिवत्कर्तुं शक्यम् । तथाऽपि मध्यादवदानं यथा कर्तुं न शक्यतमं पुरोडाशानां मध्ये नळकप्रवेशनाद्युपायेन मध्यादपि युगपदव-दानं ग्राह्यम् । एवंस्थिते प्रदानमपि युगपत्कर्तव्यं क्रमेणवेति संशये तेषां ‘अपृथक्प्रदानमवदानैकत्वा’दिति सूत्रेणावदानवत्प्रदानमपि अपृथग्युगपदेव कार्यमिति पूर्वपक्षः कृतः । तत्रेदं सूत्रं– ‘ नानावा देवतापृथक्त्वा ’ दिति । द्रव्याणां भेदात् विशिष्टरूपाणां देवतानां च भेदात्त्रिभिर्द्रव्यदेवतासम्बन्धैः कल्प्यानां त्रयाणां यागानां भेदात् तत्तद्देवतोद्देशेन क्रमिकाणि प्रदानानि कर्तव्यानीति सूत्रार्थः ॥

सङ्ग्रहकारिका ।

आनन्दादिविशिष्टधर्मिकलनादन्याहि धर्माष्टके<br>
धीः कार्या विहिता तदर्थमपि तत्स्यात्तंत्रानित्येति चेत् ।<br>
आवर्त्यं प्रतिधर्ममेव हविषश्शक्ये प्रदानं यथा<br>
तत्तद्धर्मविशिष्टरूपमितरद्यत्केवलाद्धर्मिणः ॥

इति प्रदानाधिकरणम् ॥१८॥

---

## लिंगभूयस्त्वात्तद्धि बलीयस्तदपि ॥४३॥

पूर्वाधिकरणप्रस्तुतदहरविद्योपास्यविशेषनिर्धारणविचारस्तत्प्रसङ्गात् क्रियत इति सङ्गतिः । तैत्तिरीयाः ‘ दह्रं विपाप्मं परवेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् । तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्य’मि-ति दहरविद्यां प्रकृत्याधीयते । ‘ सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् ।

विश्वं नारायणं देवमक्षरं परमं प्रभु' मित्यारभ्य 'स ब्रह्मा स शिवस्से-न्द्रस्सोऽक्षरः परमःस्वरा' डित्यन्तम् । किमत्र प्रकृतदहरविद्योपास्यो नारायण इति, निर्धार्यते, उत सकलपरविद्योपास्यो नारायण इति निर्धार्यते, इति। नारायणत्वविधानस्य दहरविद्योपास्योद्देश्यकत्वसकलविद्योपास्योद्देश्यकत्वानिर्णयात् संशये दहरविद्यायाः प्रकृतत्वादाद्यएव पक्षो युक्तः। अत एव नारायणानुवाके 'पद्मकोशप्रतीकाश' मित्यादिना दहरोपासनाविषयप्रपञ्चनमेव कृतमिति पूर्वपक्षः । सिद्धान्तस्तु— सकलपरविद्योपास्यनिर्धारणार्थोऽयमनुवाकः । तत्तद्विद्यागताक्षरशिवशम्भुपरब्रह्मपरंज्योतिः परतत्वपरमात्मादिशब्दनिर्दिष्टमुपास्यमिह तैरेव शब्दैरिहानूद्य तस्य नारायणत्वविधानात् । एवं भूयसीषु विद्यासु श्रुतैः शब्दैरुपास्यमनूद्य तस्य नारायणत्वविधानरूपलिंगभूयस्त्वात् नारायण एव सकलपरविद्योपास्य इति निर्णीयते । अत्र लिंगशब्दः चिह्नपर्यायो वाक्यमाचष्टे । न च द्वितीयान्तानामुद्देश्यविधेयभावान्वयबोधकत्वानुपपत्तिः । 'येनावृतं खं च दिवं महींच' इत्यादाविवेह द्वितीयान्तानां प्रथमार्थत्वात् । 'विश्वमेवेदं पुरुषः, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित' इत्यादिप्रथमान्तसामानाधिकरण्यात् । एवं च यथा 'ऐतदात्म्यमिदं सर्व' मिति सामान्येनाप्युक्तं सर्वात्मकत्वं सम्बोध्यश्वेतकेतावप्यस्तीति 'तत्वमसी'ति तस्मिन्नुपसंहृतम् , एवं सकलपरविद्योपास्यस्य प्रकृतदहरविद्योपास्यत्वमप्यस्तीति तत्र नारायणस्योपास्यत्वमुपसंहृतमिति न काचिदसङ्गतिः । प्रकरणाद्वाक्यानां बलीयस्त्वात् । 'सहस्रशीर्षं देव' मित्यादिवाक्यैर्नारायणस्य सकलपरविद्योपास्यत्वबोधनेऽपि नानुपपत्तिः । प्रकरणाद्वाक्यबलीयस्त्वमप्युक्तं पूर्वकाण्डे— 'श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षात्' इति ॥　　सङ्ग्रहकारिका ॥

प्रकृतदहरविद्योपास्यनिर्धारणार्थः प्रकटमुपरितत्संस्पृष्टऊर्ध्वानुवाकः ।
अनुचिततरमेतत्प्रक्रियायन्त्रितत्वं स खलु विविधवाक्यैस्सर्वविद्यानुयायी ॥

इति लिंगभूयस्त्वाधिकरणम् ॥

पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥४४॥

अतिदेशाच्च ॥४५॥

विद्यैव तु निर्धारणाद्दर्शनाच्च ॥४६॥

श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥४७॥

अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तं ॥४८॥

न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥४९॥

परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥५०॥

प्रकरणाद्बलीयसा वाक्येन नारायणानुवाकस्य सर्वविद्यासाधारण्यमुक्तम् । इह प्रकरणस्य बाधकाभावात् मनश्चितादयः क्रियामयक्रत्वनुप्रवेशिन इति प्रत्यवस्थानात्सङ्गतिः । वाजसनेयके अग्निरहस्यब्राह्मणे मनश्चितादयोऽग्नयस्समाम्नाताः । 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन्मनोमयान्मनश्चित' इत्यादिना मनश्चितो वाक्चितः प्राणचितश्चक्षुश्चितः श्रोत्रचितः कर्मचितोऽग्निचित इति च । पुरुषस्य शतसंवत्सरमित आयुषि षट्त्रिंशत्सहस्राणि दिनानि । तत्रैकस्मिन्दिने यावती मनोवृत्तिः तस्या एकैकाग्नित्वेसति मनश्चितोऽग्नयः षट्त्रिंशत्सहस्राणि सम्पद्यन्ते । एवं वाक्चितादयोऽपि वाग्व्यापारादिरूपाग्नयः प्रत्येकं षट्त्रिंशत्सहस्राणि सम्पद्यन्ते । तत्र कर्मचितो वागिंद्रियातिरिक्तकर्मेन्द्रियव्यापाराः देहव्यापारावा । अग्निचितो जाठराग्निव्यापाराः । एते मनश्चितादयः साम्पादिकाग्नयः किं क्रियामयक्रत्वन्वयिन उत विद्यामयक्रत्वन्वयिन इति विद्यामयक्रतुविधिकल्पनया तत्र श्रुतिलिंगवाक्यैर्मनश्चितादीनां विनियोगसत्त्वासत्त्वाभ्यां संशये पूर्वपक्षः— प्राक् 'असद्वा इदमग्रआसी' दित्यादिनेष्टकाचितोऽग्निः प्रकृतः । तेनाव्यभिचरितक्रतुसम्बन्धिनोपस्थापितः क्रियामयः क्रतुरिति तस्याङ्गभूता एते मनश्चितादयः स्युः । न तु विद्यामयस्य क्रतोः । तद्विध्यश्रवणेन । तस्यैवाभावात् । 'मनसैवाचीयन्त मनसैषुग्रहा अगृह्यन्त मनसास्तुवत मनसाशं-

सन् यत्किंचिद्यज्ञे कर्म क्रियते यत्किं च यज्ञीयं कर्म मनस्वैष तेषु मनोमयेषु मनश्चित्सुमनोमयं क्रियत' इति अग्निवत् विद्यामयानि क्रत्वङ्गान्येवहि श्रूयन्ते । न च विद्यामयः क्रतुविधिः कल्प्यः । कल्पकाभावात् । ननु 'तेहैते विद्याचित एवे'ति निर्धारणश्रुत्या 'विद्ययाहैवैत एवंविदश्चिताभवन्ती'ति च विवृतया विद्यामयक्रत्वन्वयोऽवसीयते । विद्यारूपत्वस्य सिद्धत्वेनावक्तव्यतया तस्या विद्यामयक्रत्वन्वयबोधनार्थत्वात् । तानिहैतान्येवंविदे सर्वदा सर्वाणि भूतानि चिन्वन्त्यपि स्वपत इति लिंगेनाप्यवसीयते । विद्यावते सर्वभूतैः क्रियमाणं सर्वकालव्यापिचयनं परिमितकर्तृकालयुक्तक्रियामयेष्टकचितकार्यद्वारेण क्रत्वनुप्रवेशमलभमानं विद्यामयक्रत्वनुप्रवेशे लिंगं भवति । एवंविदे चिन्वन्तीति पुरुषसम्बन्धप्रतिपादकेन वाक्येनापि तथाऽवसीयते । श्रुतिलिंगाभ्यां क्रियामयक्रत्वङ्गत्वे वारिते पुरुषसम्बन्धस्य विद्यामयक्रत्वङ्गत्वद्वारेण निर्वाह्यत्वात क्रत्वर्थत्वे पुरुषसम्बन्धाभावादिति चेत । मैवम् । अर्थवादिकश्रुतिलिंगवाक्यानां विद्यामयक्रतुविधिकल्पनया प्रकरणप्राप्तक्रत्वनुप्रवेशबाधकत्वायोगात् । अतोऽवधारणादिकं बाह्यसाधनानपेक्षापरत्वादिना कथञ्चिन्नेयम् । ननु प्रकरणे इष्टकचितेऽग्नौ समर्पिते तदवरुद्धे क्रतौ कथं विद्यामयस्याग्नेरवकाशइतिचेत, तेन विकल्पोभविष्यति। नन्वेककार्याणां विकल्पः । नचेष्टकचितस्याग्नेः कार्यमाहवनीयधारणं विद्यामयोग्निः कर्तुं शक्नोतीति चेत् उच्यते । नाग्निः क्रत्वंगम् । किं तु गोदोहनवत् फलार्थगुणः । 'अभागिप्रतिषेधा'दित्यर्थवादाधिकरणसूत्रे वार्तिककारैः 'पशुकामश्चिन्वीते' ति श्रुतिमुदाहृत्य तथा निर्णीतत्वात् । तथा च क्रियामयाग्नेः कार्यं पशुफलं विद्यामयाग्निनापि भवितुमर्हतीति न विकल्पानुपपत्तिः । तथाऽपि मानसस्य विद्यामयाग्नेः कथं क्रियामयक्रत्वंगत्वमितिचेत् मानसग्रहवदिति ब्रूमः । तथा हि— द्वादशाहे दशमेऽहनि 'अनयात्वापृथिव्यापात्रेण समुद्रं सरया प्रजापतयेत्वाजुष्टं गृह्णामी' ति मन्त्रग्राह्यःपृथिवीपात्रत्वादिध्यानयुक्तो मानसग्रहः श्रूयते। स च 'पत्नीसंयाज्यमानसाय प्रसर्पन्ती'ति विहितो दशमस्याह्नोऽङ्गमिति पूर्वतंत्रे व्यवस्थापितम् । तथैव विद्यामयस्याग्नेः

क्रियामयक्रत्वंगत्वं घटत इति न कदाचिदनुपपत्तिः । अपि च 'तेषामेकैक एव तावान् यावानसौ पूर्व'इति मनश्चितादीनां मध्ये एकैक एव विद्यामयोऽग्निः पूर्वप्रस्तुतेष्टकचिताग्निसमानवीर्यइति अतिदेशोऽपीष्टकचिताग्न्येककार्यत्वेन क्रियामयक्रत्वनुप्रवेशं गमयति । तस्मात् क्रियामयक्रत्वंगान्येव मनश्चितादय इति । एवंप्राप्ते सिद्धान्तः— अवधारणादिभिर्मनश्चितादयो विद्यामयक्रत्वङ्गानि। नचबाह्यसाधनानपेक्षमवधारणम् । विद्यायाबाह्यानपेक्षत्वस्य स्वतस्सिद्धत्वेन तद्विषयत्वे वैयर्थ्यात् । न तु विद्यामयक्रतोरसिद्धिः । श्रुतविध्युद्देशानामर्थवादानामन्यार्थदर्शनरूपत्वेपि अश्रुतविध्युद्देशेषु मानसस्तोत्रशस्त्रादिषु 'वचनानित्वपूर्वत्वा' दिति न्यायात् विधिकल्पनावश्यम्भावेन तत एव तदंगस्य विद्यामयक्रतोरपि कल्प्यत्वात् । सोमेवचनाद्भक्षो न विद्यत इति । पूर्वतन्त्राधिकरणे हि सोमे शेषभक्षो नास्ति वचनाभावात् । 'सर्वतः परिहारमाश्विनं भक्षयती'त्यादिवचनानां गुणविधानार्थत्वात् । न च गुणविधानस्य भक्षणविधिमन्तरेणानुपपत्तिः । तस्यैच्छिकभक्षणाश्रयत्वोपपत्तेः। 'प्राङ्मुखोन्नानि भुञ्जीते'त्यादिवचनविधेयदिङ्नियमादीनामैच्छिकभोजनाद्याश्रयत्वदर्शनात् इति पूर्वपक्षं कृत्वा विशिष्टविधिरूपाण्येव तानि भक्षणस्याप्यपूर्वत्वेन विध्यर्हत्वात् पक्षप्राप्तानुवादे नित्यवत् श्रवणविरोधादिति 'वचनानित्वपूर्वत्वा'दिति सूत्रेण सिद्धांतितं । किं च स्तोत्रशस्त्रादिवत् भक्षणादिकमपि मानसमिह विधेयं 'यत्किंचन यज्ञे कर्म क्रियते यत्किं च न यज्ञे कर्मे'ति द्विरुक्त्या यज्ञानुबन्धि यद्गुणजातं तस्य सर्वस्यापि ग्रहणात्। तेन भक्षणयुक्तफलचमसवदभिषवयुक्तपूतीकवच्च क्रत्वर्थं भवत् कथं वारणीयम् । न च क्रियामयक्रत्वर्थेन तन्निर्वाहः । क्रियामयस्य क्रतोः क्रियामयभक्षणाद्यवरोधात् । न च तैर्विकल्पसम्भवः । मानसभक्षणस्य क्रियामयकार्यत्वाभावात् । तस्माद्यथा दहरविद्यादि क्रियामयात्क्रतोः पृथग्भूतं तथा यज्ञानुबन्धिभिर्विद्यामयग्रहस्तोत्रशस्त्रादिभिर्विद्यामयः क्रतुरनुवादसरूपविधिकल्प्योऽवगम्यमानः पृथग्भूतः । न च तस्य फलाश्रवणाद्वैयर्थ्यम् । 'तेषामेकैकएव तावान्यावानसौ पूर्व' इत्यतिदेशेने-

ष्टकचितस्याग्नेः स्वक्रतुद्वारेण यत्फलं तदेव मनश्चितादीनामपि स्वक्रतुद्वारेण फलमित्यवगमात् । नचानेनैवातिदेशेन मनश्चितादीनामिष्टकचिताग्निसाम्यावगमात्तद्वत्क्रियानुप्रवेशः । यतः कुतश्चित्साम्यादतिदेशोपपत्त्या सर्वसाम्यानपेक्षणात् । न हि मनश्चितादिब्राह्मणात् पूर्वब्राह्मणे 'स एष एव मृत्यु'रित्यादित्ये मृत्युशब्दोयत्किंचित्संहर्तृत्वमादित्यस्याप्यस्तीति तावन्मात्रेणापर्याप्तस्तस्य मृत्युलोकावस्थितिमप्यपेक्षते । नन्विह यदि विद्यामयः क्रतुर्विवक्षितः, तदंगत्वं च मनश्चितादीनां,तदाऽग्रे बृहदारण्यकएवैतदाम्नानं स्यात् । नत्वग्निरहस्ये । अतोऽग्निरहस्याम्नानात् प्रकृतक्रियामयक्रत्वंगतावगम्यतइतिचेत् । नायं नियमः, यद्बृहदारण्यकएव विद्यानाम्नानमिति परेण ब्राह्मणेन 'अयंवाव लोक'इति चितेऽग्नौ पृथिवीदृष्टिविधानस्य 'अश्मन्नूर्जमिति परिषिंचती'ति विहिताग्निपरिषेचनजले समुद्रजलदृष्टिविधेः मनुष्या यजुष्मत्य इष्टका इत्यादिनाऽग्न्यनुबन्धिषु भूलोकानुबंधिवस्तुविशेषदृष्टिविधीनां च दर्शनात् । एवं विद्यानामप्यग्निरहस्ये समाम्नानं मनश्चितादिसंपादनीयानामग्न्यंगानां भूयस्त्वात् । सांगेष्टकचिताग्निसमाम्नानसन्निधानेन हि तेषामवगमे बुद्धिसौकर्यं भवति । अतस्तत्सन्निधाने मनश्चिताद्यनुबन्धः कृतः ॥　संग्रहकारिके ।

प्रस्तुतेष्टकचितेनाहिक्रतौ धीपदं यदि मनश्चितादिकः ।
अङ्गभावमयति क्रियामये द्वादशाहइव मानसग्रहः ॥
अस्य तावदवधारणादिकं वारयत्यनुमिताक्रियाङ्गताम् ।
धीमयः क्रतुरिहास्ति कल्पितस्तेन सोऽयमयते तदङ्गताम् ॥

इति पूर्वविकल्पाधिकरणम् ॥२०॥

---

## एकआत्मनश्शरीरेभावात् ॥५१॥

## व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥५२॥

पूर्वाधिकरणं प्रासङ्गिकमिति तत्पूर्वाधिकरणेन सङ्गतिरुच्यते । तत्र सर्वासु विद्यासु पर एवानुसन्धेयइत्युक्तम् । तथा तद्विशेषणत्वेनापहतपा-

ष्मत्वादियुक्तः प्रत्यगात्माऽप्यनुसन्धेयो निरूप्यत इति । सर्वासु विद्यासु परब्रह्मरूपोपास्यवत् प्रत्यगात्मरूपोपासकोऽपि तद्विशेषणत्वेनानुसन्धेयइति 'आत्मेतितूपगच्छन्ती' ति चतुर्थाध्यायाधिकरणे वक्ष्यते। किमयं प्रत्यगात्मा सांसारिककर्तृत्वभोक्तृत्वादियुक्तोऽनुसन्धेयः, किं वा मुक्तिदशाभाव्यपहतपाप्मत्वादिविशिष्टोऽनुसन्धेय इति तत्क्रतुन्यायस्य प्रत्यगात्मसाधारण्यासाधारण्याभ्यां संशये पूर्वपक्षः। उपासनदशायामुपासकस्य शरीरेवर्तमानत्वात्तद्दशायां यद्रूपं तदेवानुसन्धेयम्। तदनुसन्धानेनैव फलसिध्युपपत्तेः। न हि कर्मठानां स्वर्गार्थिनां स्वर्गानुभवदशायां यद्रूपं तत्कर्मानुष्ठानदशायामनुसन्धातव्यम्। तदविशेषादिहापि तथैव। ननु 'यथाक्रतु' रित्यादिविशेषवचनमस्तीति। मैवम्। तस्य 'तं यथायथोपासत' इति वचनांतरानुसारेणोपास्यविषयत्वादिति। सिद्धान्तस्तु। मोक्षदशायां यो विशेषोऽपहतपाप्मत्वादिस्तद्विशिष्टोऽनुसन्धेयः। जीवस्यापहतपाप्मत्वादिरूपापत्तेस्तत्क्रतुन्यायेन तथानुसन्धानसद्भावभावित्वात्। 'तं यथायथोपासत' इत्यत्र तच्छब्दस्य प्रत्यगात्मविशिष्टविषयत्वात्। प्रत्यगात्मनोऽपि ब्रह्मशरीरतयोपास्यकोटिनिक्षिप्तत्वेन तस्य तद्विशिष्टविषयत्वावश्यम्भावात्। अतो यथोपासनारूपाद्ब्रह्मोपलब्धिर्यथावस्थितब्रह्मस्वरूपविषया तथात्मोपलब्धिरपि यथावस्थितात्मस्वरूपविषयैव वक्तव्या। कर्मस्वात्मस्वरूपानुसन्धानं तु न कर्माङ्गम्। कर्मानुष्ठानमात्रं हि स्वर्गादिफलाय चोद्यते देहातिरिक्तात्मज्ञानमात्रं तत्रापेक्षितमिति वैषम्यम्॥

सङ्ग्रहकारिका।

विद्यासु जीवः परमात्मनोऽयं विशेषणत्वेन परासु चिंत्यः।
कर्तृत्वभोक्तृत्वमुखावरुद्धस्तस्या दशायां हि तदस्ति तस्य॥
प्राप्त्यापहतपाप्मत्वप्रमुखैस्साहितो गुणः।
चिन्त्योयं तत्क्रतुन्यायाद्विशेषणविशेष्यगात्॥

इति शरीरे भावाधिकरणम्॥२१॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥५३॥

## मन्त्रादिवद्वाऽविरोधः ॥५४॥

यत्रयत्र ब्रह्मणः उपास्यत्वं तत्रतत्र शुद्धस्वरूपस्य जीवस्योपास्यत्वमुक्तम् । एवं यत्रयत्र शाखायामुद्गीथाद्याश्रयमुपासनमुक्तं तत्रतत्र शाखायां तत्तच्छाखागतोद्गीथस्यैवोपास्यत्वमिति शङ्कया सङ्गतिः । सन्त्युद्गीथादिक्रत्वङ्गाश्रया विद्या नानाशाखास्वाम्नाताः । उद्गीथादयश्च प्रतिशाखं प्रायस्स्वरवर्णभेदेन भिद्यन्ते । एवं च यस्यां शाखायां उद्गीथाद्याश्रया उपासना विहितास्तास्तत्तच्छाखागतोद्गीथाद्याश्रयाएव कार्या इति नियमः, उत सर्वशाखान्तरेषु स्वरवर्णभेदभिन्ना य उद्गीथादयस्तदाश्रया अपि कार्या इति अनियम इति सर्वासु शाखासु शाखान्तराम्नातोद्गीथादीनां सन्निधानं नास्ति अस्तिवेत्यनिर्णयात् संशये पूर्वपक्षः । तत्तच्छाखागतोद्गीथाद्याश्रया एव तत्तच्छाखाम्नातोद्गीथाद्याश्रयोपासनाः कार्या इति नियमो युक्तः । उद्गीथादिश्रुतेस्सन्निहितविशेषपर्यवसानात् । नचाविशेषश्रुतेः सन्निधिना सङ्कोचो न युक्त इति वाच्यम् । 'गामानये' त्यादिषु गवादिशब्दानां बुद्धिसन्निहितव्यक्तौ सङ्कोचदर्शनादिति पूर्वपक्षः ॥

राद्धान्तस्तु— उद्गीथादिश्रुत्यविशेषात् न सङ्कोचो युक्तः । गामानयेत्यादिव्यवहारे सर्वगोव्यक्त्यानयनासम्भवात् गोशब्दश्रुतेरेव सङ्कोचापेक्षाऽस्तीति तदपेक्षितसङ्कोचस्सन्निधिना क्रियते । न च सङ्कोचकापेक्षाऽस्ति । यत्किंचिदुद्गीथाद्याश्रयतयोपासनोपपत्तेः । न हि गामानयेति वदतो गोव्यक्तिविशेषविवक्षावत् 'उद्गीथमुपासीते' त्यादिविधीनामुद्गीथादिविशेषविवक्षायां प्रमाणमस्ति । यद्युच्येत निर्विशेषसामान्येन व्यवहारायोगादनुष्ठानार्थमवश्यं यत्किंचिद्विशेषपर्यवसानावश्यम्भावात् सन्निहितविशेषपर्यवसानं स्यात् । यथा 'अक्ताश्शर्करा उपदधाती' त्युपक्रमगते विधिवाक्येऽञ्जनसाधनस्नेहद्रव्यमात्रप्रतीतौ निर्विशेषसामान्येन व्यवहारायोगात् विशेषपर्यवसानापेक्षायां चरमश्रुतेन 'तेजोवै घृत' मित्यर्थवादेन समर्पिते घृते पर्य-

वसानमिति । एवं तर्हि सर्वास्वपि शाखासु शाखान्तराम्नातानामप्युद्गीथादीनां सन्निधानमविशिष्टमिति ब्रूमः । सर्वास्वपि शाखासु सर्वशाखाप्रत्ययन्यायेन क्रतोरैक्यात् । तदेकत्वे च क्रत्वङ्गानां सर्वेषां सन्निधानावश्यम्भावात्। सर्वाङ्गसहितो हि क्रतुः सर्वशाखाप्रत्ययन्यायविषयः । अत एव वेदान्तराम्नातानां 'अग्नेर्वैर्होत्रंवेरध्वर'मित्यादिमन्त्राणां वेदान्तरे परिग्रहः 'अजोऽग्नीषोमीय'इति शाखान्तराम्नातछागजातेः 'यदग्नीषोमीयं पशुमालभत'इति पशुमात्रोपदेशवति शाखान्तरे परिग्रह इत्यादि दृश्यते । तस्माद्या उद्गीथाश्रया आप्त्यादिविशिष्टप्राणाकाशादिविशिष्टोपासनाः, याश्च 'लोकेषु पञ्चविधं सामोपासीत अयंवाव लोक एषोऽग्निचित' इत्यादिषु लोकपृथिवीलोकादिदृष्टिविशिष्टसामाग्न्याद्युपासनाः, तासु सर्वास्वपि शाखाभेदेन स्वरवर्णभेदभिन्नानि सामानि शाखाभेदेनाकृतिभेदभिन्नाश्चित्याग्नयश्चाश्रया भवन्तीत्यादि द्रष्टव्यम् ॥ संग्रहकारिका ।

उद्गीथाद्याश्रया विद्यास्तत्तच्छाखास्थगोचराः ।
मैवं सान्निध्यमन्येषामप्यस्त्यङ्गमुखागताः ॥

इति अङ्गावबद्धाधिकरणम् ॥२२॥

---

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥५५॥

पूर्वाधिकरणे सामोद्गीथादिकं प्रस्तुतम् । तत्र यथा 'समस्तस्य खलु साम्न उपासनं साधु' 'ओमित्येतदक्षरमुद्गीथमुपासीते'ति श्रुतिद्वयवशात् समस्तस्य व्यस्तस्यचोपासनं, एवं वैश्वानरविद्यायामपीति सङ्गतिः । वैश्वानरविद्यायां स्वर्लोकादित्यवाय्वाकाशपृथिवीनां प्रत्येकं वैश्वानरत्वं व्यस्तानां तेषामुपासनेषु प्रत्येकमाख्यातं फलं च श्रूयते। स्वर्लोकादिपृथिव्यन्तं त्रैलोक्यशरीरो वैश्वानरश्च व्यस्तोपासननिंदापूर्वकं समस्तस्य तस्योपासनं तत्फलञ्च श्रूयते । तत्र किं व्यस्तानामेवोपासनं कार्यम् , उत व्यस्तानां समस्तस्य च, अथवा समस्तस्यैवेति पक्षत्रयबलाबलानवधारणाद् संशये पूर्वपक्षः । व्यस्तानामुपासनं कार्यम् । 'एष वै सुतेजा आत्मा वैश्वानर

इत्यादिवाक्यैस्सुतेजश्शब्दाद्युक्तानां द्युप्रभृतीनां प्रत्येकं वैश्वानरत्वप्रतिपादनात् 'अत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्त' इति द्युप्रभृतिषु प्रत्येकं वैश्वानरबुध्योपासनानां अन्नादनादिरूपतत्फलानां च श्रवणाच्च । अग्रे 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त' इति वाक्यं द्युप्रभृतिदेशावच्छिन्नपरिमाणस्य त्रैलोक्यशरीरस्य वैश्वानरस्योपासनान्तरविधायकं न भवति । किं तु व्यस्तोपासनसमुदायानुवादकम् । ननु 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती'ति समस्तोपासनस्य सर्वलोकसर्वभूतसर्वात्मभोग्यब्रह्मानन्दरूपफलश्रवणात् समस्तोपासनविधिरावश्यकइतिचेत् तर्हि व्यस्तसमस्तविषयद्विविधमुपासनं कार्यमित्यस्तु । व्यस्तोपासननिंदा नहिनिंदान्यायेन समस्तोपासनप्रशंसापरा न तु व्यस्तोपासननिषेधार्था इत्युपपत्तेः । नन्वौपमन्यवादय उद्दालकषष्ठाः केकयराजमुपसंगम्य 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूही'ति पृष्टवन्त इत्युपक्रमात् कैकयराजोपदिष्टं स्वर्लोकादिपृथिव्यन्तशरीरं वैश्वानरं तदुपासनफलञ्चावगतवन्त इत्युपसंहाराच्च उपक्रमोपसंहारैकरूप्यावगतमेकवाक्यत्वं व्यस्तसमस्तविषयानेकोपासनाविधिसमाश्रयणे बाध्येतेति चेत् न । भूमविद्यान्यायेन तदबाधोपपत्तेः । भूमविद्यायां हि सत्यशब्दोक्तस्य ब्रह्मणस्सर्वतो भूयस्त्वप्रतिपादनार्थं तदवधित्वेनोपन्यस्यमानेषु नामादिप्राणान्तेष्वप्युपासनाविधिरङ्गीकृतः । न च तत्र 'श्रुतंह्येवमे भगवद्दृशेभ्यस्तरति शोकमात्मविदि'ति 'तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमार' इत्युपक्रमोपसंहारैकरूप्यावगतैकमहावाक्यभावस्य बाधः । एवमिहापि त्रैलोक्यशरीरस्य वैश्वानरस्य प्रतिपादनार्थं तदवयवत्वेनोपन्यस्यमानेषु स्वर्लोकादिषु प्रासङ्गिकोपासना तत्फलाभिधानमिति न ततो महावाक्यैक्यबाधः । तस्मात्समस्तस्यैवोपासनं कार्यमित्येतन्नयुक्तमिति ॥

एवं प्राप्ते सिद्धान्तः । समस्तस्यैवोपासनं कार्यम् । उपक्रमोपसंहाराभ्यामेकवाक्यत्वावगमानुरोधेनावयवविशेषेषूपास्तितत्फलवचनानां स-

मस्तोपासनातत्फलैकदेशानुवादमात्रमिति जातेष्टिवाक्यन्यायेन कल्पनोपप-त्तेः। जातेष्टिवाक्ये हि 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यस्मिञ्जा-तएतामिष्टिं निर्वपति पूतएव तेजस्व्यन्नादइन्द्रियावी पशुमान्भवती' त्युप-क्रमोपसंहारैकरूप्यावगतैक्यमहावाक्यभावे 'यदष्टाकपालो भवति गायत्र्यै-वैनं ब्रह्मवर्चसेन पुनाति यन्नवकपालस्त्रिवृतैवास्मिन् तेजो दधाति यद्दशक-पालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मिन्निंद्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाती' ति वाक्यानां द्वा-दशकपालपुरोडाशतत्फलैकदेशानुवादत्वं पूर्वतन्त्रे निर्णीतम्। अतस्समस्त-स्यैवोपासनं कार्यम्। तथैव व्यस्तोपासनेष्वनर्थं ब्रुवती श्रुतिरपि दर्श-यति वैश्वानरबुध्योपासीनं प्रति 'मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य'इति निंदावचनम्। एवमन्येष्वपि चतुर्षु निंदावचनानि दृश्यन्ते। नामाद्युपा-सनेषु निंदावचनाभावात्तान्यभ्युपगम्यन्त इति वैषम्यम्॥

सङ्ग्रहकारिकाः॥

व्यस्तो वैश्वानरश्चित्यः प्रत्येकं फलवर्णनात्।<br>
समुदायानुवादोऽस्तु कृत्स्नोपास्तिफलश्रुतिः॥<br>
यद्वा कृत्स्नोऽप्युपास्योऽस्तु श्रुतेस्तत्रापि भावतः।<br>
भूमाधिकारे नामादेर्भूम्नश्चोपासने यथा॥<br>
समस्तएवतूपास्यः तद्व्यस्तोपास्तिनिंदनात्।<br>
अवयुत्यानुवादाःस्युःव्यस्तोपास्तिफलोक्तयः॥<br>
नामादीनामुपासातु नैव श्रुत्यापि निंदिता।<br>
भूमविद्या फलोत्कर्षावधित्वेनाप्यपेक्षिता॥

इति भूमज्यायस्त्वाधिकरणम्॥२३॥

---

## नानाशब्दादिभेदात्॥५६॥

स्वर्गलोकादिसमस्तावयवविषयतया वैश्वानरविद्याया इव तत्तद्वि-द्याम्नातसकलगुणविषयतया सर्वासां ब्रह्मविद्यानां ऐक्यमिति शङ्कया सङ्ग-

तिः । नानाशाखानानाप्रकरणाम्नातानां सद्विद्यानन्दमयविद्याप्रतर्दनविद्या-शाण्डिल्यविद्यादीनामैक्यं भेदोवेति वेद्यब्रह्मैक्यात्तत्तत्प्रकरणव्यवस्थित-गुणभेदाच्च संशये पूर्वपक्षः । वेद्यस्य ब्रह्मणो रूपस्यैक्यात् ब्रह्मप्राप्तिरूपफ-लैक्याच्च विद्यानामैक्यमिति । ननु 'इन्द्राय राज्ञ' इत्यत्र हविःप्रदानरू-पस्य यागस्य सर्वत्रैकरूपत्वेऽपि यष्टव्यस्येन्द्रस्यैकत्वेऽपि राजादिगुणभेदा-द्यागभेदः 'प्रदानवदेव तदुक्त' मित्यधिकरणे सङ्कर्षसिद्ध उदाहृतः । तेनैव न्यायेन विद्यानां भेदस्सिध्यतीति कथमिह पूर्वपक्षः । न च दहरशाण्डि-ल्यविद्यादीनां गुणभेदात् सत्यविद्यादीनामक्ष्यादित्यादिस्थानभेदाच्च भेद-सिद्धावपि शब्दान्तरप्रयुक्तो भेदः क्वापि न निरूपित इति तन्निरूपणार्थोयं पूर्वपक्ष इति वाच्यम् । यजति ददाति जुहोतिवदपर्यायधातुनिष्पन्नाख्या-तरूपस्य शब्दान्तरस्यात्राभावात् 'ध्यायेदुपासीत क्रतुं कुर्वीते' त्यादिषु ध्यायत्यर्थादीनां पर्यायत्वात् । उच्यते– भक्तिरूपाणां दहरादिविद्यानां न्यासविद्यायाश्च शब्दान्तरेणापि भेदोऽस्तीति दर्शयितुं सर्ववेदान्तप्रत्यया-धिकरणदर्शितमविधेयज्ञानवादनिराकरणं दृढीकर्तुंचायं पूर्वपक्षो दर्शितः । शब्दान्तरगुणभेदा …….. मधुविद्योपकोसलविद्यादिष्वभ्युदयमिश्रा ब्रह्म-प्राप्तिःफलम् । ज्योतिर्विद्यादिषु चक्षुष्यत्वाद्यैहिकं फलमिति फलभेदात् सद्विद्याक्षरविद्यादिसमाख्याभेदाच्च प्रतिप्रकरणं विद्याभेद इति सिद्धान्तः ॥

संग्रहकारिकाः ॥

सर्वासां ब्रह्मविद्यानां रूपं ब्रह्मफलं च तत् ।
अतो न भेदो नैवन्ताः नानाशब्दादिभेदतः ॥
न्यासोपासनयोस्तावच्छब्दस्स्पष्टं विभज्यते ।
उपासनेषु रूपं च तत्तद्ब्रह्मगुणात्मकम् ॥
फलं च मधुविद्यादौ मिश्रितं क्वचिदैहिकम् ।
सदक्षराद्युपपदैस्समाख्या च विभिद्यते ॥

इति शब्दादिभेदाधिकरणम् ॥२४॥

## विकल्पोऽविशिष्टफलत्वात् ॥५७॥

## काम्यास्तु यथाकामं समुच्चीयेरन्नवापूर्वहेत्वभावात् ॥

विद्यानां भेदे सिद्धे विकल्पसमुच्चयचिंतेति संगतिः । किमासां विकल्प एव उत समुच्चयोऽपि संभवतीति ब्रह्मप्राप्तिफलस्यैकरूप्यवैलक्षण्याभ्यां संशये पूर्वपक्षः । फलातिशयलिप्सया समुच्चयोऽपि संभवति । न च ब्रह्मानन्दानुभवरूपस्य फलस्यैकरूपत्वात् तस्मिन्नतिशयासम्भवः । 'जक्षत्क्रीडन्रममाण' इत्यादिश्रुतिप्रतिपन्नेषु जक्षणादिफलेष्वतिशयसंभवात् 'उपस्थितेऽतस्तद्वचना' दिति कामाद्यधिकरणसूत्रेण जक्षणादीनामपि मुक्तानुभाव्यविद्याफलत्वस्योक्तत्वादुपास्यगुणतारतम्यवतीनामनियतकालप्रायणपर्यन्तं यदाकदाचिदारभ्यानुवर्तनीयानां विद्यानामनुष्ठितकर्मतारतम्यप्रयुक्तफलतारतम्यावश्यम्भावात् । न च ब्रह्मविद्यानामाप्रयाणं अहरहरनुवर्तनीयतयैकविद्यानुष्ठानं समाप्य विद्यान्तरारम्भायोगात् समुच्चयासम्भवः । प्रत्यहं समयभेदेनानेकविद्यानुष्ठानोपपत्तेः । ननु 'आप्रयाणात्तत्रापि हि दृष्ट' मित्यधिकरणे प्रत्यहं निरन्तरं विद्यानुष्ठेयेति वक्ष्यते । किं तु प्रत्यहं विद्यानुष्ठेयेत्येतावदेव वक्ष्यते । निरन्तरानुष्ठाने नित्यानां विद्यासहकारिणां च कर्मणामारम्भणसंशीलनस्य च निरवकाशत्वापत्तेः । ननु जक्षणरमणादिश्रुतिः 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ती' त्यादिपित्रादिसृष्टिश्रुतिः 'कामान्नीकामरूपी' त्याद्यभिलषितसकलभोग्यवस्त्ववाप्त्यभिलषितसकलरूपपरिग्रहादि श्रुतिः 'तेषां सर्वेषु लोकेषु कामचारोभवती' त्यादि तत्तल्लोकसम्भावितसकलभोगभोक्तृत्वश्रुतिरित्येवमादिका यावती मुक्तसम्पद्विषया श्रुतिः, सा सर्वापि मुक्तस्य ब्रह्मानुभवव्यतिरिक्तफलान्तरबोधनार्था न भवति, किं तु ब्रह्मानुभवान्तर्गतफलप्रदर्शनार्थैव । सर्वस्यैवास्य ब्रह्मविभूत्यन्तर्गतत्वात् सविभूतिकब्रह्मानुभवस्यैव मुक्तभोग्यफलताया जगद्व्यापारवर्जाधिकरणे वक्ष्यमाणत्वादिति चेत् । पितृमातृभ्रातृस्वस्रादिसकलसृष्टौ कामनानुसारेण कदाचित्तेषु कतिपयसृष्टौ च विभूतितारतम्यात् । विभूतेश्च सुखरूपत्वस्य प्रागुक्तत्वात् स विभूतिकब्रह्मानुभव एव तारतम्यं सम्भवतीति

न कर्मभूयस्त्वप्रयुक्तफलभूयस्त्वन्यायस्यात्र निरवकाशता। अतः फलभूयस्त्वापेक्षया समुच्चयोऽपि सम्भवतीति। एवंप्राप्ते सिद्धान्तः॥

इत्थं विभूतितारतम्यं न निर्धारयितुं शक्यम्। यावन्तो मुक्तास्तैस्सर्वैरपि सृष्टफलविशिष्टं ब्रह्मसृष्टसकलविभूतिविशिष्टं हि ब्रह्मानुभूयते। तथा चैकस्य मुक्तस्य स्वसृष्टाल्पत्वे मुक्तान्तरसृष्टैः ब्रह्मसृष्टैश्च ब्रह्मणि विभूतिरेकरूपा भवेत्। अस्तु वा समयभेदेन विभूतितारतम्यात् सविभूतिकब्रह्मानन्दानुभवे तारतम्यं, तथाऽपि तदेकैकयाऽपि विद्यया भवतीति तदर्थं न समुच्चयापेक्षाऽस्ति। समुच्चयाभाव एव च विद्यातत्सहकारिकर्मानुष्ठानकालव्यतिरिक्ते सर्वस्मिन्कालेऽप्येकैकस्या विद्यायाः कर्तव्यं तदारम्भणसंशीलनमपि सामञ्जस्यं लभते। तस्मात् ब्रह्मप्राप्तिफलकानां विद्यानां न समुच्चयः। एवं च विद्यानां गुणतारतम्येन तदनुष्ठानकालतारतम्येन च भवदपि साधनतारतम्यं न फलतारतम्यप्रयोजकम्। एकग्रामप्राप्तिसाधनऋजुसुपथांनृजुकपथभेदवदिति समाधेयम्। एवं ब्रह्मप्राप्तिफलानामेव न समुच्चयः। काम्यानां तु विद्यानां फलभूयस्त्वापेक्षया स्वर्गार्थकर्मणामिव समुच्चयोऽपि सम्भवत्येव॥

संग्रहकारिके।

ब्रह्मप्राप्तिफला यथारुचि समुच्चित्याप्यनुष्ठेयतां
यांतु स्वर्गफलक्रियावदिति नाशंक्यं फलाभेदतः।
एतासां प्रमितं फलं हि परमं साम्यं परब्रह्मणा
तच्चानन्दमहाम्बुधौ निरवधौ सर्वात्मना मज्जनम्॥
विद्या बह्वल्पगुणा भवन्तु बह्वल्पकालाश्च।
अध्वानइव तथाऽपि प्राप्याभेदो न युज्यते नैव॥

इति विकल्पाधिकरणम्॥२९॥

---

**अङ्गेषु यथाश्रयभावः॥५९॥**

**शिष्टेश्च॥६०॥**

**समाहारात्॥६१॥**

## गुणसाधारण्यश्रुतेश्च ॥६२॥

## न वा तत्सहभावाश्रुतेः ॥६३॥

## दर्शनाच्च ॥६४॥

काम्ये मुक्तानां यथाकामं विकल्पस्समुच्चयोवेत्युक्तम् । तथोद्गीथादिविद्यानां यथाकाममनुष्ठानमुच्यत इति सङ्गतिः । उद्गीथाद्युपासनानि पर्णतादिवत् क्रतुनियतानि उत गोदोहनादिवदनियतानीति क्रत्वर्थपुरुषार्थत्वाभ्यां संशये पूर्वपक्षः । क्रत्वर्थतया पर्णतान्यायएवात्र युक्तः । न तु पुरुषार्थतया गोदोहनन्यायः । 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्यादिविधिवाक्ये फलाश्रवणात् विधिवाक्यस्थफलसम्बन्धे क्रत्वर्थत्वाभावः । विधिवाक्यस्थफलसम्बन्धविरहे क्रत्वर्थत्वमिति नियमस्य गोदोहनादिषु पर्णतादिषु च दृष्टत्वात् । गोदोहनवाक्यइव 'यदेव विद्ययाकरोती'ति वाक्ये फलसम्बन्धबोधकविध्यश्रवणाच्च । 'उद्गीथमुपासीते'त्युद्गीथांगतया विधानाच्च । उद्गीथमिति द्वितीयाश्रुत्याह्युद्गीथस्य शेषित्वप्रतीतेस्तच्छेषत्वेन उपासनं विधीयते व्रीहिशेषत्वेनेव प्रोक्षणं । उपासनानामुद्गीथादिद्वारा क्रत्वर्थत्वे लिंगमपि दृश्यते । 'होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरन्ती'ति छान्दोग्ये 'य उद्गीथस्सप्रणवो यः प्रणवस्स उद्गीथ' इत्युद्गातुः प्रणवोद्गीथैक्योपासनं विहितम् । तत्रोद्गीथावयव ओङ्कार उद्गीथः, होतृशंसनीयानामृचामन्ते निवेशनीय ओङ्कारः प्रणवः, तयोरैक्योपासनविधेरर्थवादोऽयं होतृषदनादित्यादिः । अस्यार्थः— उद्गीथमुद्गीथप्रणवैक्योपासनहीनमुद्गीथं होतृषदनाद्धोतृकर्मणः होत्रा सम्यक्प्रयुक्ताच्छंसनादनुसमाहरन्ति समादधति । एवमिदमुद्गीथोपासनहानावन्येन समाधानवचनमुद्गीथोपासनस्य क्रत्वर्थतया नियमेनोपादेयत्वे लिंगम् । तथा गुणसाधारण्यश्रुतेश्च तस्य नियमेनोपादेयत्वमवगम्यते । 'तेनेयं त्रयीविद्या वर्तते । ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायती'ति । अत्र हि तेनेति सर्वनामप्रकृतोङ्कारस्योपासनविशिष्टस्यैव परामर्शः, तथैव प्रकृतत्वादिति । एवं नियमरूपयुक्त्या श्रुत्योपासनहानावन्याधीनसमाधानोक्तिलिंगेन गुणसाधारण्यश्रुत्याचोत्थितमधिकशङ्कान्तरं निराकर्तुमिदमधिकरणमिति न त-

न्निर्धारणानियमाधिकरणेनास्य गतार्थता। अधिकशङ्कानिराकरणस्य तदनन्तरमेव कर्तव्यत्वेपि सङ्गतिविशेषादधिकरणान्तरप्राप्तेस्तदनन्तरमिदमधिकरणं कृतम्। एवंप्राप्ते सिद्धान्तः– उपासनानां न क्रत्वर्थत्वम्। तदश्रवणात्। तदश्रवणंच तद्विरोधिनो 'यदेव विद्यया करोती'ति फलार्थवत्त्वस्यैव श्रवणात्। स्ववाक्यस्थत्वं वाक्यान्तरस्थत्वं च फलत्वाफलत्वयो र्न प्रयोजकं किंतु विलम्बमात्रं विलम्बद्वयं च। पर्णतावाक्ये हि विलम्बद्वयमस्ति। पर्णताया अपापश्लोकश्रवणं प्रति साधनत्वाश्रवणात् फलस्य वाक्यान्तरस्थत्वाच्च। गोदोहनवाक्येत्वन्यतरविलम्बएव फलस्य स्ववाक्ये फलश्रवणेन पशुंप्रति गोदोहनस्य साधनतामात्रस्य कल्प्यत्वात्। गोदोहनेनेति तृतीयाश्रुतिर्हि न फलकरणत्वबोधनार्था। सिद्धरूपस्य गोदोहनस्य फलसिध्यर्थानुष्ठानविषयत्वायोगेनानुष्ठेयत्वनिर्वाहार्थं तृतीयावगतक्रियानिर्वर्तकत्वरूपकरणकारकतापन्नतया साध्यरूपत्वं निर्वहणीयमिति तृतीयाश्रुतेरन्यत्र विनियोगात्। एवं पर्णताविधिवाक्ये विलम्बद्वयसम्भवेन वाक्यस्वरससिद्धांगत्वाबाधनायोगात् तत्फलश्रुतिरर्थवादइत्याश्रितम्। इह तु गोदोहनन्यायेनान्यतरविलम्ब एव विद्यायास्स्वतस्साध्यरूपायाः फलसाधनत्वसम्भवेन तृतीयाश्रुतेः फलसाधनत्वबोधन एव व्यापारात्। तस्मादन्यतरविलम्बसाधर्म्यात् गोदोहनन्यायएवात्र प्रवर्तते। न पर्णतान्यायः। लिंगदर्शनाच्च। गोदोहनादिवदुपासनानामुपादानानियमः। लिंगं हि दृश्यते। 'एवंविद्धवै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षती'ति। छान्दोग्ये 'यद्यृक्तो रिष्येत् भूस्स्वाहेति गार्हपत्ये जुहुयात् यदि यजुष्टो रिष्येत् भुवस्स्वाहेति दक्षिणाग्नौ जुहुयाद्यदि सामतो रिष्येत् सुवस्स्वाहेत्याहवनीये जुहुया'दित्युपदिश्य 'एवंविद्धवा'इत्याद्याम्नायते। तत्र यज्ञस्य रक्षाऽङ्गवैकल्यप्रयुक्तदोषपरिहारः। यजमानस्य रक्षा बलवद्विरोधिकर्मणा कर्मफलाप्रतिबन्धः। ऋत्विजां रक्षा मन्त्रोच्चारणेषु स्वरादिभ्रंशप्रयुक्तदोषपरिहारः। 'अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः। आत्मानं दक्षिणाहीनो नास्ति यज्ञसमो रिपु'रिति मन्त्रहानावृत्विजां दोषस्मरणात्। एवं च यद्युद्गीथाद्युपासना नित्याः

स्युस्तदा तत्फलतया कर्मफलाप्रतिबन्धसिद्धेः प्रणवोद्गीथैक्योपासनाफलत-योद्गातुः स्वरभंगादिदोषपरिहारसिद्धेश्च, यजमानस्य सर्वेषामृत्विजां च ब्र-ह्मणा परिपाल्यत्वं नोच्येत । तदुच्यमानमुपासनानामनित्यत्वं ज्ञापयतीति । तत्र ब्रह्मण एवंवित्त्वं प्रकृतप्रायश्चित्ताभिज्ञत्वम् । एवमस्मादनन्यथासिद्ध-लिंगात् क्रत्वंगाश्रयोपासनानां क्रत्वंगत्वसिद्धौ 'उद्गीथमुपासीते'ति द्वितीया विधीयमानोपासनाश्रयसमर्पणमात्रार्था । 'वाचं धेनुमुपासीते'त्यादाविव 'होतृषदना' दित्यादिकं क्रतूद्गीथोपासनानां सङ्कल्प्य तद्रहितोद्गानविषय-मिति च योज्यम् । गुणसाधारण्यश्रुतिस्त्वसिद्धा । 'तद्वा एतदनुज्ञाक्षरं यद्धि किंचिदनुजानात्योमित्येतदाहे' ति प्राचीनवाक्यगतपदस्येव तेनेति त-त्पदस्याप्योङ्कारमात्रपरामर्शित्वात् ॥

सङ्ग्रहकारिकाः ॥

उद्गीथविद्यादिपृथक्फलत्वतो गोदोहनच्छायमितीरितं कथम् ।
तद्वत्स्ववाक्ये हि न वर्णितं फलं संस्कारतैव प्रथते द्वितीयया ॥
क्रतुषु च नियमोऽस्य हानिषु प्रतिविधिवर्णनतः प्रतीयते ।
इति न समुचितं विधानगं न खलु फलश्रवणं प्रयोजकम् ॥
विलम्बाद्वितयाभावसाधर्म्यं तत्प्रयोजकम् ।
तत्तु गोदोहनेनैव न तु पर्णतयेष्यते ॥
तस्मात्क्रतुषु न नियतं क्रत्वङ्गाश्रितमुपासनं सकलम् ।
तेनोभाविति वाक्यादेवंविद्धेति लिंगाच्च ॥
सङ्कल्पितेसति प्रागुद्गीथोपासने हीने ।
प्रतिविधिविधानमर्थवादाश्रयमात्रे द्वितीया स्यात् ॥

इति यथाश्रयभावाधिकरणम् ॥२६॥

---

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य श्रीविश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूख-मालिकाख्ये द्वितीयपरिच्छेदे तृतीयस्याध्यायस्य तृतीयः पादः ॥

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

## ॥ तृतीयस्याध्यायस्य चतुर्थः पादः ॥

प्रधानभूतविद्याप्रकारनिरूपणानन्तरं तदङ्गकर्मविशेषादिनिरूपणमिति पूर्वपादेनास्य पादस्य सङ्गतिः। विद्यायाः स्वातंत्र्येण फलसाधनत्वे सिद्ध एव तदङ्गकर्मविशेषचिंतनं युक्तम्। अतो विद्यायाः कर्माङ्गत्वशङ्कानिराकरणार्थमुपोद्घातरूपं प्रथमाधिकरणम्—

**पुरुषार्थोऽतश्शब्दादिति बादरायणः ॥१॥**

**शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॥२॥**

**आचारदर्शनात् ॥३॥**

**तच्छ्रुतेः ॥४॥**

**समन्वारम्भणात् ॥५॥**

**तद्वतो विधानात् ॥६॥**

**नियमात् ॥ ७ ॥**

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥८॥**

**तुल्यं तु दर्शनम् ॥ ९ ॥**

**असार्वत्रिकी ॥ १० ॥**

**विभागश्शतवत् ॥११॥**

**अध्ययनमात्रवतः ॥१२॥**

**नाविशेषात् ॥ १३ ॥**

**स्तुतयेऽनुमतिर्वा ॥ १४ ॥**

**कामकारेणचैके ॥ १५ ॥**

**उपमर्दञ्च ॥ १६ ॥**

**ऊर्ध्वरेतस्सु च शब्दे हि ॥१७॥**

**परामर्शं जैमिनिरचोदनाच्चापवदति हि ॥१८॥**

**अनुष्ठेयं बादरायणस्साम्यश्रुतेः ॥१९॥**

**विधिर्वा धारणवत् ॥२०॥**

किं विद्यातः पुरुषार्थः उत विद्यांगात् कर्मण इति विद्यायाः क्रतुषु कर्तृभूतात्मसंस्कारद्वारेण क्रत्वर्थत्वतदभावाभ्यां संशये पूर्वपक्षः। विद्या कर्तृभूतात्मसंस्कारद्वारेण क्रत्वर्था। 'आत्मानमुपासीत आत्मा द्रष्टव्य' इति द्वितीयाश्रुतितव्यप्रत्ययाभ्यां विद्यायाः कर्मसु कर्तृभूतात्मसंस्कारत्वावगमात्। एवं च 'ब्रह्मविदाप्नोति पर' मित्यादिषु फलश्रुतिरर्थवादः। यथान्येषु पर्णतादिषु। उक्तं हि जैमिनिना— 'द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यादि' ति। 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति। यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते। यत्प्रयाजानूयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्या' इत्यादिविधिविधेयेषु पर्णतादिद्रव्येष्वञ्जनादिसंस्कारेषु प्रयाजादिकर्मसु च फलश्रवणमर्थवादः, तेषां वाक्येन प्रकरणेन च क्रत्वंगभावावगत्या परार्थत्वादिति सूत्रार्थः। ननु जीवस्य पर्णतावत् नास्त्यव्यभिचरितक्रतुसम्बन्धः। तस्य लौकिकेष्वपि कर्मसु कर्तृत्वात्। अतोऽनारभ्याधीताया विद्यायाः पर्णताया जुहूद्वारेव न कर्तृद्वारा क्रत्वर्थतोपपद्यत इति चेत् न। लौकिककर्मकर्तृत्वस्य देहादव्यतिरेकेऽप्युपपत्त्या श्रुतिषु प्रतिपाद्यस्य देहातिरिक्तस्यात्मनः पारलौकिकफलैः क्रतुभिरेवापेक्षितत्वेन तस्याव्यभिचरितक्रतुसम्बन्धसद्भावात्। नन्वौपनिषद्यात्मविद्या न जीवविषया किं तु जीवातिरिक्तब्रह्मविषयाऽतो न सा कर्तृसंस्कारद्वारा क्रत्वर्थेति चेत्। स्यादेतदेवं यदि जीवातिरिक्तं ब्रह्म स्यात्। जीव एव हि ब्रह्म 'तत्त्वमसी'त्यादिसामानाधिकरण्यात्। ननु तत्सामानाधिकरण्यं शरीरशरीरिभावनिबन्धनमित्यसकृदुक्तम्। सत्यमुक्तम्। दुरुक्तं तु

तत् विद्याक्रतुशेषत्वप्रत्यायकश्रुतिलिंगाद्युपोद्बलितेन 'तत्त्वमसी'त्यादिसामानाधिकरण्येन जीवएव ब्रह्मेति निर्णयात् । तथा हि । 'यदेव विद्यया करोती' ति श्रुतिः विद्यायाः कर्माङ्गत्वमाह । न च तत्र विद्याश्रुतिः प्रकरणादुद्गीथविद्यामात्रविषयेति वक्तुं शक्यम् । प्रकरणात् बलीयस्या श्रुत्या विद्यामात्रविषयत्वावगमात् । श्रुत्यनुग्राहकं जनकादीनां कर्मप्राधान्येनाचारलिंगमपि दृश्यते । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः । इयाजसोऽपि सुबहून्यज्ञानप्यव्यपाश्रयः' इत्यादिहि स्मरन्ति । 'तं विद्याकर्मणी समन्वारभेते' इति श्रुतौ परलोकं प्रयान्तं विद्याकर्मणी अनुवर्तेते इति विद्याकर्मणोस्साहित्यं च दृश्यते । तत्साहित्यमुक्तेन न्यायेन विद्यायाः कर्माङ्गत्वे सत्येव भवति । अपि च 'आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुंबे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यस्सखल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत' इति श्रुतिः अध्ययनवतो गार्हस्थ्याश्रमविहितानि कर्माणि विदधत्यर्थज्ञानं कर्मार्थत्वेन विनियुङ्क्ते । अर्थावबोधपर्यंतं ह्यध्ययनं । अतो ब्रह्मविद्यामपि कर्मसु विनियुङ्क्त एव । किंच 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा' इत्यात्मविदः कृत्स्नस्य पुरुषायुषस्य कर्मसु नियमेन विनियोगमीशावास्यश्रुतिराह । अतोऽपि कर्मण एव फलम् । विद्यातु कर्माङ्गमित्यवसीयते । एवम्भूतश्रुतिलिंगादिबलादौपनिषदात्मविद्यायाःकर्माङ्गत्वावगमादौपनिषदात्मा जीवएव । तद्विद्याऽपि कर्तृसंस्कारतया क्रत्वर्थैवेति निश्चीयत इति ॥

एवंप्राप्ते सिद्धान्तः— विद्यातएव पुरुषार्थः । न तु विद्यासंस्कृतकर्तृकात् कर्मणः । सर्वेषु वेदान्तेषु कर्मकर्तुर्जीवादधिकस्य सकलजगदभिन्ननिमित्तोपादानस्य सकलजीव नियन्तुरपहतपाप्मत्वादि गुणकस्य निरतिशयानन्दरूपस्य परब्रह्मणउपदेशात् तद्विद्यायाः कर्तृसंस्कारतया क्रत्वर्थत्वायोगात् । तर्ह्युदाहृतश्रुतिलिंगादीनां का गतिरितिचेत् । उच्यते । 'यदेव विद्यये' ति श्रुतिः प्रकृतोद्गीथविद्याविषया । नत्वौपनिषदात्मविद्या-

विषयाऽपि । तस्या जीवाधिकपरब्रह्मविषयायाः 'तथा विद्वान्नामरूपाद्वि-मुक्त' इत्यादिश्रुतिशतैः परब्रह्मप्राप्तिफलकतया प्रमितायाः स्वतन्त्रत्वेन कर्माङ्गत्वायोगात् । आचारदर्शनं तु विद्यायाः कर्मानंगत्वेऽपि तुल्यम् । 'किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे येषां न आत्मे' त्यपि दर्शनात् । कथं कर्मतत्त्यागयोरपि ब्रह्मवित्सु दृष्टयोरुपपत्तिः । फलार्थकर्मणां त्यागः निष्कामकृतकर्मणां विद्यासहकारित्वमिति न विरोधः । 'तं विद्या-कर्मणी' इति श्रुतौ विद्यास्वस्मै फलायान्वारभते कर्मच स्वस्मै फलायेति विभागो द्रष्टव्यः । क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेतीत्युक्तौ हि क्षेत्रार्थं शतं रत्नार्थं शतमिति विभागः प्रतीयते । न च विदुषि फलार्थकर्मान्वारम्भणा-सम्भवः । तत्राप्यनेकदेहान्वयाय प्रारब्धकर्मानुवृत्तिसम्भवात् । 'आचार्य-कुलाद्वेदमधीत्ये' त्यादिश्रुत्याऽपि न विद्यायाः कर्माङ्गत्वसिद्धिः । अध्यय-नमात्रवतः कर्मविधानात् । अध्ययनविधिर्ह्यक्षरराशिग्रहणपर्यन्तो नार्थज्ञान-पर्यन्तः । येनार्थज्ञानपर्यन्तमध्ययनं 'अधीत्ये' त्यनेन गृह्येत । 'स्थाणुरयं भारहरः किलाभूदधीत्य वेदं न विजानाति योऽर्थ' मिति श्रुत्यन्तरे अक्षर-राशिग्रहणमात्रनिर्वृत्तावधीत्येतिव्यवहारदर्शनात् । अध्ययनविधेरर्थज्ञानपर्य-न्तत्वेऽपि न विद्यायाः कर्माङ्गत्वसिद्धिः । मीमांसान्यायसाध्यादुपासनारू-पाया विद्याया भिन्नत्वात् । 'कुर्वन्नेवेहे' ति यावज्जीवं कर्मानुवृत्तिनियमे-नापि न विद्यायाः कर्माङ्गत्वसिद्धिः । नियमस्य विद्यांगकर्मविषयतयाऽप्यु-पपत्तेः । वस्तुतस्तु विद्यास्तुतये कुर्वन्नेवेति कर्मानुमतिरेवेयम् । 'एवं त्वयि नान्यथेऽतोऽस्ति न कर्म लिप्यते नर' इति वाक्यशेषान्नरमत इति नरो नि-स्सङ्गः तस्मिन्नात्मविदि त्वयि यावज्जीवं यत्किंचित्कर्म क्रियमाणमपि न श्लिष्यते इदं तत्वमिति हि विद्यामाहात्म्यस्तुतिरितः प्रतीयते । अपिचैके शाखिनः कामकारेण ब्रह्मविद्यानिष्ठस्य गार्हस्थ्यत्यागमधीयते 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक' इति । अतोऽपि विद्या कर्मांगं । न हि विद्यायाः कर्मांगत्वे पूर्वं प्रधानत्वांगानुष्ठानमुपपद्यते । अपि च पु-ण्यापुण्यरूपस्य कर्मणः सर्वस्यापि विद्ययोपमर्दमप्यधीयते 'क्षीयन्तेचास्य

कर्माणि तस्मिन्दृष्टे परावर' इत्यादावतोऽपि न विद्याकर्माङ्गम् । नह्यङ्गेनाङ्गिन उपमर्द उपपद्यते । नन्वेवंसति कर्मणो विद्याङ्गत्वमपि न स्यात् । अङ्गिनाङ्गोपमर्दस्याप्ययोगात् । उच्यते । येषां कर्मणां विद्यानिवर्त्यत्वं न तेषां विद्याङ्गत्वमिष्यते । तदेतच्चतुर्थाध्याये स्फुटीभविष्यति । जैमिनिना तूपनिषदां जीवातिरिक्तब्रह्मपरत्वमपह्नुत्य देहातिरिक्तात्ममात्रपरत्वमुपगम्य तद्वेदनं पारलौकिकसर्वकर्माङ्गमिष्यत इति तन्मते विद्यानिवर्त्यकर्मणामपि पारलौकिकात्मवेदनसाध्यत्वाविशेषेण विद्यां प्रत्यंगित्वस्य वक्तव्यत्वात् अङ्गेनांगिन उपमर्दो न सम्भवतीति दूषणमुक्तम् । अपिचोर्ध्वरेतस्स्वध्याश्रमेषु ब्रह्मविद्या दृश्यते । अतोऽपि न विद्या तदङ्गम् । नचोर्ध्वरेतस आश्रमा नसन्त्येव । 'यावज्जीवमग्निहोत्रं जुहोती' त्यादिश्रुतिविरुद्धानां स्मृतीनामप्रामाण्यादिति चेन्न । स्मृतिष्विव वैदिकशब्देऽपि तेषां दर्शनात् । श्रूयते हि — 'त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति प्रथमस्तपएव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति, येचेमेऽरण्ये श्रद्धा तप इत्युपासते, एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ती' त्यादिरूर्ध्वरेतसां समर्पको वैदिकः शब्दः । नन्वत्रोर्ध्वरेतसां अनुवादमात्रं, चोदनाभावात् । अपिचापवदति च श्रुतिराश्रमान्तरं 'वीरहावा एष देवानां योऽग्निमुद्वासयत'इति । तस्मादग्न्युद्वासननिन्दाविरोधात् ब्रह्मसंस्थोऽमृतत्वमेतीति चेत् उच्यते । अस्त्विह स्तुत्यर्थतयाऽनुवादः, सोऽपि प्रमाणान्तरतः प्राप्तिमपेक्षते । अन्यथा गृहस्थाश्रमोऽपि न सिध्येत् । अतस्तस्य प्रमाणान्तरतः प्राप्तिरन्वेष्टव्येति सन्याय इतरेषामपि समानः । तत्र 'त्रयो धर्मस्कन्धा' इति त्रेधा विभागानुसारेण यज्ञोऽध्ययनं दानमिति गृहस्थधर्माणां तप इति तपःप्रधानयोर्वैखानसपारिव्राज्यधर्मयोः ब्रह्मचारीत्यादिना नैष्ठिकधर्माणाञ्चानुकीर्तनमिति विभागप्रकारो द्रष्टव्यः । 'ब्रह्मसंस्थोऽमृतत्वमेती' त्यत्र ब्रह्मसंस्थशब्दस्तु यौगिकस्सर्वाश्रमसाधारणः । सर्वेषामाश्रमिणां ब्रह्मणि संस्थाया निष्ठायास्सम्भवात् । ते ब्रह्मनिष्ठा विकलाः केवलाश्रमधर्मानुष्ठायिनः

पुण्यलोकभाजो भवन्तीति तेषु यो ब्रह्मनिष्ठस्सोऽमृतत्वभाग्भवतीति वाक्यार्थः। तस्मात् गृहस्थाश्रमवदूर्ध्वरेतस आश्रमाअपि दृश्यन्त इति तेऽप्यनुष्ठेयाः। अनुवादस्य प्राप्त्याक्षेपकत्वसाम्यात्। अथवा 'यज्ञोऽध्ययनं दान'मित्यादाविवाश्रमाणां विधिः कल्प्यः। अपूर्वत्वात्। 'अधस्तात् समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयती'ति मृताग्निहोत्रप्रकरणगतश्रुतिलिंगविभक्तियोगादधोधारणइवाप्राप्तत्वादुपरिधारणेऽपि विधिरेष्टव्य इति 'विधिस्तु धारणेऽपूर्वत्त्वा'दिति पूर्वतंत्राधिकरणे निर्णीतत्वेन तस्य न्यायस्यात्रापि साम्यात् सर्वथोर्ध्वरेतस आश्रमास्सन्तीति सिद्धम्॥

संग्रहकारिकाः॥

विद्या गच्छति शेषतां क्रतुगणे श्रुत्यादिमानैस्ततः
संस्कार्यस्य तयाऽऽत्मनोऽपि भवति व्रीह्यादिवच्छेषता।
जीवस्यैव च तत्र कर्तुरुचिता सातस्सएवोच्यते
वेदान्तेषु तदीयवेदनफलोद्घोषाः प्रशंसापराः॥
मैवं समस्तागममौळिलाळितो निश्शेषकल्याणगुणाकरो हरिः।
नापह्नवार्हस्तदुपाश्रयाखिला विद्या स्वतन्त्रैव विमुक्तिसाधिनी॥
यातु श्रुतिस्तत्र यदेव विद्ययेत्यनूक्तिरेषा प्रकृतैकसंश्रया।
आचारदृष्ट्यादि च तुल्यतादिभिर्निराकृतं नाभिमतार्थसाधकम्॥
विद्यादृष्टोर्ध्वरेतस्स्वपि च भजति सा न क्रतोश्शेषभावं
धर्मस्कन्धत्रयोक्त्या श्रुतिशिरसि मितास्ते न सन्तीत्ययुक्ता।
तस्यां वैखानसानां तप इति यतिनां चोर्ध्वसंग्राहकं स्यात्
सर्वे ते पुण्यलोकान्समियुरमृततामप्यवस्थावभेदात्॥

इति पुरुषार्थाधिकरणम्॥१॥

---

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात्॥२१॥

## भावशब्दाच्च॥ २२॥

स्तुतिविधिप्रसङ्गादिदमधिकरणम्। छान्दोग्ये– 'ओमित्येतदक्षरमुद्गीथमुपासीते'त्युपक्रम्य श्रूयते– 'एषां भूतानां पृथिवीरसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचस्सामरस स्साम्न उद्गीथो रसस्स एष रसानां रसतमः परमः पराध्र्योऽष्टमो यदुद्गीथ' इति। इदं रसतमत्वादिप्रतिपादनं प्रकृतोद्गीथस्तुत्यर्थं उत तस्मिन् रसतमत्वादिदृष्टिविधानार्थमिति स्तुतिवाक्यच्छायापत्त्यपूर्वत्वाभ्यां संशये पूर्वपक्षः। 'इयमेव जुहूःस्वर्गो लोक आहवनीय' इत्यादिषु जुह्वादेरिव कर्माङ्गस्योद्गीथस्य उपादानात्तद्वदेव स्तुत्यर्थत्वम्। न च कर्माङ्गोपादानमात्रेण स्तुत्यर्थत्वे 'पर्णमयी जुहूर्भवति हिरण्मय्यस्स्रुचो भवन्ती' त्यादेरपि स्तुत्यर्थत्वप्रसङ्गः। विध्ययोग्यत्वेनापि विशेषणादिति। तत्र जुह्वादिविधेरिवात्र कर्मकाण्डगतस्योद्गीथविधेस्सन्निधानाभावात् अप्राप्तरसतमत्वादिदृष्टिविधिरेव युक्तः। उपासीतेति विधिप्रत्ययस्यापि सत्त्वादिति सिद्धान्तः॥

सङ्ग्रहकारिका।

क्रत्वङ्गाश्रितकृत्यसाध्यपठनं स्तुत्यर्थमेतज्जुहू<br>
वाक्ये दृष्टमतो भवेद्रसतमत्वादेस्तथा कीर्तनम्।<br>
मैवं तावदपूर्व एष सुकरो दृष्टिश्रुतेस्तद्विधि-<br>
स्स्तोतव्यस्य विधेर्न सन्निधिरतो ध्यानार्थमेतन्मतम्॥

इति स्तुतिमात्राधिकरणम्॥२॥

---

## पारिप्लवार्था इतिचेन्न विशेषितत्वात्॥२३॥

## तथाचैकवाक्योपबन्धात्॥ २४॥

रसतमत्वादीनामुपासनार्थत्ववदाख्यानानां पारिप्लवार्थत्वम् प्रवृत्तिविशेषकरत्वादिति शङ्कया सङ्गतिः। विद्याप्रकरणेष्वाख्यानादिश्रूयते– "प्रतर्दनो हं वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम। अथ ह याज्ञवल्क्यस्य

द्वे भार्ये बभूवतु' रित्यादीनि किं विद्याप्रशंसार्थत्वेन विद्याप्रधानानि उत पारिप्लवप्रयोगार्थत्वेन कर्मशेषभूतानीत्याख्यानत्वसामान्याद्विद्याप्रकरणगतत्वाच्च संशये पूर्वपक्षः । पारिप्लवप्रयोगार्थान्येतानि । अश्वमेधे 'पारिप्लवं शंसती'ति पारिप्लवनामकं शस्त्रं विहितम् । तत्र सर्वाण्याख्यानानि पारिप्लवे शंसतीति सर्वाख्यानशंसनं विहितम् । ततश्चाख्यानत्वसामान्यात् विद्याप्रकरणाम्नातानामपि आख्यानानां तत्र विनियोगस्स्यात् । नन्वश्वमेधे त्रिरात्रे प्रथमेऽहनि मनुर्वैवस्वतो राजेत्यादि द्वितीयेऽहनि यमो वैवस्वतइत्यादिश्च तृतीयेऽहनि वरुण आदित्य इत्यादिश्चाख्यानविशेषे विनियुज्यते । तेन सर्वशब्दस्य सङ्कोचस्स्यादिति चेन्न । उपक्रमगतस्य वाक्यशेषेण सङ्कोचायोगात् । अन्यथा 'एषवाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनेष्ट्वाऽथान्येन यजते' इत्यत्रान्यशब्दस्य ज्योतिष्टोमेतरसर्वक्रतुपरामर्शिनो यो हि त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति यः पञ्चदशः स तं यस्सप्तदशस्स तं य एकविंशस्सत'मिति वाक्यशेषगतत्रिवृदादिस्तोमकक्रतुसङ्कीर्तनानुसारेण तावन्मात्रे संकुचितवृत्तित्वापत्त्या चतुर्विंशचतुश्चत्वारिंशादिस्तोमकानां क्रतूनां ज्योतिष्टोमात्प्रागप्यनुष्ठानप्रसङ्गेन 'एकस्तोमेवा क्रतुसंयोगात् सर्वेषां वा चोदनाविशेषात् प्रशंसास्तोमाना' मिति पूर्वमक्षसिद्धान्तसूत्राभ्यां प्रवर्तितेन पूर्वतंत्राधिकरणेन विरोधापत्तेः । तस्मादुपक्रमगतसर्वश्रुत्याऽपि विद्याप्रकरणगताख्यानानामपि कर्मसु विनियोगान्न तेषां विद्याप्राधान्यमिति ।

सिद्धान्तस्तु— उपक्रमानुसारेणोपसंहारनयनस्यौत्सर्गिकत्वेऽप्यत्रानन्तरशाखागतसर्वाख्यानशंसनस्याशक्यत्वात् स्वत एवोपक्रमगतसर्वश्रुतेस्सङ्कोचकापेक्षासत्त्वात् वाक्यशेषगतेष्वाख्यानविशेषेषु सङ्कोचः । यथा— 'अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त' इत्यत्र सर्वशब्दस्यासंकुचितसर्वपरत्वासम्भवेन सङ्कोचकापेक्षया ज्योतिष्टोमे प्रकृतेषु ऋत्विक्षु सङ्कोचः । अत एव ऋत्विजामेव हारियोजनप्रचारशेषसोमभक्षः । तस्मान्नविद्याप्रकरणगताख्यानानां पारिप्लवे विनियोग इति तत्तद्विद्याविधिभिरेव सम्बन्धः । तथा च तदेकवाक्यताऽप्युपपद्यते ॥

सङ्ग्रहकारिका ॥

आख्यानजातं विधितोऽखिलं भवेत्पारिप्लवार्थं परविद्ययाऽन्वितम् ।
साख्यायिकानन्त्यकृतामशक्यतां पश्यन्स विश्राम्यति वाक्यशेषगे ॥

इति पारिप्लवार्थाधिकरणम् ॥३॥

---

## अतएवचाग्नीन्धनाद्यनपेक्षा ॥२५॥

स्तुतिविधिप्रसङ्गादवान्तरसङ्गतिविशेषेणाधिकरणद्वयं प्रवृत्तम् । तस्मिन्प्रासंगिकेऽर्थे चिंतिते प्रथमाधिकरणे यदुक्तमूर्ध्वरेतस्स्वप्याश्रमेषु विद्याऽस्तीति तन्नयुज्यत इत्याक्षिप्य समाधीयत इति संगतिः । ऊर्ध्वरेतस्स्वाश्रमेषु विद्या न सम्भवति । 'यज्ञेन दानेने' त्यादिवचनश्रुतविद्यानुग्राहककर्माभावादिति प्राप्ते तेष्वपि विद्या सम्भवति । 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते, एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति, यदिच्छन्तो ब्रह्मचर्यं चरन्ती' त्यादिश्रवणात् । अतस्तेषां विद्यायास्तत्तदाश्रमधर्मैरनुग्रहसम्भवात्तेषामाधानपूर्वकयज्ञाद्यनपेक्षैव विद्या सम्भवतीति सिद्धान्तः ॥

संग्रहकारिका ।

अधिकारोऽस्त्ययज्ञानां न विद्यासूर्ध्वरेतसाम् ।
मैवं तेऽपिह्युपस्कुर्युर्विद्यास्वाश्रमकर्मभिः ॥

इति अग्नीन्धनाद्यधिकरणम् ॥४॥

---

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥२६॥

यदि विद्या यज्ञाद्यनपेक्षैव यत्यादीनाममृतत्वं साधयति तर्हि गृहस्थानामपि तथैव तत्साधयत्विति शङ्कया सङ्गतिः । पूर्वपक्षश्च– ननु 'यज्ञेने' त्यादिश्रुत्या गृहस्थानां विद्याया यज्ञाद्यपेक्षाऽवगम्यते । तत्र हि वेदानुवचनेनेत्यध्ययनप्रधानं ब्रह्मचारिधर्मजातं लक्ष्यते । 'यज्ञेन दानेने' ति यज्ञदानप्रधानं गृहस्थधर्मजातं, तपसेति पञ्चाग्निमध्यतपश्चर्यादिप्रधानं वैखानसधर्मजातं, अनाशकेनेत्यनशनप्रायाष्टमासनियमप्रधानं यतिधर्मजातं

लक्ष्यते । सत्यम् । तेषां धर्माणां विविदिषासाधनत्वमेवोच्यते । न विद्या-साधनत्वम् । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थप्राधान्यादिति ॥

एवं प्राप्ते सिद्धान्तः— प्रत्ययार्थप्राधान्यविषयात् सामान्यन्यायादिष्यमाणसमभिव्याहारे इष्यमाणं प्रधानमिति विशेषन्यायः स्वर्गकामादिवाक्ये क्लृप्तो बलीयान् । अत इष्यमाणविद्यासाधनत्वेन प्रतिपाद्यते । यथा अश्वेन जिगमिषतीत्यत्र अश्व इष्यमाणगमनसाधनत्वेन प्रतिपाद्यत इति गृहस्थेषु यज्ञाद्यपेक्षैव विद्या । न च तत्तदाश्रमधर्माणां बह्वल्पभावात् कथं तत्र धर्ममात्रस्य विद्यासहकारित्वमिति शङ्कनीयम् । 'यस्य यावत्स्वगृह्योक्तं स्वल्पं वा यदि वा बहु । तस्य तावति शास्त्रार्थे कृते सर्वं कृतं भवे' दिति न्यायानोपपत्तेरिति ॥

संग्रहकारिकाः ॥

तर्हि गृहिष्वपि विद्या नयतिष्विव यज्ञसापेक्षा ।
यज्ञेनेत्यादिकृतं विनियुङ्क्ते वेदनेच्छायाम् ॥
मैवं न प्रत्ययार्थस्य प्राधान्यमिह कल्पते ।
यदिष्यमाणप्राधान्यमिच्छायाः क्लृप्तमन्यतः ॥
अश्वेनायं जिगमिषत्यसिनाऽयं जिघांसति ।
इत्यादाविष्यमाणस्य प्राधान्यं हि निरीक्ष्यते ॥

इति सर्वापेक्षाधिकरणम् ॥९॥

---

## शमदमाद्युपेतःस्यात्तथाऽपि तु तद्विधेस्तदंगतया तेषामप्यवश्यानुष्ठेयत्वात् ॥ २७ ॥

गृहस्थेषु विद्या यज्ञादिवत् तदविरोधेन शमादीन्यपेक्षत इति निरूपणात्संगतिः । यज्ञादिमत्सु गृहस्थेषु विद्याशमाद्यपेक्षा नवेति यज्ञादीनां शमादीनां च विरोधसद्भावासद्भावाभ्यां संशये यज्ञादीनां बाह्यान्तरव्यापाररूपत्वात् बाह्यान्तरकरणव्यापारोपरमरूपत्वेन तद्विरुद्धत्वात् न तानि गृहस्थैरनुष्ठेयानीति पूर्वपक्षः । यद्यपि गृहस्थः कर्मसु प्रवृत्तः, तथाऽपि स

विद्वान् शमदमाद्युपेतः स्यात् 'शान्तोदान्तउपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्ये'दिति विद्यांगतया तेषामपि विधानात् निरन्तरस्मृतिसन्तानविद्योत्पत्तेश्चित्तसमाधानसाध्यत्वेन विद्यानिर्वृत्तये तेषामप्यनुष्ठेयत्वाच्च। न च विरोधः। विहितेषु यज्ञादिषु करणव्यापारः, अविहितेषु निष्फलेषु तदुपशम इति विषयभेदेनाविरोधात्॥

संग्रहकारिके॥

शमाद्या नोपपद्यन्ते यज्ञादिव्यग्रचेतसः।
तस्मान्न तदुपेतस्स्याद्गृहस्थस्सन्नुपासकः॥
यज्ञादिकं सर्वतोऽपि स्युरन्यत्र शमादयः।
तस्मात्तेनाप्यनुष्ठेया विधेर्दृष्टोपकारतः॥

इति शमदमाद्यधिकरणम्॥६॥

---

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥२८॥

ब्रह्मविद्यायां शमादयोऽनुष्ठेया इत्युक्तम्। तत्र भोजननियमरूपशमविशेषोऽस्ति नवेति विचार्यत इति सङ्गतिः। वाजिनां छन्दोगानां च प्राणविद्यायां 'न ह वा एतस्यानन्नं जग्धं भवती'ति, 'न ह वा एवंविदि किंचनानन्नं भवती'ति च प्राणविद्यानिष्ठस्य प्राणान्नानुमतिस्सङ्कीर्त्यमाणा सर्वदा भवति उत प्राणात्ययापत्तावेवेति विशये विशेषानुपादानात् सर्वदेति प्राप्तम्। ननु 'मटचीहतेषु कुरुष्वाटिक्यासह जाययोषस्तिर्हचाक्रायण इभ्यग्रामे प्रद्राणकउवास स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे सहोवाच। नेतोन्ये विद्यन्ते यच्चयेम इम उपनिहिता इत्येतेषां मे देहीतिहोवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतं स्यादिति न स्विदेतेऽप्युच्छिष्टाइति न वा अजीविष्यमिमा नखादन्निति होवाच कामोम उदपानमिति सह खादित्वाऽतिशेषान्जायाया आजहार साग्रएव सुभिक्षाबभूव तान्प्रतिगृह्य निदधौ सहप्रातस्सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्रां राजासौ यक्ष्यते समासर्वैरार्त्विज्यैर्वृणीतेति तं जायोवाच हंतपत इमएव कुल्माषाइति

तान्खादित्वाऽमुं यज्ञं विततमेयाये' ति छान्दोग्ये श्रूयते । मटचीभिरश्मवृष्टिभिः कुरुदेशसस्येषु हतेषु आटिक्या अनुपजातस्तनादिव्यंजनया जायया सह उषस्तिरिति नाम्ना प्रसिद्धश्चक्रस्यापत्यमृषिरिभ्यस्य हस्त्यारोहस्य ग्रामे । प्रद्राणकः अन्नालाभात् कुत्सितां गतिं कष्टावस्थां प्राप्तस्सन् कदाचिन्मार्गवशादुवास । स किल कुल्माषान् सविशेषान् जलपक्वकुळुत्थादिकान्वा खादन्तमिभ्यं बिभिक्षे । स किलेभ्य उवाच इतोऽस्मान्मया भक्ष्यमाणोच्छिष्टकुल्माषराशेरन्ये कुल्माषा न विद्यन्ते यच्चये यस्मिन्राशौ मदर्थे प्रक्षिप्ता इमे कुल्माषा इति । एवमुक्त उषस्तिरुवाच एतान्मह्यं देहीति । तानस्मा ऋषये प्रददौ । तत इभ्येन स्वपानाय समीपस्थमुदकं गृहीत्वा हर्षेण अनुपानमपि गृहाणेत्युक्तऋषिः प्रत्युवाच । यदीदमुदकं पिबेयं तदोच्छिष्टं मया पीतं स्यादिति । तत इभ्येन किमेते कुल्माषा नोच्छिष्टा इत्युक्त ऋषिरुवाच नैवाजीविष्यमिमानखादन्नुदपानं त्विच्छया लभ्यत इति । तदनन्तरमृषिः यावत्कुल्माषखादनेन स्वस्य प्राणसंशयापत्तिर्निवारिता भवति तावन्मात्रं खादित्वाऽवशिष्टान्जायायै ददौ । सा च प्रागेव तृप्ता तान्प्रतिगृह्य निहितवती । ततस्स ऋषिः प्रातश्शय्यां त्यजन्नेव पुनरपि प्राणसंशयमापन्नः शीघ्रं याजनेन धनलिप्सया जिगमिषुस्तानेव कुल्माषान् पृष्ट्याजायया खादित्वा राज्ञो यज्ञवाटं गत इति श्रुत्यर्थः । तथा 'आहारशुद्धौ सत्वशुद्धिस्सत्वशुद्धौ ध्रुवास्मृति' रिति विद्योत्पत्त्यर्थमाहारशुद्धिविधानादपि ब्रह्मविदस्सर्वान्नीनत्वमापद्विषयमवगम्यते । एवं ब्रह्मविदग्रेसरस्योषस्तेरपि प्राणात्यय एव उच्छिष्टभक्षणे तदनुसारिवचनेन च दृष्टे कथमल्पशक्तेः प्राणविदस्सर्वदासर्वान्नानुमतिस्स्यादितिचेन्नैष दोषः । 'नाविरतो दुश्चरितान्नाशांतो नासमाहितः । नाशान्तमानसोवाऽपि प्रज्ञानेनैन माप्नुया'दिति ब्रह्मविदो विद्यांगत्वेन दुश्चरितव्यावृत्तिविधानेऽपि 'न कांचन परिहरेत्तद्व्रत'मिति वामदेव्योपासकस्य सर्वस्त्र्यपरिहारानुमतिवत् प्राणविदस्सर्वान्नानुमत्युपपत्तेरिति । एवं प्राप्ते सिद्धान्तः—नतावत्सर्वान्नानुमतौ विधिश्श्रूयते । कल्प्यस्तु सामान्यवचनाविरोधेन कल्पनीयः । सामान्यवचनानां च 'प्राण-

संशयमापन्नो योऽन्नमत्ति यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसे' त्यादीन्यापद्येव सर्वान्नानुमतिविषयाणि दृश्यन्ते । वैदिकश्च शब्दः कामकारनिवृत्तिप्रयोजनो दृश्यते 'तस्मात्ब्राह्मणस्सुरां न पिबे' दित्यादिः । अतस्तदनुसारेण प्राणविदोऽप्यापद्विषयैव सर्वान्नानुमतिरुच्यत इति कल्पनीयमिति ॥ संग्रहकारिके ॥

सर्वान्नानुमतिःप्राणविद्यानिष्ठस्य योच्यते ।
सात्वापद्येव विज्ञेया पृष्टा ब्रह्मविदोऽपि या ॥
सामान्यवचनानां च न बाध उपपद्यते ।
अतस्तदनुसारेणाप्यापद्विषयतोचिता ॥

इति सर्वान्नानुमत्यधिकरणम् ॥७॥

---

## विहितत्वाच्चाश्रमकर्माऽपि ॥३२॥

## सहकारित्वेन च ॥३३॥

## सर्वथाऽपि तएवोभयलिंगात् ॥३४॥

## अनभिभवञ्च दर्शयति ॥३५॥

यज्ञादिकर्मांगिका ब्रह्मविद्येत्युक्तम् । तानि यज्ञादीनि केवलाश्रमिणेव विदुषाऽपि सकृदेवानुष्ठेयानि उताश्रमधर्मत्वेन विद्यार्थत्वेन च द्विरनुष्ठेयानीति संशयः । यदि विद्यार्थानि यज्ञादीनि नित्याग्निहोत्रमासाग्निहोत्रवद्भिन्नानिस्युस्तदा विद्यार्थयज्ञादिभ्यो नित्याग्नियज्ञादीनि भिन्नानि स्युः । तदा विद्यार्थयज्ञानुष्ठानेनाश्रमधर्मयज्ञाद्यानिर्वृत्तेस्तानि पृथगनुष्ठेयानीति द्विरनुष्ठानं भवेत् । यदि तु नित्याग्निहोत्रकाम्याग्निहोत्रन्यायेनैक्यं स्यात्तदा काम्यप्रयोगतः प्रसङ्गान्नित्यसिद्धेः सकृदेवानुष्ठानं भवेत् । किमत्र न्याय्यं । कर्मभेदाद्द्विरनुष्ठानमिति प्रकरणभेदात् नित्याग्निहोत्रमासाग्निहोत्रन्यायेन कर्मभेदादिति पूर्वःपक्षः ॥

सिद्धान्तस्तु— आश्रमधर्मत्वेन तावत्कर्माणि विधीयन्ते । 'यावज्जीवमग्निहोत्रं जुहोति यावज्जीवं दर्शपूर्णमासाभ्यां यजेते' ति यदेतै

र्वचनैर्विद्याङ्गत्वेनापि विधीयन्ते 'तमेतं वेदानुवचनेने' त्यादिवचनैः। एवं च यान्याश्रमधर्मरूपाणि यज्ञादीनि तान्येव विद्यार्थत्वेनापि विधीयंते। न च नित्यानित्यसंयोगविरोधः। विनियोजकवाक्यभेदसत्त्वात्। 'खादिरो यूपो भवति खादिरं वीर्यकामस्य यूपं कुर्वीते' ति विनियोजकवाक्यभेदेनैकस्य खादिरत्वस्य क्रत्वर्थपुरुषार्थोभयरूपतायाः 'एकस्यतूभयत्वेसंयोगपृथक्त्व'मिति पूर्वतंत्राधिकरणे स्थितत्वात्। नचेहप्रकरणभेदाद्भेदश्शङ्कनीयः। यज्ञादिशब्दैः प्रसिद्धयज्ञादीनामेव प्रत्यभिज्ञापनात्। इह यदि यज्ञादिकं प्रसिद्धयज्ञादिकादन्यत्स्यात् तदा किंरूपमित्यवगन्तुं न शक्यते। इष्टिपशुसोमादिरूपस्य प्रसिद्धयज्ञस्यानेकविधत्वात्। नचेह तन्मध्ये केनचित्सादृश्यमवलम्ब्य प्रवृत्तया गौण्या वृत्त्या यज्ञशब्दप्रवृत्तिरिति मासाग्निहोत्रन्यायो वक्तुं शक्यते। यज्ञादिनाम्ना द्रव्यदेवताद्यतिदेशेन देवतोद्देश्यकद्रव्यत्यागत्वादिरूपयज्ञादिशब्दप्रवृत्तिनिमित्तप्राप्तेरनिवार्यत्वेन प्रसिद्धयज्ञादिभिन्नत्वमपि समर्थयितुं न शक्यते। तस्मादिह यज्ञादिशब्दानां 'यज्ञोऽध्ययनं दानमिति प्रथमः तप एव द्वितीयः, 'भोक्तारं यज्ञतपसां सर्वलोकमहेश्वर' मित्यादिष्विव प्रसिद्धयज्ञादिपरत्वमेव युक्तम्। अत एव 'धर्मेण पापमपनुदती' त्यादिश्रुतिः प्रसिद्धयज्ञादिधर्मान्निर्दिश्य तैरनभिभवं पापकर्मभिरुत्पत्तिप्रतिबन्धाभावं दर्शयति। अहरहरनुष्ठीयमानैर्यज्ञादिभिर्विशुद्धेऽन्तःकरणे प्रत्यहं प्रकृष्यमाणा विद्या विशदतरावभासोत्पद्यते। अतो यज्ञादिभेदाभावाद्विद्यार्थप्रयोगैरेव प्रसङ्गादाश्रमार्थसिद्धेः सकृदेवानुष्ठानम्। अत एव काम्याग्निहोत्रप्रयोगान्नित्याग्निहोत्रस्य प्रसङ्गात्सिद्धेर्न द्विरनुष्ठानमिति॥

संग्रहकारिके॥

विद्यार्थमाश्रमार्थं भिन्ना यज्ञादयो वाच्याः।
प्रकरणभेदात्तेन द्विरनुष्ठानं भवत्येषाम्॥
मैवं यज्ञादिशब्देन प्रत्यभिज्ञानदार्ढ्यतः।
नास्ति भेदस्ततस्तेषां न भवेद्द्विरनुष्ठितिः॥

इति विहितत्वाधिकरणम्॥८॥

## अन्तराचापि तु तद्दृष्टेः ॥३६॥

## अपि स्मर्यते ॥३७॥

## विशेषानुग्रहश्च ॥३८॥

## अतस्त्वितरज्ज्यायो लिंगाच्च ॥३९॥

आश्रमधर्माङ्गिकाविद्येत्युक्तम् । अनाश्रमिणामपि विद्याधिकारस्समर्थ्यत इति सङ्गतिः । मृतपत्नीकाये ये पुनः गुरुकुलादभिसमावृत्याकृतविवाहाः तेषामाश्रमानन्तरास्थितानां विद्याधिकारोऽस्ति नवेति विद्यानुग्रहार्थं यज्ञाद्यभावात् साधारणधर्मसद्भावाच्च संशये पूर्वपक्षः । नास्त्यधिकारः, विद्यानुग्राहककर्माभावात् । न च साधारणधर्मैस्तदनुग्रहः, 'यज्ञेन दानेने' त्यादिश्रुतौ आश्रमधर्माणामेव तदनुग्राहकत्वोक्तेः, नचानाश्रमत्वेऽपि रैक्वसंवर्तगार्ग्यप्रभृतीनां विद्यादृष्टेति वाच्यम् । तेषां विदुरादिवत् जन्मान्तरसिद्धत्वोपपत्तेः । न च 'जप्येनैव तु संसिध्येत् ब्राह्मणो नात्र संशयः । कुर्यादन्यन्नवा कुर्यात् मैत्रो ब्राह्मण उच्यत' इति स्मृतेः जपेन तदनुग्रहस्स्यादिति वाच्यम् । तस्यास्स्मृतेः 'कुर्यादन्यन्न वा कुर्या' दिति स्ववचसैव जपप्रशंसामात्रपरत्वस्फुटीकरणात् । न च 'ब्रह्मचर्येण तपसा श्रद्धया विद्ययाऽऽत्मानमन्विष्ये' ति साधारणधर्ममात्रेणापि विद्यानुग्रहश्श्रूयत इति वाच्यम् । 'अनाश्रमीनतिष्ठेत्तु क्षणमेकमपि द्विज' इति विहितानां तेषां साधारणधर्मस्यापि विद्यानुग्राहकसम्भवादिति ॥

सिद्धान्तस्तु— 'रैक्वादीनां ब्रह्मचर्येणे' त्यादिश्रुतिदृष्टेन साधारणधर्मजातेन जप्येनैवत्विति॰स्मार्तप्रशंसावगतोत्कर्षेण जपयज्ञेन च विद्यानुग्रहोपपादनसम्भवान्नतेषां जन्मान्तरे सिद्धिः कल्पनीया । तदर्वाचीनानामपि विवाहाद्युपपत्त्यभावेनापद्यनाश्रमिणां सतां विद्याधिकारउपपद्यत एव । 'अनाश्रमीनतिष्ठेते'ति वचनंत्वनापद्विषयम् । अतएवानाश्रमित्वादाश्रमित्वं ज्यायः धर्मभूयस्त्वसंत्त्वात् अनाश्रमित्वनिषेधलिंगाच्च ॥

सङ्ग्रहकारिका ॥

आश्रमकर्माभावाद्विद्यायां नाधिकारिणो विधुराः ।
नैवं विद्याऽनुग्रहमुपैति जप्यादिभिस्तेषाम् ॥

इति विधुराधिकरणम् ॥९॥

---

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः॥**

**न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥४१॥**

**उपपूर्वमपीत्येके भावमशनवत्तदुक्तम् ॥४२॥**

**बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॥४३॥**

विधुरादिवत् अनाश्रमित्वसाम्यादाश्रमभ्रष्टानामपि विद्याधिकारइति शङ्कया सङ्गतिः । किं नैष्ठिकाद्याश्रमभ्रष्टानां ब्रह्मविद्याधिकारोऽस्ति नवेति तेषां तदधिकारोपपादकप्रायश्चित्तसम्भवासम्भवाभ्यां संशये पूर्वपक्षः । तेषामपि विद्याधिकारोऽस्ति । अनाश्रमित्वेऽपि विधुरादिवत् साधारणधर्मैर्विद्यानुग्रहसम्भवात् । न च 'अत्यन्तमात्मानमाचार्यकुलेऽवसादय'न्निति नैष्ठिकस्य 'अरण्यमियान्नपुनरेया'दिति वैखानसस्य 'सन्यस्याग्निं न पुनरावर्तये'दिति परिव्राजश्चावरोहनिषेधान्नतद्धर्मा विद्यानुग्राहका इति न तेषां विद्याधिकारइतिवाच्यम् । अवरुह्य कृतप्रायश्चित्तानां तदधिकारसम्भवादिति॥

सिद्धान्तस्तु– नैष्ठिकाद्याश्रमं प्राप्तानां अत्यन्तमात्मानमित्यादिवचनैरवरोहव्यावर्तनात् नचावरुह्य कृतप्रायश्चित्तानां तेषां तदधिकारसम्भवः । 'आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महे'ति प्रायश्चित्ताभावस्मृत्या तेषां पतनानुमानात् । ननु पूर्वतन्त्रे अधिकारलक्षणे षष्ठाध्याये 'अवकीर्णिपशुश्च तद्वत्' इत्यधिकरणे अवकीर्णिनां ब्रह्मचर्यप्रच्युतानां 'ब्रह्मचार्यवकीर्णी नैर्ऋतं गर्दभमालभेते'ति विहितं नैर्ऋतपशुरूपं प्रायश्चित्तं सिद्धं कृत्वाऽग्निर्विचारितः । तदधिकरणमित्थं– 'यदाहवनीये जुहोती'ति सर्वेषां होमानामाहवनीयाधारत्वविधे-

रवकीर्णाययाऽवकीर्णस्तयासह भार्यामधिगम्य वाग्नीनाधायाहवनीयेऽवकीर्णि-पशुं करोत्विति प्राप्ते 'जायापती अग्निमादधीयाता' मित्यग्न्याधानस्य दम्पतिकर्तृत्वस्मरणेन परस्त्रियासहाग्न्याधानायोगादपि 'अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहे' दित्यस्खलितब्रह्मचर्यस्य विवाहविधानेन अकृतप्रायश्चित्तस्य विवाहायोगाच्च अग्न्याधानासम्भवादुपनयनहोमवत् लौकिकाग्नावेवावकीर्णिपशुरिति पूर्वाधिकरणे लौकिकाग्नावेवोपनयनहोमसमावर्तनानन्तरं श्रुतस्य दारपरिग्रहस्योपनयनात्पूर्वमसम्भवेनाग्न्याधानरहितस्याहवनीयाभावादिति निरूपितम् । तदर्थस्सूत्रे तद्वदिति परामृष्टः । एवंचावकीर्णिपशुना कृतप्रायश्चित्तानां तेषां विद्याधिकारस्सम्भवतीति चेत् । मैवम् । उदाहृतस्मृत्या पतनानुमानेन पतितानां तेषामवकीर्णिपशावप्यधिकाराभावादवकीर्णिपशुविधानस्योपकुर्वाणब्रह्मचर्यविषयत्वात् । अथोच्येत । सामान्यमुखेन प्रवृत्ता नैर्ऋतपशुश्रुतिरुपकुर्वाणमात्रविषयत्वेन न सङ्कोचयितुं युक्ता । बाधकाभावात् । 'आरूढो नैष्ठिकं धर्म' मिति स्मृत्या विशेषविषययाऽपि बाधितुं न शक्यते । श्रुतेस्सामान्यमुखेन नैष्ठिकरूपविशेषपर्यवसानं शीघ्रप्रवृत्तिकम् । स्मृतेर्नपश्यामीति प्रायश्चित्तदर्शनाभावेन प्रायश्चित्ताभावानुमानं तेन श्रुत्यनुमानमिति विलम्ब इति विशेषसद्भावात् । अतो नैष्ठिकानां तावन्मध्वशनइव प्रायश्चित्तमस्ति । वैखानसपरिव्राजकयोरपि 'वानप्रस्थो दीक्षाभेदे कृच्छ्रद्वादशरात्रं चरित्वा महाकक्षं वर्धयेत् भिक्षुर्वानप्रस्थवत् सोमवृद्धिवर्जस्वशास्त्रसंस्कारंच' त्येवमादिप्रायश्चित्तस्मरणमस्ति । तथाऽपि तेषां न विद्याधिकारः । नरकहेतुकल्मषानिर्हरणाय प्रायश्चित्तस्मरणेऽपि कर्माधिकारानुगुणप्रायश्चित्ताभावस्य 'प्रायश्चित्तं न पश्यामी' ति स्मृतिवचनगौरवादाश्रमभ्रष्टान्नैष्ठिकादीन् कृतप्रायश्चित्तानपि शिष्टा वर्जयन्तीत्याचारदर्शनाच्च तेषां कृतप्रायश्चित्तानामपि इहासंव्यवहार्यत्वावगमात् 'नैष्ठिकानां वनस्थानां यतीनांचावकीर्णिनाम् । शुद्धानामपि लोकेऽस्मिन्प्रत्यापत्तिर्नविद्यत' इति कौशिकस्मरणाच्च । तस्मात्तदीयपापानां नरकजननशक्त्या निवृत्तावपि असंव्यवहार्यतापादकशक्त्या न निवृत्तिरिति. न तेषां विद्याधिकारः ॥

सङ्ग्रहकारिके ।

स्वाश्रमधर्मनिवृत्तेर्यावज्जीवं निषेधेऽपि ।
तन्निष्कृत्याधिकृता विद्यायामूर्ध्वरेतसस्सन्तु ॥
पतितानां हि निष्कृतिरेषां यदि सोपपत्त्या स्यात् ।
विद्याधिकारबाध्या स्मृत्याचारात्तथाऽप्येते ॥

इति तद्भूताधिकरणम् ॥ १०॥

---

**स्वामिनः फलश्रुतेरित्यात्रेयः ॥४४॥**

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥४५॥**

उपासनानुष्ठात्रननुष्ठातृविभागविचारप्रसंगादुद्गीथाद्युपासनानुष्ठात्रननुष्ठातृविभागचिंतेति संगतिः । क्रत्वंगाश्रयाण्युपासनानि किं यजमानकर्तृकाणि उत ऋत्विक्कर्तृकाणीति दहराद्युपासनागोदोहनाद्यन्यतरन्यायविषयत्वानवधारणात् संशये पूर्वपक्षः— ऋत्विक्परिक्रयस्यांगार्थत्वात् पृथक्फलवदुपासनं प्रधानमिति फलार्थिना यजमानेनैवोपासनं कार्यम् । गोदोहनादेः पृथक्फलत्वेऽपि ऋत्विक्कर्तृकप्रणयनाद्याश्रितस्य पृथक्कृत्य यजमानेनोपादातुमशक्यत्वान्नयाजमानत्वम् । उपासनानां तु क्रियारूपाणामुद्गीथादिभ्यः पृथक्कृत्य यजमानेन कर्तुं शक्यत्वात् प्रधानत्वाच्च याजमानत्वमेव युक्तम् । औद्गात्रसमाख्यादिकं तु शास्त्रफलं प्रयोक्तरीति न्यायविरोधान्नादरणीयमिति ॥

एवं प्राप्ते सिद्धान्तः— उपासनं फलसाधनत्वेन प्रधानं सदपि ऋत्विक्कर्तृकमेव सांगप्रधानकरणायैव ऋत्विक्परिक्रयणात् प्रधानं याजमानं अङ्गमार्त्विज्यमिति विभागाभावात् । यागदानादिकं तु प्रधानमिति कृत्वा न यजमानेन क्रियते । किं तु यजमानद्रव्यगतस्वत्वत्यागात्मकं तदस्वामिना ऋत्विजा कर्तुं न शक्यमिति तेन क्रियते । अतएवांगं सदपि दक्षिणादानं यजमानेन क्रियते यजमानफलसाधनकर्मकरणार्थस्य दक्षिणादानस्य यज-

मानद्रव्येण कर्तव्यत्वात्तद्गतस्वत्वत्यागस्यान्येन कर्तुमशक्यत्वात् शास्त्रफलं प्रयोक्तरीत्यौत्सर्गिकन्यायस्य ऋत्विक्परिक्रयशास्त्रानुसारेण फलभाजो यजमानस्य प्रयोजककर्तृत्वविषयतया तत्रैव पूर्वतन्त्राधिकरणे निर्णीतत्वात् । तस्मादौद्गात्रादिसमाख्ययाऽपि अनुग्रहलाभादुद्गातृशाखाद्याम्नातमुद्गीथाद्युपासनं उद्गात्रादिभिरेव कार्यम् । अतएवान्तरादित्यविद्यावाक्यशेषे श्रूयते । 'तस्मादेवंविदुद्गाता ब्रूयात् कन्ते काममागायानीत्येषह्येव कामागानस्येष्टे य एवंविद्वान् साम गायती' ति । एवंविदन्तरादित्ये अन्तरक्षाणि चोपास्यं सर्वेश्वरं देवमनुष्यलोककामावाप्तिरूपतत्तदुपासनाफलाभ्यां सह विद्वानुद्गाता यजमानं पृच्छेत् कं ते कामं ऐहिकमामुष्मिकं वा किं फलमुद्दिश्यागायानि तत्फलानुकूलोपासनासहितं गानं करवाणीति । हि यस्मादेष एवोद्गाता कामागानस्याभिमतफलसाधनोपासनासहितगानस्येष्टे य एवं विद्वान् अधिदैवताध्यात्मोपदिष्टपरमेश्वरस्वरूपं विद्वान् सामगायतीति श्रुत्यर्थः । अत्रोद्गातृकर्तृकमुपासनमिति स्पष्टम् । एवं 'यदेव विद्यया करोती' त्यादिविद्यायाः कर्तृसामानाधिकरण्यवचनमप्युदाहार्यम् । तस्मादृत्विक्कर्तृकमुद्गीथाद्युपासनम् । दहराद्युपासनस्य क्रत्वंगाश्रयत्वाभावात् ॥

संग्रहकारिके ।

उद्गीथविद्यादिपृथक्फलश्रुतेरुपासनत्वात्फलशालिकर्तृकम् ।
गोदोहनादौ क्रतुशेषसंश्रिते यथा तथा तत्र हि नास्त्यशक्यता ॥
सांगप्रधानाय परिक्रियोदितेरार्त्विज्यमेतत्फलमात्रमन्यगम् ।
आर्त्विज्यता यस्य पुनर्नसम्भवेत्तत्त्यागमात्रं यजमानकर्तृकम् ॥

इति स्वाम्यधिकरणम् ॥११॥

---

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥**

**कृत्स्नभावात्तु गृहिणोपसंहारः ॥४७॥**

**मौनवदितरेषामप्युपदेशात् ॥४८॥**

यज्ञादीनां शमादीनां च विद्यासहकारिणां निरूपणानन्तरसंगति-विशेषप्राप्तां सर्वान्नानुमत्यादिचिंतां कृत्वा पुनरपि विद्यायामेव सहकार्यन्तरं निरूप्यत इति संगतिः । ‘तस्माद्ब्राह्मणः पांडित्यं निर्विद्य बाल्येनतिष्ठासेत् बाल्यं च पांडित्यं च निर्विद्याथ मुनि’रिति कहोळब्राह्मणे श्रूयते । किमस्मिन्वाक्ये मौनमनूद्यते उत विधीयत इति मौनस्य पाण्डित्यरूपत्वतदर्थान्तराभ्यां संशये पूर्वपक्षः । मौनपाण्डित्यशब्दयोर्ज्ञानार्थत्वात् ‘पांडित्यं निर्विद्ये’ति विहितमेव ज्ञानमथमुनिरित्यत्रानूद्यत इति । अत्र सिद्धांतः—

यथा ‘यज्ञेन दानेने’त्यादिना ‘शान्तोदान्त’इत्यादिना च यज्ञादिश्शमादिश्च विद्यासहकारी विधीयते । यथा च श्रवणंमननंचार्थप्राप्तं गृह्यते तथा ‘तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्ये’त्यादिना पाण्डित्यं बाल्यं मौनमिति त्रयं विद्यायास्सहकार्यन्तरं विधीयते । तत्र बाल्यमनन्तराधिकरणे निर्वक्ष्यते । मौनं तु पाण्डित्यादन्यदेव । ऊहापोहक्षमाधीः पण्डा साऽस्यसञ्जातेति पंडितः तस्य कर्म पाण्डित्यं श्रवणमनननानन्तरं तदभ्यासपाटववशाल्लब्धया ऊहापोहक्षमया नवनवोन्मेषशालिन्या प्रतिभयाश्रुतमतार्थानुकूल्येन सकलोपनिषत्तात्पर्यप्रतिष्ठापनरूपम् । मौनं तु प्रकृष्टमननं प्रकृष्टमननशीलेषु व्यासादिषु तत्प्रयोगात् । प्रकर्षश्च मननस्य स्नेहपूर्वकतया प्रियविरहितनायिकायाः नायकविषयस्येव निरन्तरमनुवर्तमानत्वरूपं उपासनालम्बनस्य शुभाश्रयस्य भगवद्विग्रहादेः पुनःपुनः संशीलनात्मकं । तदपि विद्यानिष्पत्त्यर्थमेव । यस्योपासनकालव्यतिरिक्तकालेष्वपि गच्छतस्तिष्ठतश्शयानस्यवोपास्यविषयचिंताऽनुवर्तते, तस्यैवोपासनाकालेऽपि तद्विषयचित्तैकाग्र्याद्विद्यादृढीभवति । यस्यतूपासनाकालव्यतिरिक्तकालेषु विषयान्तरावेशः तस्योपासनाकालेऽपि चेतसि समयान्तरचिंतितविषयान्तरानुप्रवेशाद्विद्यां न दृढीभवेदिति । ननु ‘कुटुंबे शुचौ देश’ इत्यादिना गृहस्थाश्रमधर्मैर्मुक्तिरिति छान्दोग्योपनिषदुपसंहारो दृश्यत इति गृहस्थाश्रमधर्मा एव विद्यासहकारिण इति तदाशयोऽवसीयते । अतो गृहस्थानां यज्ञदानादितदर्थद्रव्यार्जनादिबहुव्यापारव्यग्रचेतसा मुक्तरूपमालम्बनसंशीलनं न घटते । अतः ‘अथमुनि’रिति पाण्डित्या-

नुवादइत्येवोचितमिति चेत् । मैवम् । न हि गृहस्थानामेव विद्या । कृत्स्नेष्वप्याश्रमेषु विद्यासद्भावे श्रुतीनामुदाहृतत्वात् । अतो गृहस्थेषु विद्योक्तिस्सर्वेषामाश्रमाणां प्रदर्शनार्था । विशिष्य गृहस्थनिर्देशस्तु यज्ञादिव्यग्रचेतसां तेषां पाण्डित्यादिसाधनत्रेयसाध्या विद्या न सम्भवतीति शङ्कानिरासार्था । यज्ञादीनामन्तःकरणशुद्धिद्वारा शुभाश्रये चेतःप्रतिष्ठोपयोगित्वान्न तैस्तदुपरोध इति तदाशयः । अथ स्यात् कहोळब्राह्मणे 'ब्राह्मणाः पुत्रेषणायाश्च वित्तेषणायाश्च लोकेषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति पारिव्रज्यैकान्तिकं धर्मोपन्यासानन्तरं 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य' त्यादि श्रूयते । तेन परिव्राजामेव पाण्डित्यादिसाध्याविद्येति प्रतीतेः कथं तस्यास्सर्वाश्रमसाधारण्यम् । अतश्छान्दोग्ये गृहस्थधर्मेणोपसंहारः केवलं गृहस्थधर्मप्रशंसार्थो न विद्याद्वारा मुक्त्यर्थत्वप्रदर्शनार्थ इति चेत् । मैवं । तत्र मौनोपदेशस्यापि 'यज्ञोध्ययनं दान' मित्यादि श्रुत्यनुसारेण सर्वेषामाश्रमाणां प्रदर्शनार्थत्वात् । तस्माद्यज्ञादिसर्वाश्रमधर्मसहकृतं बाल्यपाण्डित्ययोस्तृतीयं मौनं विधेयमिति सिद्धम् ॥

संग्रहकारिकाः ॥

अथमुनिरित्यत्र विधेश्श्रवणान्मौनमविधेयम् ।
पाण्डित्यशब्दितं यत् ज्ञानं विहितं तदनुवाद्यम् ॥
पाण्डित्याद्यन्यदिदं प्रकृष्टमननात्मकं ज्ञानम् ।
आरंभणसंशीलनमितिहि यदाचक्षते वृद्धाः ॥
पाण्डित्यबाल्ययोस्तत्तृतीयमधिकारिणो विदुषः ।
विद्यासहकारितया यज्ञादिकवद्विधेयमिह ॥

इति सहकार्यन्तरविध्यधिकरणम् ॥१२॥

---

## अनाविष्कुर्वन्नन्वयात् ॥४९॥

अथ 'बाल्येनतिष्ठासे'दित्यत्र विधेयं बाल्यं बालकर्मरूपं कीदृशमिति विचार्यते । द्विविधं हि बालस्य कर्म कामचारवादभक्षत्वादिकं अप्ररूढेन्द्रि-

यत्वदर्पाहङ्काररराहित्यादिरूपं च । द्विविधमपि विधेयमिति पूर्वपक्षः । ननु ' नाविरतोदुश्चरिता ' दिति मंत्रेण दुश्चरितव्यावृत्तिर्विद्याङ्गत्वेन विधीयते। कथमिह तदनुमतिः । समयभेदेनाविरोधइति पूर्वपक्षीमन्यते । प्रकृष्टमनन-रूपात् मौनात्प्राग्बाल्यं विधीयते, प्रज्ञानेनैनमाप्नुयादिति प्रकृष्टमननांगत्वेन दुश्चरितव्यावृत्तिर्विधीयत इति । अत्र सिद्धांतः । निर्विद्येत्यनेन समापनं नोच्यते किंतु प्रतिष्ठितत्वं । निरुपसृष्टाल्लाभार्थाद्विदेस्तन्निष्पत्तेः। अतः कामचारवादभक्षत्व दुश्चरितव्यावृत्त्योर्मौनकाले विरोधात् दर्पाहङ्कारादिराहित्येनाभिजात्यादिस्वमहिमानाविष्करणमेव बाल्यमिति युक्तम् । अस्यैवान्वययोग्यत्वात् । तथाच भारतवचनं– ' यन्नसन्तं नचासन्तं नाश्रुतं न बहुश्रुतम् । नसुवृत्तं नदुर्वृत्तं वेद कश्चित्स ब्राह्मणः ।। गूढधर्माश्रितो विद्वानज्ञातचारितं चरेत । अन्धवज्जडवच्चापि मूकवच्च महीं चरे ' दित्यादि ।।

संग्रहकारिका ।।

बालस्य कर्म बाल्यं तत्तु भवेत्कामचारादि ।
महिमानाविष्कृतिरेवात्रोदितं बाल्यम् ।।

इति अनाविष्काराधिकरणम् ।।१३।।

---

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ।।५०।।

इत्थमङ्गचिंता कृता । अथाङ्गिनिष्पत्तिसमयश्चिंत्यत इति सङ्गतिः । सन्त्यैहिकभोगभोग्याभ्युदयफला विद्यास्ताः किं स्वसाधनपुण्यकर्मानुष्ठानानन्तरमिहैव जन्मनि नियमेन भवन्ति । उतेहवा देहान्तरेवा भवन्तीत्यनियम इति संशये पूर्वपक्षः । इहैव जन्मनि भवंति स्नानात्प्रायत्यवत् । स्वर्गादिवद्देहान्तरभोग्यत्वाभावादिति । असति प्रतिबन्धे तथैव, प्रबलकर्मान्तरप्रतिबन्धे तु देहान्तर इति सिद्धान्तः ।।

संग्रहकारिका ॥

अभ्युदयफलारोहति विद्यास्वफलककर्मानन्तरमेव ।
रोहेदियमसति प्रतिबन्धे तत्सत्वे तद्विलयमपेक्ष्य ॥

इति ऐहिकाधिकरणम् ॥१४॥

---

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥**

अभ्युदयफलासु विद्यासूक्त उत्पत्तिकालानियमो मुक्तिफलास्वतिदिश्यत इति संगतिः । परविद्यासाधनानां कर्मणां अतिप्रबलत्वेन ततः प्रबलकर्मान्तराभावान्नप्रतिबन्धस्सम्भवतीति तस्मिन्नेव जन्मनि विद्यया भाव्यमिति अधिका शङ्का । भगवत्प्रीत्यतिशयहेतुत्वेन परविद्यासाधनकर्मणां प्रबलत्वेऽपि ब्रह्मविदपचाररूपैस्ततोऽपि प्रबलतरैः कर्मभिः प्रतिबन्धसम्भवात्प्रतिबन्धपरिहारार्थोद्गीथविद्यादिसाहित्याभावे नास्त्यैहिकत्वानियम् इति परिहारः ॥

संग्रहकारिके ॥

यात्वपवर्गफला परविद्या सा स्यात्कर्मानन्तरमेव ।
न हि भगवत्प्रीत्यतिशयहेतौ सम्भवति प्रतिबन्धकमस्मिन् ॥
तत्रापि ब्रह्मविदपचारः प्रायस्सम्भवति प्रतिबन्धः ।
तद्यदि विद्यारहितमकारि प्रतिबन्धं न कथं बलिना स्यात् ॥

इति मुक्तिफलाधिकरणम् ॥१५॥

---

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य श्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे तृतीयस्याध्यायस्य चतुर्थः पादः ॥

---

॥ तृतीयोऽध्यायस्समाप्तः ॥

---

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

# ॥ चतुर्थोऽध्यायः ॥

## ॥ चतुर्थस्याध्यायस्य प्रथमः पादः ॥

साधननिरूपणानन्तरं फलमस्मिन्नध्याये निरूप्यते । देहे स्थितस्य विदुषः पापाश्लेषविनाशौ मूर्धन्यनाड्या देहान्निर्गमो निर्गतस्यार्चिरादिगतिर्ब्रह्मप्राप्तिश्चेति चतुर्विधं फलम् । तदिदं चतुर्विधं फलं क्रमात्पादचतुष्टयेन विचार्यते । आदौ तावद्विद्यायां विचारणीयाः केचन विशेषा विचार्यन्ते । साधनभूताया विद्याया भक्तिदशापन्नायाः फलरूपत्वमस्तीति दर्शयितुं तृतीयविचारणीयानामपीह विचारः —

### आवृत्तिरसकृदुपदेशात् ॥१॥

### लिंगाच्च ॥ २ ॥

'ब्रह्मविदाप्नोति पर' मित्यादौ ब्रह्मप्राप्तिसाधनत्वेन श्रुता विद्या किं सकृदेवानुष्ठेया उतासकृदावर्तनीयेति संशये पूर्वपक्षः । सकृदनुष्ठेया । आवृत्तौ प्रमाणाभावात् । अवघातादिवत् दृष्टोपायत्वाभावात् । यागादिकर्मवद्वेदनमपि हि परमपुरुषाराधनरूपं आराधितात्परमपुरुषात् चतुर्विधपुरुषार्थावाप्तिरितिच 'फलमतउपपत्ते' रित्यत्र प्रतिपादितम् । ननु 'मनोब्रह्मेत्युपासीते' त्युपासिनाऽनुक्रम्य 'य एवंवेदे'त्युपसंहारात् संवर्गविद्यायां 'यस्तद्वेदे' ति विदिनोपक्रम्य 'यां देवतामुपास्स' इत्युपासिनोपसंहाराच्च वेदान्तेषु विदिधात्वर्थविधानस्यावृत्तिगर्भोपासनापर्यवसानावगमादावृत्तिः सिध्येदिनिचेत्, अस्तु त्रिचतुरावृत्त्याऽप्यावृत्तिशास्त्रार्थसिद्धिर्न तन्मात्रेणासकृदावृत्तिस्सिद्धान्त्यभिमता सिध्यतीति । राद्धान्तस्तु । 'द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इति 'ततस्तु तं पश्यति निष्कळं ध्यायमान' इति च विशदतरावभासतया विद्याया दर्शनसमानाकारतापत्त्यपेक्षाप्रतिपादनात् तादर्थ्येन 'तद्रूपप्रत्ययैकात्मा सन्ततिश्चान्यनिस्पृहा । तद्ध्यानं प्रथमैष्षड्भिरङ्गैर्निष्पद्यते तदे' ति स्मृत्यनुसारेणचासकृदावर्तनीया विद्येति ॥

संग्रहकारिके ॥

मुमुक्षुभिस्सकृत्कार्यं विहितं ब्रह्मवेदनम् ।
ज्योतिष्टोमादितुल्यं हि दृष्टार्थं नावहन्तिवत् ॥
आवर्तनीयमसकृत्तदुपास्तितया मितम् ।
उपक्रमोपसंहारशाखान्तरगतैः पदैः ॥

इति आवृत्त्यधिकरणम् ॥१॥

---

## आत्मेतितूपगच्छन्ति ग्राहयन्ति च ॥३॥

विद्यायां विशदतरावभासरूपफलार्थापत्तिप्रसूतमावृत्तिगुणकत्वं निरूपितम् । तदनन्तरं मुक्तावपि भगवत्पारतंत्र्यरूपफलार्थापत्तिप्रसूतं भगवतः स्वात्मत्वेनानुसन्धेयत्वं निरूप्यत इति सङ्गतिः । विद्यास्वीश्वरः स्वात्मत्वेन नानुसन्धेयः । किं तु पृथक्त्वेनैव । 'पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेती' ति श्रुतेः । अन्तर्यामिब्राह्मणोक्तं भगवतः स्वात्मत्वमस्तिचेत् अस्तु तन्न निषिध्यते । मुक्त्यर्थमनुसन्धानं पृथक्त्वेनैव कर्तव्यमुदाहृतश्रुतेरिति । राद्धान्तस्तु– तत्क्रतुन्यायेन मुक्तावपि भगवत्पारतंत्र्यसिध्यर्थं स्वात्मत्वेनानुसन्धानं कार्यम् । तथैव पूर्वेऽप्युपासितारोऽनुसन्दधते 'त्वंवा अहमस्मि भगवो देवतेऽहं वै त्वमसी'ति । तथैव च शास्त्राण्यन्तर्यामिब्राह्मणादीन्युपदिशन्ति । न च पृथक्त्वानुसन्धानविरोधः । स्वशरीरात् स्वात्मनैव ततोऽपि परमात्मनोऽधिकत्वेन तथाऽनुसन्धानोपपत्तेः ॥

संग्रहकारिके ।

अन्यत्वेनोपासितुरुपासनं भगवतः कार्यम् ।
नत्वहमिति भिन्नत्वात् पृथगात्मानमिति च श्रवणात् ॥
भिन्नमपि तावदात्मा ब्रह्मशरीरस्य जीवस्य ।
तस्मान्नरोऽहमितिवत् ब्रह्माहमितीदमुपपन्नम् ॥

इति आत्मत्वोपासनाधिकरणम् ॥२॥

---

## न प्रतीके न हि सः ॥४॥

## ब्रह्मदृष्टिरुत्कर्षात् ॥५॥

अहं ग्रहेष्वीश्वरस्यात्मत्वेनोपासनमुक्तम् । प्रतीकोपासनेष्वपि तच्छङ्कया सङ्गतिः । 'मनोब्रह्मे'त्यादिषु ब्रह्मण आत्मत्वेनानुसन्धानं कार्यं नवेति तस्य स्वतंत्रोपास्यत्वदृष्टिविशेषणत्वाभ्यां संशयः । यदि ब्रह्मणि मनोदृष्टिर्विधेया तदा ब्रह्मणस्स्वतन्त्रोपास्यत्वात् पूर्वाधिकरणन्यायेन तस्यात्मत्वेनानुसन्धानं कार्यम् । यदि मनसि ब्रह्मदृष्टिर्विधेया तदोपास्यस्याब्रह्मत्वात् न तथोपासनं कार्यमिति फलफालिभावः । तत्र ब्रह्मोपास्यं । मनोदृष्टिविशेषणम् । अचेतनस्य मनसः फलप्रदानाशक्तस्योपास्यत्वायोगादिति पूर्वपक्षः । मनसि ब्रह्मदृष्टिर्विधेया ब्रह्मण उत्कृष्टत्वात् । अपकृष्टेह्युत्कृष्टबुद्धिरभ्युदयाय भवति । यथा राजभृत्ये राजबुद्धिः । उत्कृष्टेत्वपकृष्टबुद्धिरनर्थायैव स्यात् । तस्मान्मनस उपास्यत्वान्नात्मत्वेनानुसंधानं कार्यम् । मनसोऽप्यभिमानिदेवतारूपेण चेतनत्वादिति ॥

सङ्ग्रहकारिके ।

एवमात्मत्वधीः कार्या प्रतीकोपासनेष्वपि ।<br>
मैवं स हि भवत्यात्मा न खलूपासकं प्रति ॥<br>
स हि ब्रह्मदृशोपास्यो नत्वत्र विपरीतता ।<br>
उत्कृष्टब्रह्मदृष्टिर्हि निकृष्टे फलदायिनी ॥

इति प्रतीकाधिकरणम् ॥३॥

---

## आदित्यादिमतयश्चांग उपपत्तेः ॥६॥

उत्कृष्टदृष्टिर्निकृष्टे कर्तव्येत्युक्तम् । तदोद्गीथादिदृष्टिरादित्यादौ कर्तव्येति शङ्कया सङ्गतिः । 'य एवासौ तपति तमुद्गीथमुपासाञ्चक्रिर' इत्यादिषु किमादित्यादावुद्गीथादिदृष्टिर्विधेया उतोद्गीथादावादित्यादिदृष्टिरित्यन्यतरोत्कर्षानवधारणात् संशये पूर्वपक्षः । आदित्यादावुद्गीथादिदृष्टिर्विधेया

फलवत्कर्माङ्गतया फलवत्त्वात्। आदित्यादेर्देवतारूपेण कर्माङ्गत्वे सत्यपि स्वतस्साध्यस्योद्गीथादेः फलसन्निकर्षात् मनोब्रह्मेत्यत्रेवादित्यादेः प्रथमनिर्दिष्टस्योपास्यत्वप्रतीतेश्चेति ॥

सिद्धांतस्तु- उद्गीथादिष्वादित्यादिदृष्टिर्विधेया। कर्मणामादित्यादिदेवताराधनद्वारेणैव फलसाधनतयाऽऽदित्यादीनामुत्कृष्टत्वोपपत्तेः। आराधनानामाराध्यदेवताप्रधानतया तदनुसारेण यद्वृत्तयोगप्राथम्यानादरोपपत्तेः। गोदोहनादिवत् साध्यानुरागेण तस्यापि साध्यतोपपत्तेस्तत्प्रयुक्तोत्कर्षस्याप्यनादरणीयत्वात्। यद्यादित्यादेः 'अर्यम्णे चरुं निर्वपेत्स्वर्गकाम' इत्यादिविध्यन्तरविहितेषु कर्मसु फलप्रदत्वेऽप्यस्मिन्नुपासनाप्रकरणे देवतात्वाभावेन फलप्रदत्वाभावात् तत उद्गीथादेरेवात्र फलवत्कर्मांगतया फलवत्त्वादुत्कृष्टत्वमुच्येत तदाऽप्युद्गीथादावेवादित्यदृष्टिर्विधेया अंगानंगसमभिव्याहारवर्तीनां विद्यानामंगेष्वंगदृष्टिरूपत्वे प्रधानकर्मप्रयुक्तांगाश्रयत्वात्। स्वतन्त्रफलानामपि तासां पृथक्प्रयुक्तिर्नकल्प्येति प्रयुक्तिलाघवाद्वैपरीत्ये प्रयुक्त्यन्तरकल्पनागौरवात् ॥ सङ्ग्रहकारिके ॥

यद्वृत्तप्राथम्यं यस्मादादित्यमुख्येषु।
फलसाधनकर्मत्वादुद्गीथादिच तदुत्कृष्टम् ॥
तस्मादुद्गीथादिदृगादित्यादिषु समाधेया।
मैवमिह देवतैव हि कर्माराध्या तदुत्कृष्टा ॥

इति आदित्यादिमत्यधिकरणम् ॥४॥

---

**आसीनस्सम्भवात् ॥७॥**

**ध्यानाच्च ॥ ८ ॥**

**अचलत्वञ्चापेक्ष्य ॥९॥**

**स्मरन्ति च ॥१०॥**

**यत्रैकाग्रता तत्राविशेषात् ॥११॥**

अवसितमहंग्रहप्रसक्तानुप्रसक्तं। परविद्याविषय एव विचारोऽनुवर्तते। परविद्यानां प्रधानफलार्थापत्तिमूलावावृत्त्यहंग्रहौ विचारितौ। इदानीमंगफलरूपप्रधानोपकारार्थापत्तिमूलोंगविशेषश्चिन्त्यते। परविद्यास्वासननियमोऽस्ति नवेति संशये नास्ति नियामकम्। नचासीनस्यैवोपासनोपयोग्यैकाग्र्यं सम्भवतीति वाच्यम्। ऋत्विक्कर्तृकांगावबद्धोपासनेष्विव तिष्ठतोऽपि तत्सम्भवात्। ऋत्विजां कर्मविध्यनुसारेण तिष्ठतामपि तत्तदंगाश्रयोपासनादर्शनादिति॥

सिद्धान्तस्तु– विशदतरावभासरूपदर्शनसमानाकारतापत्त्युपयोगिनीनां परब्रह्मोपासनानां निरन्तरस्मृतिसन्तानरूपध्रुवानुस्मृत्यात्मतया ऋत्वंगाश्रयोपासनावैषम्यात् अचलत्वसाम्यमपेक्ष्य 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्ष'मित्यादिनिर्देशदर्शनात् 'उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये' इति स्मृतेश्चासीनएवोपासीत। शयानस्य निद्रासम्भवात् गच्छतस्तिष्ठतश्च देहधारणप्रयत्नापेक्षणात्। आसीनस्यापि पश्चार्धधारणप्रयत्नोऽस्तीति तन्निवृत्त्यपेक्षायां सापाश्रय आसीत देशकालयोः परं न नियमः। एकाग्रतातिरिक्तदेशकालविशेषाश्रवणात्। एकाग्रतानुकूलो यो देशः कालश्च स एवोपासनस्य। न तु तत्र विशेषोऽस्ति। 'समे शुचौ शर्करावह्निवालुकाविवर्जिते शीतजलाश्रयादिभिः। मनोऽनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजये'दिति वचनमप्येकाग्रतोपयोगिनं देशमाह न तु देशविशेषं नियच्छति। मनोऽनुकूल इति वाक्यशेषात्॥

संग्रहकारिके॥

आसीन एव योगं कुर्यादेकाग्रतोत्पत्तेः।<br>
स्थितिगत्योरतियत्नाच्छयने निद्राभिभूतेश्च॥<br>
मनोऽनुकूलतामात्रं देशकालेष्वपेक्ष्यते।<br>
न तारारण्यतिथ्यादि वाक्यशेषे तथा श्रुतेः॥

इति आसीनाधिकरणम्॥ ९॥

---

## आप्रयाणात्तत्रापि हि दृष्टम् ॥१२॥

पूर्वाह्णादिकालनियमवदेव तावत्कालपर्यन्तमुपासनाकार्येति कालेयत्तानियमस्याप्यश्रवणात् 'सकृत्कृते कृतश्शास्त्रार्थ' इति न्यायादेकस्मिन्नेव दिने कार्या। न तु यावदायुषम्। 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तत' इति श्रुतिः कर्मणामेव यावदायुषमनुष्ठेयत्वमाह। न तु विद्याया इति पूर्वपक्षः। यावदायुषं कर्मानुष्ठानस्यापुनरावृत्तिफलकत्वमुच्यमानं विद्यां प्रति स्वरूपोपकारत्वेनैवोपपादनीयमिति तदुक्तिसामर्थ्याद्विद्याया अपि यावदायुषमनुष्ठेयत्वं तत्र विवक्षितमुन्नीयत इति तद्बलात् 'प्रायणान्तमोंकारमभिध्यायीते'ति श्रुत्यन्तरदर्शनाच्च यावदायुषमनुष्ठेयेति सिद्धान्तः॥

संग्रहकारिके॥

उपासनमिदं कार्यमेकस्मिन्नेव वासरे।
तावताऽपि कृतार्थं हि स्यादुपासनशासनम्॥
कार्यमन्वहमुपक्रमप्रभृत्याशरीरविलयादुपासनम्।
यावदायुषमिति श्रुतौ तथा प्रायणान्तमिति च श्रुतौ विधेः॥

इति आप्रयाणाधिकरणम् ॥६॥

---

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥

एवं विद्यायामावृत्त्यादिविशेषा विचारिताः। अथैतत्पादार्थभूतं पापाश्लेषविनाशरूपं फलं विचार्यत इति सङ्गतिः। 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यत' इति 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त' इति च श्रूयमाणौ पापाश्लेषविनाशौ ब्रह्मविद्याफले भवितुमर्हतो नवेति अभुक्तकर्मक्षयशास्त्रविरोधाविरोधाभ्यां संशये पूर्वपक्षः। ब्रह्मविद्याफले तौ। 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इति शास्त्रेण कर्मणां भोगैकनाश्यत्वावगत्या तयोर्विद्याफलत्वकल्पनायोगात्। न च तत्सामान्यशास्त्रं विद्याविनाश्य-

पापातिरिक्तकर्मविषयं स्यादिति वाच्यम् । विद्यायाः पापाश्लेषविनाशार्थत्वेन विधेरश्रुततया तत्संकोचकल्पकाभावात् । न च तथा विधिकल्पनं ब्रह्मप्राप्तिसाधनत्वेन विहिताया विद्यायाः फलान्तरानपेक्षत्वात् पापाश्लेषविनाशश्रवणस्य विद्याप्रशंसार्थत्वोपपत्तेरिति ॥

सिद्धान्तस्तु— विद्यालाभे सति उत्तरपूर्वाघयोरश्लेषविनाशौ भवतएव। 'तद्यथा पुष्करपलाश' इत्यादिश्रुतिषु तथा व्यपदेशात् । न च ब्रह्मप्राप्तिफलकविद्यार्थवादस्तथा व्यपदेशः अभुक्तकर्मक्षयशास्त्रानुरोधादिति वाच्यम्। भोगं विना कर्मक्षयाभावे भोगार्थं शरीरं ग्राह्यं तस्मिन्नपि शरीरे कर्मान्तरार्जनमवर्जनीयमित्यनिर्मोक्षापत्त्या मोक्षशास्त्रैरेव पापाश्लेषविनाशयोरपेक्षितत्वात् । पापाश्लेषविनाशाभुक्तकर्मक्षयशास्त्रयोर्भिन्नविषयत्वे विरोधाभावाच्च । तथा हि । अभुक्तकर्माक्षयशास्त्रं कर्मणां फलजननशक्तिं प्रतिपादयति । पापविनाशाश्लेषशास्त्रे तु प्राचीनकर्मणां फलजननसामर्थ्यविनाशशक्तिमागामिकर्मणां फलजननसामर्थ्योत्पत्तिप्रतिबन्धशक्तिं च प्रतिपादयतः । न च तत्र विरोधशङ्काऽस्ति । अग्निजलयोरौष्ण्यतन्निवारणशक्तिवदुपपत्तेः । अश्लेषवचनं प्रामादिकपापमात्रविषयं । न तु विनाशवचनवत् सर्वपापविषयम् । 'नाविरतो दुश्चरिता' दित्यादिशास्त्रैराप्रायणमहरहरनुष्ठेयाया विद्याया दुश्चरितविरतिनिष्पाद्यत्वावगमात् । 'अपिचेत्पातकं किंचिद्योगी कुर्यात्प्रमादतः । योगमेव निषेवेत नान्यत्कर्म समाचरे'दिति स्मृतेश्च । नन्विदं पापाश्लेषविनाशद्वयमुपासनारम्भप्रथमदिवसे उत मध्ये अथवा तदवसान इति विवेक्तव्यम् । मध्यं दर्शनसमानाकारापत्तिसमय इति विविक्तमेव 'क्षीयन्तेचास्य कर्माणि तस्मिन्दृष्टे परावर' इति श्रुत्या । ननु पूर्वं शरीरपातसमये कर्मक्षय उक्तः अत्र कथं समयान्तरोक्तिः । उच्यते । भगवदप्रीतिः पापं । तत्प्रीतिविशेषरूपावश्लेषविनाशौ । ततश्च दर्शनसमानाकारापत्तिसमये प्रीतः परमात्मा तत्समाप्तावुपासकस्याघं क्षमिष्य इति सङ्कल्पयतीति तद्विषयमिदमधिकरणम् । समाप्तौ क्षान्तमिति सङ्कल्पयतीति तद्विषयं पूर्वाधिकरणमिति न विरोधः ॥

संग्रहकारिके ॥

विद्योदयानन्तरपूर्वपापयोरश्लेषविध्वंसनवर्णनं स्तुतिः ।
नाभुक्तकर्माक्षयशास्त्रबाधितं विद्याफलत्वप्रतिपादनक्षमम् ॥
विभिन्नशक्त्योरनयोर्विरुद्धतानशास्त्रयोरास्ति मुधैकबाधनम् ।
अमोघशक्तेरपि किं न सम्भवेद्विनाशजन्मप्रतिबन्धकारणम् ॥

इति तदधिगमाधिकरणम् ॥७॥

---

## इतरस्याप्येवमसंश्लेषः पाते तु ॥१४॥

पापवत्पुण्यस्यापि विनाशाश्लेषातिदेशादातिदेशिकी संगतिः । तत्रेयमतिदेशनिवर्तनीयाऽधिका शङ्का । अश्लेषविनाशवचनयोः पापग्रहणात् न पुण्यस्याश्लेषविनाशौ । न च 'न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त' इति वचनान्तरे पाप्मशब्दस्य पुण्यसाधारण्यादन्यत्रापि वेदान्तेषु स्थितः पापवाची शब्दः पुण्यसाधारणः । मुमुक्षून्प्रत्यनिष्टफलत्वाविशेषादिति वाच्यम् । तथा नियमाभावात् । सर्वे पाप्मान इत्यत्र पाप्मशब्देन गृहीतानामपि जरामृत्युशोकानां 'अपहतपाप्मा विजरो विमृत्युर्विशोक' इत्यत्र पृथग्गृहीतत्वात् । एवमिहापि पापशब्दस्य पापमात्रपरत्वोपपत्तेरिति । एवमधिकशंकानिवृत्तिस्तु– वेदान्तेषु क्वचित्क्वचित्पापशब्दस्य पापमात्रपरत्वेऽपि स इह सुकृतसाधारण एव 'न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्त' इति विद्यामाहात्म्यात् सुकृतस्यापि निवृत्तिश्रवणात् तस्य मुमुक्ष्वनिष्टफलत्वन्यायसाम्येन मुमुक्षुशास्त्रप्रामाण्येनचाश्लेषसाधारणत्वादिति । ननु विदुषोऽप्युपासननिर्वृत्तये वृष्ट्यन्नाद्यादिफलानि पुण्यान्यपेक्षितानि । कथं सर्वेषां पुण्यानां विनाशः । तेषां विद्यानुगुणदृष्टफलानां यावच्छरीरधारणमनुवृत्तानां शरीरपातसमयेऽवशिष्टांशविनाश इति न विरोधः ॥

संग्रहकारिका ॥

सुकृतं विहितं हि विद्यया न तदश्लेषलयौ प्रपद्यते ।
अत एव तया स्वशब्दतो दुरितस्यैव विशिष्य तौ श्रुतौ ॥

विहितमपि तद्विद्याभाजामनिष्टफलत्वतो
दुरितसदृशं दूरे त्याज्यं परानुभवार्थिनाम् ।
तदुभयपरश्रुत्यन्तस्थं च पाप्मपदादिकं
तदिह नियतं तस्याप्यश्लेषणं सलयं तया ॥
वृष्ट्यन्नाद्यादिफलं यत्पुण्यमपेक्षितं विदुषाम् ।
यत्र तदवशिष्टं स्याच्छरीरपाते लयस्तस्य ॥

इति इतराधिकरणम् ॥ ८ ॥

---

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥१५॥

उक्तस्सुकृतदुष्कृतयोर्विद्यया नाशः किमविशेषेण उतानारब्धकार्य-योरिति 'सर्वे पाप्मानः प्रदूयन्ते, तस्य तावदेव चिर'मिति श्रुतिद्वय-विरोधात् संशये सर्वश्रुत्यविरोधादशेषयोः पुण्यपापयोर्विनाशः 'तस्य ताव-देव चिर'मिति श्रुत्युक्तं तदनन्तरदेहधारणं तु कुलालचक्रभ्रमणन्यायेन संस्कारानुवृत्त्या भविष्यतीति पूर्वपक्षः । संस्कारानुवृत्त्याचेत् क्षीणायुषाम-प्यविदुषामपि तया देहधारणं प्रसज्येत । अतो देहधारणार्थे प्रारब्धे सुकृत-दुष्कृते विहायान्येषां पुण्यपापानां विद्यया विनाशः । एवं च प्रारब्धवशा-देव विदुषामपि सुखदुःखभोगोपपत्तिः ॥

संग्रहकारिके ॥

अविशेषेण विद्यातस्स्याल्लयः पुण्यपापयोः ।
सर्वे पाप्मान इति हि श्रुतिरालक्ष्यते तथा ॥
आरब्धकार्यमपहाय तयोर्लयस्य यत्तावदेव चिरमित्यवधिः श्रुतोऽस्ति ।
संस्कारतो यदि शरीरभृतिस्समर्थ्या क्षीणायुषामविदुषामपि सा तदा स्यात् ॥

इति अनारब्धकार्याधिकरणम् ॥९॥

---

## अग्निहोत्रादितु तत्कार्यायैव तद्दर्शनात् ॥१६॥
## अतोऽन्यापिह्येकेषामुभयोः ॥१७॥

## यदेव विद्ययेति हि ॥१८॥

इतरस्याप्येवमसंश्लेष इत्यधिकरणे विद्याबलात् सुकृतस्याप्यसंश्लेष उक्तः । अतोऽग्निहोत्रादीनां नित्यनैमित्तिकानां स्वाश्रमधर्माणामपि सुकृतत्वाविशेषेण फलाश्लेषादनिच्छतोऽननुष्ठानं प्राप्तम् । न हि निष्फलं कश्चिच्चिकीर्षति । यदि नित्यनैमित्तिकानां फलवत्त्वं स्यात्, तदानीमश्लेषवचनमेव निर्विषयं स्यात् । तस्य विषयान्तरकल्पनेऽपि तेषां फलमपि न पश्यामः । नचाप्रायणमहरहरविच्छेदेन विद्यानुवृत्तिस्तत्फलम् । कर्मण इव विद्याया अप्यनुतिष्ठासामात्रेणाविच्छिन्नानुवृत्तिसिद्धेः । न च विद्यानुवृत्तिप्रतिबन्धकदुरितनिवृत्तिस्तत्फलम् । विद्याप्राचीनदुरितानां विद्यया विनाशात् विदुषस्तदनन्तरं बुद्धिपूर्वकपापचरणाप्रसक्तेः प्रामादिकस्य योगनिषेवणेन निवृत्त्युक्तेः । यद्यपि नित्यनैमित्तिकानामाश्रमधर्माणां परित्यागो न युज्यत इति प्रत्यवायपरिहारार्थमाश्रमधर्मत्वेन कथञ्चिदनुष्ठानं समर्थ्येत, तथाऽपि विद्यार्थत्वेन तेषामनुष्ठानं न सिध्यतीति ॥

सिद्धान्तस्तु– विदुषाप्याश्रमधर्मत्वेन ते विद्यार्थत्वेनाप्यनुष्ठेयाः विद्यारूपकार्यायैव तदुपदेशात । नन्वसिद्धस्तदुपदेशः, 'यज्ञेने' त्यादिश्रुतेर्विद्योदयात्प्राक् तादर्थ्येन विधानार्थतोपपत्तेः, 'स खल्वेवं वर्तय' न्नित्यादिश्रुतेराश्रमधर्मानुवृत्तिमात्रविषयत्वोपपत्तेरिति चेन्न । उदाहृतश्रुतिद्वयस्याप्यन्तिमप्रत्ययपर्यन्तविद्यार्थकर्मानुवृत्तिविषयत्वस्यापि सम्भवे तथा सङ्कोचकल्पनायोगात् । न च नैष्फल्यम् । यावद्विद्यानुवृत्त्यनुष्ठेयत्वेन साहितस्य विद्यासहकारिकर्मजातस्य मध्ये बुद्धिपूर्वं त्यागे सत्ययथाशास्त्रानुष्ठानतः प्रत्यवायेन चित्तदूषणात् विद्यानुवृत्तिर्न स्यात् । चित्तदोषे हि सति कदाचिद्विद्यानुवर्तयिषा वा विच्छिद्येत । अन्तिमप्रत्ययविरोधिनिषिद्धानुष्ठानरुचिर्वोत्पद्येत । अतो दर्शनसमानाकारविद्योदयानन्तरमपि यावज्जीवं विद्यार्थकर्माण्यनुष्ठेयानीति । यद्यग्निहोत्रादिसाधुकृत्या विद्योत्पत्त्यर्था विद्योत्पत्तेः प्राचीनं च विद्योदयकाले स्थितं प्रारब्धफलव्यतिरिक्तं सर्वं सुकृतं विद्यया विनष्टं प्रारब्धफलं च सुकृतं भोगेन नाश्यं, तर्हि 'सुहृदस्साधुकृत्या' मित्यस्य को

विषय इति चेत्। उच्यते– विद्योत्पत्त्यर्थाया: अग्निहोत्रादिसाधुकृत्याया: वि- द्योत्पत्तेः प्राचीनायाश्च साधुकृत्यायाः अन्या अपि विदुषा कृता देहधारणार्था वृष्ट्यन्नाद्यादिफलास्साधुकृत्यास्तत्र या प्रबलकर्मान्तरप्रतिबन्धात् प्रागभुक्त- फलाऽस्ति सा तस्या विषयः। विद्यारहितकर्मणां प्रबलकर्मान्तरप्रतिबन्ध- सम्भवस्य 'यदेव विद्यया करोती'ति श्रुत्याऽवगतत्वादिति। अत्रेदं विचा- र्यते– 'इतरस्याप्येवमसंश्लेषः पाते'त्विति सूत्रे वृष्ट्यन्नाद्यादिफलायाः साधुकृत्यायाः भुक्तफलावशिष्टायाश्शरीरपातसमये विनाश उक्तः कथं त- स्यास्सुहृद्गामित्वमुच्यते। अथ विदुषि फलाजनकत्वमेव तत्र तन्नाशो वि- वक्षितः, तर्हि विद्योदयकाले पुण्यान्तरनाशोऽपि तथैव वक्तुं शक्य इति विदुषस्सर्वस्या अपि साधुकृत्यायास्सुहृद्गामित्वे वक्तुं शक्ये किमिति 'सुहृ- दस्साधुकृत्या' मित्यस्य वृष्ट्यन्नाद्यादिफलसाधुकृत्यामात्रविषयत्वेन सङ्कोचः क्रियते। अपि च 'द्विषन्तः पापकृत्या' मित्यस्य कं विषयं दृष्ट्वा 'सुहृद- स्साधुकृत्या' मित्यस्यैव विषयविशेषनिर्धारणं क्रियते। विद्योत्पत्त्यनन्तर- भाविनी पापकृत्या तस्य विषयः स्यादिति चेत् न। तस्यामप्यश्लेषवचन- सत्त्वसाम्यात्। यदि तत्राश्लेषवचनं विदुषि फलाजनकत्वमात्रार्थकमित्य- ध्यवसायः, तर्हि विदुषि साधुकृत्याया अश्लेषवचनमपि तथैवेत्यध्यवसितुं शक्यत्वात् विशिष्टसाधुकृत्यायाः गत्युक्तिर्नापेक्षिता। गतिरपि प्रबलकर्मान्त- रप्रतिबद्धफलैव साधुकृत्येति न सङ्कोचनीयम्। तदप्रतिबद्धफलाया अपि साधुकृत्यायास्सम्भवात्। यस्य विद्याप्रतिबन्धकदुरितान्यल्पानि तद्भूयस्त्व- शङ्कया तन्निवृत्त्यर्थमनुष्ठितानि कर्माणि भूयांसि तत्र प्रारब्धप्रतिबन्धकवि- घ्नाधिकसंख्यानि मङ्गळानीव कारीरिवददत्तफलान्यवशिष्यन्ते उपासकस्य वीतरागत्वेऽपि भ्रमात्तदभ्युदयेच्छया पुत्रादिभिरनुष्ठितानि तटाकारामप्रति- ष्ठादीन्यपि हि सम्भाव्यन्ते। अपि च तदधिगमाधिकरणे विनाशाश्लेषशा- स्त्रयोरभुक्तकर्माक्षयशास्त्रेण विरोधसमाधानार्थं तयोस्तस्य च भिन्नविषयत्व- समर्थनावसरे विनाशशास्त्रं विदुषि प्राचीनकर्मणां फलजननसामर्थ्यविनाश- शक्तिं अश्लेषशास्त्रं विदुषि फलजननसामर्थ्योत्पत्तिप्रतिबन्धशक्तिं च प्रति-

पादयतीत्युक्तम् । तत्र स्वरूपविनाशः स्वरूपाश्लेषश्चोक्तः । तत एवावगतेऽर्थे पुनः साधुकृत्यायाः विषयप्रश्नस्य कोऽवकाशः । तस्मात्सर्वमिदमनुपपन्नमिति । अत्रेदं समाधानम्- प्राचीनसाधुकृत्याया अपि सुहृत्संक्रमणमस्त्येव । तद्विनाशशास्त्रस्य यथाश्रुतार्थं गृहीत्वा यदि कश्चिन्मन्येत विनष्टायास्तस्यास्सुहृत्संक्रमणशास्त्रविषयत्वं नास्तीति तदाशयमनुरुध्य सुहृत्संक्रमणवाक्ये विषयप्रश्नः तदाशयमनुरुध्यैव साधुकृत्यान्तराणां विनाशेऽप्यन्ततो विद्वद्देहधारणार्थत्वेनानुवृत्ता वृष्ट्यादिफलासाधुकृत्यास्तीति तद्विषयत्वोक्तिः । एवमेव सुकृतान्तरसद्भावेऽपि तद्विषयतानुक्तिः । एवं सति 'द्विषन्तः पापकृत्या'मित्यस्यापि यद्यपि गतिप्रश्नतदुत्तराभ्यां भाव्यं तुल्यन्यायत्वात्, तथाऽपि तस्य विदुषा प्रमादेन कृतं प्रमादेनानवकाशेन वा यदकृतयोगनिषवणरूपप्रायश्चित्तं दुष्कृतं तद्विषयो भविष्यतीति न्यायसाम्येनोन्नेतु शक्यत्वात्तदनुक्तिः । तदधिगमाधिकरणोक्तसुहृद्विषत्संक्रमणशास्त्रविषयसद्भावेऽपि यथाश्रुतविनाशशास्त्रार्थश्रद्धालुतटस्थशङ्कानुरोधादेवं प्रश्नोत्तरे इति सर्वमवदातम् ॥

संग्रहकारिके ।

न श्लिष्यति चेत्सुकृतं न कार्यमेवाग्निहोत्रादि ।
विदुषामेवं विद्यावैशद्यार्थं तदहरहःकार्यम् ॥
यत्तु विदुषा कृतं स्याद्वृष्ट्यारोग्यादिसिद्धये कर्म ।
प्रबलप्रतिबद्धफलं तस्यैवसुहृद्गतेरुक्तिः ॥

इति अग्निहोत्राद्यधिकरणम् ॥१०॥

---

## भोगेनत्वितरे क्षपयित्वा सम्पद्यते ॥११॥

आरब्धकार्ययोः पुण्यपापयोः भोगेनैव विनाशः, न तु विद्ययेत्युक्तम् । ते किं विद्यायोनिशरीरावसान एवेति नियमः, उत शरीरान्तरावसानेऽपीत्यनियम इति संशये विद्यायोनिशरीरावसान एव 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानी'ति 'तस्य तावदेव चिरं यावन्नविमोक्ष्ये'

इति च शरीरमात्रावधिश्रवणादिति पूर्वपक्षः । प्रारब्धस्यैकदेहमात्रभोग्यत्वे तथैव, अनेकदेहभोग्यत्वे तु तदवसाने पुण्यपापे इति तदनन्तरब्रह्मसम्पत्तिः । 'धूत्वा शरीर' मित्येकवचनं न विवक्षितम् । 'विधूय पाप' मिति तत्रैव दर्शनात् । 'तस्य तावदेवे' ति श्रुतौ 'यावन्नविमोक्ष्य' इति प्रारब्धकर्म-मोक्ष एवोक्तः न तु विद्यायोनिशरीरमोक्षः । तदेवं ब्रह्मविद्यायाः प्रागनुष्ठित मभुक्तफलमनारब्धफलञ्च पुण्यपापरूपं सर्वं कर्म विद्यामाहात्म्याद्विदुषि स्वस्वफलाजनकं भवति । विद्यारम्भोत्तरकालमनुष्ठितं च विद्यार्थकर्मव्यति-रिक्तं सर्वं तत्र फलजननासमर्थं भवति । तदिदं विदुषः पुण्यपापं सर्वं कर्म विदुषः सुहृद्द्विषतोस्संक्रामति । प्रारब्धंत्वेकेनानेकेन वा देहेन भुक्तं क्षीयते । तदनन्तरं ब्रह्मसम्पत्तिरिति सर्वं निरवद्यम् ॥

संग्रहकारिकाः ॥

यस्मिन्देहे विद्याजनि स्तदवसान एव मुक्तिस्स्यात् ।
धूत्वा शरीरमिति यद्यावन्नविमोक्ष्य इति च यदधीतम् ॥
तस्मिन्नन्यस्मिन्वा यस्मिन्निश्शेषतामेति ।
प्रारब्धं फलभोगैस्तद्देहान्ते भवेन्मुक्तिः ॥
धूत्वा शरीरमित्येकवचनं न विवक्षितम् ।
प्रारब्धस्य विमोक्षश्च विमोक्ष्य इति कीर्तितः ॥

इति इतरक्षपणाधिकरणम् ॥ ११ ॥

---

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य श्रीविश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूख-मालिकाख्ये द्वितीयपरिच्छेदे चतुर्थस्याध्यायस्य प्रथमः पादः ॥

---

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

---

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

## ॥ चतुर्थस्याध्यायस्य द्वितीयः पादः ॥



इह पादे विदुषो मूर्धन्यनाड्योत्क्रान्तिरूपमर्चिरादिगत्या ब्रह्मप्राप्तिहेतुत्वेन विद्याफलभूतं चिन्तनीयम् । तत्र मूर्धन्यनाडीप्रवेशपर्यन्तोत्क्रान्तिर्विद्वदविदुषोस्साधारणीति सा प्रथमं विचार्यते । उपासनास्वर्चिरादिगतिचिन्तायां गत्युपक्रमत्वेन तस्या अपि चिन्तनीयत्वात् ।

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥१॥

### अतएव सर्वाण्यनु ॥२॥

छान्दोग्ये श्रूयते — 'अस्य सोम्यपुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनःप्राणे प्राणस्तेजसि तेजःपरस्यां देवताया'मिति । अत्र किं वाचो मनसि सम्पत्तिरुत वाग्वृत्तेरिति संशये 'सता सोम्य तदा सम्पन्नो भवती'त्यत्र सम्पत्तिशब्दस्य लयार्थत्वावगमात् वाचः स्वाप्रकृतौ मनसि स्वरूपलयासम्भवात् अप्रकृतावपि वृत्तिलयस्य जलक्षिप्ताङ्गारगतप्रकाशादिवृत्तिलयदर्शनेन कथञ्चिदुपपत्तेर्वृत्तिलय इति पूर्वपक्षः । वाग्व्यापारोपरमानन्तरमपि मनःप्रवृत्तिदर्शनात् 'वाङ्मनसि सम्पद्यत' इति श्रुतेश्च वाचएव मनसि लयः । वाक्छब्दस्य वृत्तिलक्षणायां कारणाभावात् । लयस्तु वाचः व्यापारोपरमपूर्वकमनस्संयोगरूप औपचारिको ग्राह्यः । वृत्तिपक्षेऽपि वाक्प्रकृतिकवृत्तिना मनसि मुख्यलयासम्भवात् वाचि सम्पद्यमानायामन्यान्यपि बाह्येन्द्रियाणि मनसि सम्पद्यन्ते । 'इन्द्रियैर्मनसि सम्पद्यमानै'रिति श्रुत्यन्तरात् ॥

संग्रहकारिके ॥

वागिन्द्रियमप्रकृतौ न मनसि सम्पद्यते मुमुक्षूणाम् ।<br>
वाङ्मनसीति हि वाक्यं योज्यं वाग्वृत्तिविषयतया ॥<br>
वागेव सहान्येन्द्रियमस्मिन्सम्पद्यते दृशश्शब्दात् ।<br>
सम्पत्तिरिह तु न लयः किं तु व्यापाररहितसंयोगः ॥

इति वागधिकरणम् ॥ १ ॥

## तन्मनः प्राणउत्तरात् ॥३॥

मनः प्राण इत्यत्र तु मुख्य एव लयः 'अन्नमयं हि सोम्य मनः आपोमयः प्राण' इति श्रुत्या मनोऽन्नशब्दोक्तायाः पृथिव्या विकारः, प्राणस्त्वपां विकार इत्युक्तत्वेन मनसः स्वप्रकृतिभावापन्नस्य प्राणप्रकृतिभावापन्नास्वप्सु मुख्यलयसम्भवादिति पूर्वःपक्षः । मनोऽहङ्कारप्रकृतिकं, प्राणवायुराकाशप्रकृतिक इति तयोर्नास्ति कथमपि प्रकृतिविकृतिभावः । तस्मात् 'अन्नमयंही'त्यादिश्रुतौ मनसोदनीयेन प्राणस्याद्भ्यश्चाप्यायनमात्रं विवक्षितमिति सकलबाह्येन्द्रियसंयुक्तं मनः स्वव्यापारोपरमपूर्वकं प्राणेन संसृज्यत इत्येव तदर्थो ग्राह्यः । मनोवृत्त्युपरमानन्तरमपि हि प्राणवृत्तिर्दृश्यत इति सिद्धान्तः ॥ संग्रहकारिके ।

मनसस्तु प्राणे स्याल्लयएव प्रकृतिविकृतितासत्त्वात् ।
अन्नमयं हि मनश्श्रुतमम्भोविकृतिस्तथा प्राणाः ॥
नैवमहंकृतिगगनप्रकृतिकयोरन्नतोयाभ्याम् ।
आप्यायनमेव तयोरातस्तत्रापि संयोगः ॥

इति मनोऽधिकरणम् ॥ २ ॥

---

## सोऽध्यक्ष तदुपगमादिभ्यः ॥४॥

प्राणः किं जीवे सम्पद्यते, उत तेजसीति विशये यथाश्रुति तेजस्येव सम्पद्यते, यथा वाङ्मनसि मनश्च प्राण इति पूर्वपक्षः । बाह्येन्द्रियमनस्संयुक्तः प्राणो जीवे सम्पद्यते । 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ती'ति तदुपगमश्रवणात् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति सप्राणजीवोत्क्रमणश्रवणात् । 'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठे प्रतिष्ठास्यामीति स प्राणमसृजते'ति प्राणस्य जीवस्य च सह प्रतिष्ठाश्रवणाच्च । अतः प्राणस्य जीवेन संयुज्य जीवेन सह तेजसि सम्पत्तिरस्तीति 'प्राणस्तेजसी'त्यस्यापि न विरोधः ॥ यमुनाया गङ्गया संयुज्य सागरप्राप्तावपि हि यमुना सागरं प्राप्नोतीति व्यवह्रियते ॥

संग्रहकारिके ॥

प्राणस्तेजसि साक्षात्सम्पद्यत इति यथाश्रुतं युक्तम् ।
नैवं तस्य तदानीं जीवोपगमादिकश्रवणात् ॥
प्रथमं यदि जीवमितस्तेजसि सम्पद्यते स तत्सहितः ।
एवमपि श्रुतिरुचिता यथैव सागरमुपैति यमुनेति ॥

इति अध्यक्षाधिकरणम् ॥ ३ ॥

---

## भूतेषु तच्छ्रुतेः ॥ ५ ॥

## नैकस्मिन्दर्शयतो हि ॥ ६ ॥

जीवसंयुक्तस्य प्राणस्य तेजसि श्रुता सम्पत्तिः किं तेजोमात्रे, उत सर्वेषु भूतेष्विति संशये यथाश्रुति तेजोमात्र इति पूर्वपक्षः । सर्वेषु भूतेषु सम्पद्यते 'पृथिवीमय आपोमयस्तेजोमय' इति जीवस्य सञ्चरतस्सर्वभूतमयत्वश्रुतेः । न च तेजःप्रभृतिषु क्रमिकसञ्चारेण तदुपपत्तिः । 'तासां त्रिवृतं त्रिवृतमेकैकामकरोत्' 'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन्प्रजाःस्रष्टुमसमागम्य कृत्स्नशः ॥ समेत्यान्योन्यसयोगं परस्परसमाश्रयाः। महदाद्या विशेषान्ताह्यण्डमुत्पादयन्ति त' इति श्रुतिस्मृतिभ्यामेकैकस्य कार्याक्षमत्वप्रदर्शनात् । अतस्तेजश्शब्दो भूतान्तरसंसृष्टं तेजोऽभिधत्त इति सर्वेषु भूतेषु सम्पत्तिरिति सिद्धान्तः ॥

सङ्ग्रहकारिके ॥

सा सम्पत्तिस्तेजोमात्रे प्राणस्य जीवसहितस्य ।
अन्येष्वपि सा भूतेष्वपेक्ष्यते चेत्क्रमेण साऽप्यस्तु ॥
नैवं भूतगणस्य प्रत्येकसमर्थताभावात् ।
नैकस्मिन्सा युक्ता तस्मात्सर्वेषु भूतेषु ॥

इति भूताधिकरणम् ॥ ४ ॥

---

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

तदापीतेस्संसारव्यपदेशात् ॥८॥
सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥९॥
नोपमर्देनातः ॥ १० ॥
अस्यैवचोपपत्तेरूष्मा ॥११॥
प्रतिषेधादिति चेन्न शारीरात्स्पष्टोह्येकेषाम् ॥१२॥

एवमुत्क्रान्तिप्रकारो निरूपितः । किमियमुत्क्रान्तिर्विद्वदविदुषोस्समाना, उताविदुष एवेति संशये सत्यविदुष एवेति प्राप्तम् । 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुत' इति श्रुतेरिति । एवं प्राप्त उच्यते– विदुषोऽपि 'तयोर्ध्वमायन्नमृतत्वमेती'ति नाडीविशेषप्रवेशरूपगत्युपक्रमात्प्रागुत्क्रान्तिस्समाना । उत्क्रमणार्थनाडीप्रवेशदशायामेव विद्वदविदुषोर्विशेषः श्रूयते । 'शतञ्चैकाच हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' इति । विष्वगिति नाडीविशेषनियमाभाव उच्यते । 'एष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा अन्येभ्यो वा शरीरदेशेभ्य' इति हि श्रुत्यन्तरम् । एवंच अत्रैवामृतत्वोक्तिश्शरीरेंद्रियसम्बन्धमदग्ध्वैव यदमृतत्वमुत्तरपूर्वाघाश्लेषविनाशरूपं तद्विषया 'ब्रह्मसमश्नुत' इत्युक्तिरप्युपासनाकालभवब्रह्मानुभवरूपब्रह्मप्राप्तिविषया । अवश्यचैवमेवाभ्युपेयम् । अर्चिरादिमार्गेण ब्रह्मप्राप्तिपर्यन्तं देहसम्बन्धलक्षणसंसारस्य 'धूत्वाशरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानी' त्यादिश्रुतिषु व्यपदेशात् सूक्ष्मशरीरानुवृत्तेश्चन्द्रसंवादरूपप्रमाणेनावगमाच्च । श्रूयते हि पथि चन्द्रसंवादो 'येवैकेचास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'त्युपक्रम्य 'एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमाः तं यः प्रत्याह तमतिसृजते अथ य एनं न प्रत्याह तमिह वृष्टिर्भूत्वा वर्षति स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परस्वान्वा पुरुषोवा अन्योवै तेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यं तमागतं पृच्छति कोऽसीति तं प्रति ब्रूया'

दित्यादि । अतो 'यदा सर्वे प्रमुच्यन्त' इति श्रुतिर्न शरीरेन्द्रियरूपबन्धोपमर्दविषया । सूक्ष्मशरीरस्योत्क्रम्य जीवेन सह गतेश्चन्द्रसंवादार्थं तदन्तरप्रतिपत्ताविति सूत्रोक्तन्यायेनावश्यवक्तव्यत्वात् । एवं विदुषोऽपि सूक्ष्मशरीरस्योत्क्रमणसत्त्वादेव तस्योत्क्रमणोन्मुखस्य 'सन्तापयति स्वं देहमापादतलमस्तक' मिति श्रुतेस्सर्वदेहव्याप्यग्निशिखायाः क्वचिदेवोपसह्रियमाणत्वात्तदूष्मा क्वचिदेवोपलभ्यते । ननु विदुष उत्क्रान्तिर्नसम्भवति । 'यो कामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येती' ति तस्योत्क्रान्तिप्रतिषेधात् । न च 'न तस्मात्प्राणा उत्क्रामन्ती' ति माध्यन्दिनपाठात् तस्येति काण्वपाठे सम्बन्धसामान्यविहिता षष्ठी 'नटस्य शृणोती' ति वदपादानार्थेति मुच्यमानान्नविश्लिष्यन्त इति तदर्थ इति वाच्यम् । शाखाद्वयेऽपि तत्पदस्य शरीरपरामर्शित्वात् । बृहदारण्यक एव 'यत्रायं पुरुषो म्रियते उदस्मात्प्राणाः क्रामन्त्याहोने' त्यार्तभागप्रश्ने नेतिहोवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मातो मृतश्शेत इति प्राणोत्क्रान्त्यपादानस्याध्मानेन वायुपूरणेन दृतिवदुच्छ्वसनस्य शरीरधर्मस्य कीर्तनात् जीवात्प्राणानामुत्क्रान्तेरप्रसक्तत्वेन तत्प्रतिषेधानुपपत्तेश्च । अतो विदुषश्शरीरादुत्क्रान्त्यभावादर्चिरादिगतिश्चन्द्रसंवाद सुकृतदुष्कृतविधूननमित्येतत्सर्वं सत्यलोकप्राप्त्यर्थविद्याविशेषफलं न तु मुक्त्यर्थब्रह्मविद्याफलमिति नेतव्यम् । ब्रह्मविदो मरणकाले क्वाचित्कोष्मदर्शनं तु तेजश्शब्दोक्तस्य सूक्ष्मदेहस्य परदेवतासम्पत्तेः प्राचीनत्वेनोपपद्यत इति चेदुच्यते । आर्तभागप्रश्ने शरीरादुत्क्रान्तिर्न प्रतिषिध्यते किं तु शरीरादेव तत्रोत्क्रान्तिप्रतिषेधस्याविद्वद्विषयत्वेन अविदुषः प्राणानां शरीरादुत्क्रान्तेः प्रतिषेद्धुमशक्यत्वात् । अविद्वद्विषयत्वं कथमवसीयत इति चेत्, उत्तरसन्दर्भात् । उत्तरसंदर्भे 'यत्रास्य पुरुषस्यमृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशश्श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितंच रेतश्च निधीयते क्वायं तदा पुरुषो भवती' त्यार्तभागप्रश्ने याज्ञवल्क्येनार्तभागेन च रहसि सम्मन्त्रणेन पुण्यपापरूपं कर्म

तदाश्रयत्वेन निश्चितमिति तदनन्तरसन्दर्भे श्रुत्यैवप्रतिपादनात् । तत्र हि श्रूयते 'तौहोत्क्रम्य मन्त्रयांचक्राते तौहयदूचतुः कर्महैवतदूचतुः अथ यत्प्रशशंसतुः कर्महैव प्रशशंसतुः पुण्योवैपुण्येन कर्मणा भवति पापः पापेने'ति । न च 'अपपुनर्मृत्युंजयती'ति पूर्ववाक्ये संसारसंतरणरूपं फलमुच्यते तेन प्रकृतविद्वद्विषयत्वमुत्क्रान्तिप्रतिषेधस्यावसीयत इति वाच्यम् । 'अग्निर्वै मृत्युस्सोपामन्न'मित्यपामग्न्यन्नत्वोपासनामुक्त्वा हि तस्य फलं 'अपपुनर्मृत्युञ्जयती'त्युच्यते । तस्मादग्निजयएवात्र मृत्युजयो न संसारतरणं जीवात्प्राणानामुत्क्रान्तिरप्रसक्ता न प्रतिषेध्येति चेत् न । विद्वद्विषये 'तस्य तावदेव चिर'मिति शरीरवियोगकाले ब्रह्मसम्पत्तिवचनेन विदुषः प्राणानामपि स्थूलशरीरवियोगकालएव विश्लेष इति शङ्कारूपप्रसक्तिसत्त्वात् । एवं प्रसक्त्या विशिष्य विदुषो जीवात्प्राणानामुत्क्रान्तिप्रतिषेधेनाविदुषस्तर्हि जीवात्प्राणानामुत्क्रान्तिरस्तिकिमित्यविद्वद्विषयेऽपि शङ्कारूपप्रसक्तिसत्त्वाच्च । तस्मादस्ति विदुषोऽप्युत्क्रान्तिः । स्मर्यते च तस्य मूर्धन्यनाड्योत्क्रान्तिः 'ऊर्ध्वमेकस्स्थितस्तेषां यो भित्वा सूर्यमण्डलम् । ब्रह्मलोकमतिक्रम्य तेन याति परां गति'मिति नाडीविशेषाणां मध्ये यस्सूर्यमण्डलं भित्वोर्ध्वं स्थितः तेन मूर्द्धसम्बन्धिनाडीविशेषाणां मध्येऽपि सूर्यमण्डलपर्यन्तप्रसृतनाडीविशेषेण ब्रह्मलोकातीतं परमं पदं प्राप्नोतीत्यर्थः । तस्य याज्ञवल्क्यवचनस्योदाहरणेन 'चक्षुषो वा मूर्ध्नो वे'त्यविद्वद्विषये मूर्धग्रहणं मूर्धसम्बन्धिनाड्यन्तरविषयमित्यपि सूचितम् ॥

सङ्ग्रहकारिकाः ॥

उत्क्रान्तिर्नास्ति विदुषां तत्रैवामृतताश्रुतेः ।<br>
न तस्य प्राणा इति च तदुत्क्रान्तेर्निषेधनात् ॥<br>
नैवमस्त्येव तेषामप्येषा श्रुतिषु वाञ्छिता ।<br>
आगत्युपक्रमात्तेषां समानाचेतरैरसा ॥<br>
कर्मप्रहाणरूपात्र तेषाममृतता श्रुता ।<br>
देहबन्धमदग्ध्वैव ब्रह्मप्राप्तिर्ब्रह्मचिंतनम् ॥

न तु तदुभयं मुख्यं ब्रह्मार्चिरादिपथेन हि
स्थितिमदुपरि प्राप्तं तत्रैव बन्धविधूननम्।
तदवधिवपुस्सूक्ष्मं येनेन्दुसंवदनादिकं
वपुषि विदुषः काचित्कोष्मा च यस्य विनिष्क्रमे॥
प्राणोत्क्रान्तिनिषेधनं न वपुषः किंत्वात्मनः प्रस्तुतात्
ब्रह्मविद्विषयार्तभागविहितप्रश्नोत्तरे तद्यथा।
षष्ठी चात्र वदत्यपेक्षितमपादानत्वमेवात्मनः
किञ्चात्र स्फुटमामनन्ति वचने माध्यन्दिनाः पञ्चमीम्॥
प्राणोत्क्रातिनिषेधो विदुषोऽविदुषश्च वर्ण्यते जीवात्।
देहवियोगे तेषामपि शङ्केरन्नतो वियोगमिति॥

इति आसृत्युपक्रमाधिकरणम्॥ ९॥

---

## तानि परे तथाह्याह॥ १३॥

सकरणग्रामस्सप्राणश्शरीरेन्द्रियाध्यक्षो जीव उत्क्रान्तौ भूतसूक्ष्मेषु सम्पद्यत इत्युक्तम्। सैषा सम्पत्तिर्विदुषो विद्यत इत्याशंक्य परिहृतं च। तानि जीवपरिष्वक्तानि भूतसूक्ष्माणि किं यथाकर्म यथाविद्यं च जीवेन सह स्वकार्याय गच्छन्ति, उत परमात्मनि सम्पद्यन्त इति चिन्त्यते। ननु 'तेजः परस्यां देवताया'मिति चतुर्थवाक्यार्थचिन्तेयम्। सा प्राणस्तेजसीत्यन्तवाक्यत्रयार्थविषयाधिकरणत्रयानन्तरमेव कर्तुमुचिता। चतुर्थवाक्यार्थस्याप्युत्क्रान्तिविषयस्य गत्युपक्रमात्प्राचीनत्वात्। एवं सप्रकारोत्क्रान्तिविचारानन्तरमेव सेयमुत्क्रान्तिर्विदुषोऽपि समानेति 'समानाचासृत्युपक्रमा' दित्यधिकरणेन निरूपणीयम्। सत्यम्। उक्तभङ्ग्या प्राक्सङ्गत्या तस्यास्याधिकरणस्यात्राप्यस्तीत्याक्षेपिकी सङ्गतिः। ब्रह्मविदामुत्क्रान्तिपूर्विका गतिरस्तीति पूर्वाधिकरणोक्तमयुक्तम्। 'तेजःपरस्यां देवताया' मिति वागादिमनःप्राणसहितस्य सूक्ष्मदेहस्य सर्वप्रकृतिभूतपरब्रह्मणि स्वरूपेणैव लयप्रतिपादनात् देहेन्द्रियादिरहितस्य चन्द्रसंवादाद्यसम्भवेन तद्युक्ताया अर्चिरादिगतेरन्य-

विषयस्यावश्यवक्तव्यत्वादिति । अत्रैवं पूर्वपक्षः । मध्ये परमात्मसम्पत्तौ सुखदुःखोपभोगरूपकार्यादर्शनात्तदुपभोगरूपकार्यानुगुण्येन यथाकर्म यथाविधं गच्छन्ति । तेजःपरस्यामिति तु परमात्मनस्सर्ववस्तुसाधारणं धारकत्वमनूद्यतइति ॥

सिद्धान्तस्तु— प्रकृतानि भूतसूक्ष्माणि परमात्मनि सम्पद्यन्ते । तेजःपरस्यां देवतायामितिह्याह श्रुतिः । श्रुतोपपत्तये च फलं परमात्मनि सम्पत्त्या सुषुप्तिप्रळययोरिव विश्रमरूपं कल्पनीयम् । परमात्मनि नित्यान्तरवस्थितस्यापि जीवस्य तदानीं विश्रमहेतुस्तत्संसर्गविशेषश्शास्त्रैकसमधिगम्यः । एवं 'तेजःपरस्यान्देवताया' मित्यस्यापूर्वार्थपरत्वसम्भवात् न सर्ववस्तुसाधारणधारकतानुवादकत्वं कल्पनीयमिति ॥

संग्रहकारिकाः ॥

जीवयुक्तानि भूतानि गच्छन्त्येव यथाफलम् ।
सम्पद्यन्ते फलाभावान्नमध्ये परमात्मनि ॥
तेजःपरस्यामिति तु सर्वसाधारणीं विभोः ।
आधारतामनुवदत्येषामन्यत्र गच्छताम् ॥
मैवं तेजः परस्यामित्युक्तिसाफल्यसिद्धये ।
स्वीकार्या तत्र सम्पत्तिस्सुप्तिप्रलययोरिव ॥

इति परसम्पत्त्यधिकरणम् ॥६॥

---

## अविभागो वचनात् ॥१४॥

सेयं परमात्मनि सम्पत्तिः प्राकृतप्रलयवत् कारणापत्तिरूपाऽस्तु । परमात्मनः सर्वप्रकृतित्वेन मनआदिवैषम्यादिति प्राप्त उच्यते । पृथग्व्यवहारानर्हसंसर्गरूपमविभागमात्रमेव । 'तेजःपरस्या' मित्यत्रापि सम्पद्यत इत्यस्यानुषङ्गात्तस्य प्राक्संसर्गविशेषवाचित्वाक्लृप्तेः । इहानुषक्तस्येहार्थभेदे प्रमाणाभावात् । प्राकृतप्रलयानन्तरं महासर्गादाविव पुनस्सृष्ट्यवचनाच्च ॥

संग्रहकारिका ॥
सेयं सम्पत्तिस्स्यात्लय एव प्रकृतिगामित्वात् ।
पूर्ववदेव तदर्थकसम्पद्यनुषङ्गतो भवेदेषः ॥
इति अविभागाधिकरणम् ॥ ७ ॥

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ।१६।**

एवं विद्वदविदुषोस्समानउत्क्रान्तिप्रकार उक्तः । गत्युपक्रमे विदुषो मूर्धन्यनाड्योत्क्रान्तिनियमरूपो विशेष उच्यते । अत्र मूर्धन्यया ब्रह्मनाड्यैव विदुषो गतिर्नान्येषां तथा गतिरिति नियन्तुं न शक्यते । नाडीनामुत्क्रमणक्लेशक्षुभितहृदयेन जीवेन विवेक्तुमशक्यत्वात् । न च विद्यानुष्ठानकाले स्वयमीदृक्प्रदेशस्थितयैतादृश्या नाड्या निष्क्रम्य ब्रह्म प्राप्तवानीत्यनुसन्धानाभ्यासपाटवात् स्वनिष्क्रमनाडीपरिज्ञानं भवेत्, उत्क्रमणक्लेशस्य ब्रह्माणि विश्रमणेन शान्त्या विवेचनकौशलमपि भवेदिति वाच्यम् । तथाऽपि घनसन्तमसावृतहृदयापवरकगतस्य निरन्तरानेकसूक्ष्मतमनाडीसहस्रेषु स्वनिष्क्रमणनाड्या विवेक्तुमशक्यत्वात् । तस्मात् 'तयोर्ध्वमाय'न्निति श्रुतिः कदाचिद्यादृच्छिकं विदुषो मूर्धन्यनाड्या निष्क्रमणं तस्याः स्तुत्यर्थमनुवदतीति पूर्वः पक्षः ॥

सिद्धान्तस्तु– शताधिकया मूर्धन्यनाड्यैव विद्वानुत्क्रामति नान्यइति नियमस्सम्भवत्येव । 'तयोर्ध्वमायन्नि'ति श्रुतेः पाक्षिकानुवादत्वकल्पनाऽयोगात । न च नाडीनां दुर्दर्शत्वम् । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामती'ति निष्क्रमणकाले हृदयाग्रप्रकाशश्रवणाद्विदुषो विद्यासामर्थ्यस्य विद्यानुष्ठानकाले तच्छेषगतिचिन्तनाभ्यासस्य विद्याराधितपरमपुरुषप्रसादस्यचाधिकस्य सत्त्वाच्च ॥

संग्रहकारिके ॥
नाड्यो दुर्दर्शाइति विदुषो न ब्रह्मनाडिकानियमः ।
यादृच्छिकतद्गमनानुवादियत्तत्तयोर्ध्वमिति मैवम् ॥

विद्याराधितभगवदनुग्रहविभावितद्वारः ।
निष्क्रामति मूर्धगया नाड्येत्युपपद्यते नियमः ॥

इति तदोकोऽधिकरणम् ॥ ८ ॥

## रश्म्यनुसारी ॥ १७ ॥

विदुषो हृदयात् ब्रह्मनाड्या निर्गतस्यादित्यरश्मीननुसृत्य तन्मण्डलगतिः श्रूयते । 'यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमते' इति । अतो रश्मिभिरेवेत्यवधारणमुपपद्यते नवेति संशये नोपपद्यते । निशि मृतस्यादित्यरश्म्यनुसरणासम्भवात् निशास्वनुभूयमानस्योष्मण आग्नेयत्वेनाप्युपपत्तेः । ज्योतिषप्राक्रियया चन्द्रमण्डलप्रविष्टास्सूर्यरश्मय एव चन्द्रकिरणा इत्यङ्गीकारेऽपि दर्शादिरात्रिषु तेषामप्यभावात । न च निशि मृतस्य विदुषा मूर्धन्यनाड्या निष्क्रान्तस्य यावदुदयं सूर्यरश्मिप्रतीक्षणेन ऊर्ध्वगतिर्वाच्या । 'स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छेदि' ति शैघ्र्यवचनविरोधात् । तस्माद्रश्मिवाक्यं पाक्षिकानुवादकमित्येव वाच्यमिति ॥

सिद्धान्तस्तु– निश्यपि विद्वान्सूर्यरश्म्यनुसारी गच्छति । ग्रीष्मे दिवा सौरातपोष्मप्रकर्षे सत्येव निशि सिकतादिषूष्मदर्शनेन तस्य सूर्यरश्मिसम्बन्धित्वावगत्या रात्रावपि तत्सत्त्वावगमात् । एवं च रश्मिवाक्यमप्यर्थवद्भवतीति ॥ संग्रहकारिके ॥

रश्म्यनुसारि न गमनं नियतं रजनीषु तदभावात् ।
श्रुतिरेतैरेवेति तु पाक्षिकमनुवदति तल्लाभम् ॥
एवं सत्यवधारणमनर्थकत्वं प्रपद्येत ।
तस्मान्नियतं रजनिष्वपि ते सन्त्यूष्मदर्शनाल्लिंगात् ॥

इति रश्म्यनुसाराधिकरणम् ॥९॥

---

## निशिनेतिचेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयतिच ॥

विदुषो निशिमृतस्य ब्रह्मप्राप्तिरस्ति नवेति चिन्त्यते । नास्त्येव । 'दिवा च शुक्लपक्षश्च उत्तरायणमेव च । मुमूर्षतां प्रशस्तानि विपरीतं तु ग-

र्हित'मिति निशामरणस्य निन्दितत्वात् । निन्दितेन च परमपुरुषार्थप्राप्त्ययोगादिति प्राप्त उच्यते । विदुषो निशि मृतस्यापि ब्रह्मप्राप्तिर्भवत्येव । न तु निशामरणनिन्दया गर्हितगतिप्राप्तिः । कर्मसम्बन्धस्य विद्यादेहावसानत्वेन बन्धहेत्वभावात् । अनारब्धकार्याणां प्राचीनकर्मणां विद्यया विनाशादुत्तरकर्मणामश्लेषात् प्रारब्धकार्यस्य कर्मणश्चरमदेहावधित्वात् निशामरणनिन्दावचनमविद्वद्विषयम् । अविद्वत्स्वप्यतिशिष्टानां येषां निशामरणं दृश्यते, तेषां तदा प्रबलप्राचीनदुष्कृतकर्मणां फलोन्मुखता फलबलात्कल्पनीया।

संग्रहकारिका ॥

रात्रौ मृतिश्चेन्नास्त्येव ब्रह्माप्तिस्सा हि गर्हिता ।
नैवं कर्माभिसम्बन्धे कथं देहावधूतना ॥

इति निशाधिकरणम् ॥१०॥

---

## अतश्चायनेऽपि दक्षिणे ॥१९॥
## योगिनः प्रतिस्मर्यते स्मार्ते चैते ॥२०॥

निशि मृतस्य विदुषो ब्रह्मप्राप्तिहेतुनैव दक्षिणायनमृतस्यापि तस्य सा सिद्धा । अतिदेशाधिकरणस्यास्येयमधिका शङ्का 'य एवंविद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वाऽऽदित्यस्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसस्सायुज्यं सलोकतामाप्नोती'ति तैत्तिरीयाणामुपनिषदि श्रूयते । तेन विदुषोऽपि दक्षिणायनमृतस्य चन्द्रं प्राप्य पित्र्यभोगाननुभूय 'यावत्सम्पातमुषित्वे'ति शास्त्रानुसारेण पुनरावृत्तिर्विवक्षितेत्यवसीयते । तत्र पुरुषविद्यावसाने पूर्वानुवाकविहितब्रह्मविद्यावत एव हि उत्तरदक्षिणायनमरणयोः फलविशेष उक्तः । सत्यम् । तत्र ब्रह्मप्राप्तिरेव प्रतिपिपादयिषिता 'ब्रह्मणो महिमानमाप्नोती'ति वाक्यशेषात् । तस्मात् तत्रोत्तरायणमृतस्यादित्यलोके दिव्यभोगो दक्षिणायनमृतस्य पित्र्यभोगश्च मार्गे विश्रान्तिहेतुत्वेन विवक्षित इति योजनीयम् । अन्यथा विदुष उत्तरायणमृतस्यापि ब्रह्मप्राप्तिर्नास्तीति ततस्सिद्धिप्रसङ्गात् । ननु

विदुषो मुमूर्षून्प्रति पुनरावृत्त्यपुनरावृत्तिहेतुत्वेन कालविशेषविधिर्दृश्यते— 'यत्र कालेत्वनावृत्तिमावृत्तिश्चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जनाः ॥ धूमो रात्रिस्तथा कृष्णष्षण्मासा दक्षिणायनम् । तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ शुक्लकृष्णे गतीह्येते जगतश्शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ' इति । अतो दक्षिणायनमृतस्य न ब्रह्मप्राप्तिः । अत एव भीष्मस्योत्तरायणप्रतीक्षणमुक्तं भारत इति चेत् । उच्यते । नात्र मुमूर्षून्प्रति मरणकालविशेषः स्मर्यते । किं तु योगनिष्ठैः स्मर्तव्यदेवयानपितृयाणाख्ये गती स्मर्येते । तथाह्युपसंहारः 'नैते सृती पार्थजानन्योगी मुह्यति कश्चन । तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुने'ति । 'अग्निर्ज्योतिः, धूमो रात्रिरि'ति च श्लोकाभ्यां देवयानपितृयानगती प्रत्यभिज्ञायेते । भीष्मस्य तु योगप्रभावात् स्वपितृप्रसादप्रभावाच्च प्राप्तं स्वच्छन्दमरणं ख्यापयितुमुत्तरायणप्रतीक्षणम् । तस्माद्विदुषो दक्षिणायनमृतस्यापि ब्रह्मप्राप्तिरस्तीति सिद्धम् ॥

सङ्ग्रहकारिकाः ॥

न तथाऽपि दक्षिणायनं मृतस्य सा तस्य चन्द्रसायुज्योक्तेः ।
भीष्मस्य ब्रह्मविदोऽप्युदगयनागमनिरीक्षणस्याप्युक्तेः ॥
मैवं तस्यापि स्यात्पूर्वोक्ताद्बन्धहेत्वभावादेव ।
तस्यैन्दवसायुज्यं कालविशेषात्पथीन्दुतः पूजाप्तिः ॥
अत एव वाक्यशेषे ब्रह्मप्राप्तिस्तत्र वर्ण्यते तस्य ।
भीष्मस्य तत्प्रतीक्षा माहात्म्यख्यापनायैव ॥

इति दक्षिणायनाधिकरणम् ॥ ११ ॥

---

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य श्रीविश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे चतुर्थस्याध्यायस्य द्वितीयः पादः ॥

---

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

## ॥ चतुर्थाध्यायस्य तृतीयः पादः ॥

## अर्चिरादिना तत्प्रथितेः ॥ १ ॥

ब्रह्मप्राप्तिफलो विदुषो मार्ग इह पादे चिन्त्यते । छान्दोग्ये तावदुपकोसलविद्यायां– 'अर्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवस्स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्त' इति श्रूयते। बृहदारण्यके पञ्चाग्निविद्यायां– 'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं वैद्युतात्पुरुषोऽमानव स्स एत्य ब्रह्मलोकान्गमयती' ति । तत्रैव पुनरन्यथा मार्गः श्रूयते– 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुलोकमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथाळंबरस्य खं तेन स ऊर्ध्वमाक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुंदुभेः खंतेनसऊर्ध्वआक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीस्समा' इति श्रूयते । कौषीतकिनामुपनिषदि– 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोक' मिति मार्गः श्रूयते । छान्दोग्ये पुनर्दहरविद्यायां– 'अथैतैरेव रश्मिभिरूर्ध्व आक्रमत' इति श्रूयते । तत्र संशयः । किमर्चिरादिक एकएव मार्ग एताभिः श्रुतिभिः प्रतिपाद्यते उत तस्मादन्योऽपि मार्गः प्रतिपाद्यत इति मार्गानियम इति । अनियम इति तावत्प्राप्तम् । मार्गपर्वभेदेन तत्क्रमभेदेन च भेदप्रतीतेः । नचोपसंहारेणाभेदोपपादनं युक्तम् । 'यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वं

त्याक्रमत ' इत्यवधारणविरोधात् । ' स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छे '
दिति शैघ्र्यवचनविरोधात् । भिन्नभिन्नविद्याम्नातानां मार्गपर्वणां ब्रह्मगुणा-
नामिवोपसंहारानपेक्षणाच्चेति प्राप्ते उच्यते । अर्चिरादिनैकेनैव मार्गेण वि-
द्वान् गच्छति । तस्यैव सर्वत्र प्रत्यभिज्ञानात् । अवधारणस्यायोगव्यवच्छे-
दानुवादकत्वात् । एकस्य वाक्यस्य रश्मिप्रापणे तदितरव्यवच्छेदे च ता-
त्पर्यायोगात् । शैघ्र्यवचनस्य पितृयाणमार्गापेक्षयोपपत्तेः । ' स यावत्क्षिप्ये-
न्मन ' इत्यस्य केवलमतिशयोक्तिरूपत्वात् भिन्नभिन्नविद्याम्नातत्वेऽपि तथा-
भूतब्रह्मगुणानामनन्तानामिव अशक्योपसंहारत्वाभावेन परस्परोपसंहारक-
ल्प्यमार्गैक्यकल्पनालाघवत्यागायोगाच्च । छान्दोग्यबृहदारण्यकयोः पञ्चा-
ग्निविद्यायां ' तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासत ' इति ' तद्य-
इत्थंविदुर्येचामी अरण्ये श्रद्धां सत्यमुपासत ' इति च पञ्चाग्निविदामिव वि-
द्यान्तरनिष्ठानामप्यर्चिरादिकस्यैव मार्गस्योपदेशाच्च ॥

सङ्ग्रहकारिके ॥

भिन्ना मार्गा विदुषामाम्नातास्तत्र तत्र विद्यायाम् ।
विद्यारूपगुणभेदात्तत्तत्पर्वक्रमान्यत्वात् ॥
सर्वोऽर्चिरादिरेको मार्गोऽयं प्रत्यभिज्ञानात् ।
तत्सत्त्वेऽपि तु सर्वा विद्या नैका गुणानन्त्यात् ॥

इति अर्चिराद्यधिकरणम् ॥ ' ॥

---

## वायुमब्दादविशेषविशेषाभ्याम् ॥ २ ॥

अर्चिरादिनैकेनैव मार्गेण सर्वे विद्वांसो गच्छन्तीत्युक्तम् । तस्मि-
न्मार्गे छन्दोगा मासादित्ययोरन्तराळे संवत्सरमधीयते ' मासेभ्यस्संवत्सरं
संवत्सरादादित्य 'मिति । वाजसनेयिनस्तु तयोरन्तराळे देवलोकमधीयते ।
' मासेभ्यो देवलोकं देवलोकादादित्य ' मिति । मार्गैक्यात्तावुभावपि उभ-
यत्रोपसंहार्यौ । तयोः पञ्चम्यभिहितस्य श्रौतक्रमस्य तुल्यत्वेऽपि मासान-
न्तरं संवत्सरो निवेशनीयः । अहरापूर्यमाणपक्षमासानामुत्तरोत्तरमाधिक्का-

लानामुत्तरोत्तरपर्वभावदर्शनेमोदगयनरूपषण्मासानन्तरं निवेशनौचित्यात्। अतस्संवत्सरादूर्ध्वं देवलोक इति निश्चीयते। अत्र च वाजसनेयिनो 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छती'त्यादित्यात्पूर्वं वायुमधीयते। कौषीतकिनस्तु 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोक'मित्यग्निलोकशब्दनिर्दिष्टादर्चिषः परं वायुमधीयते। तत्र कौषीतकिनां पाठक्रमेणार्चिषः परत्वेन प्राप्तस्य वायोर्वाजसनेयिनां 'तेनोर्ध्व आक्रमते स आदित्यमागच्छती'त्यूर्ध्वशब्दनिर्दिष्टश्रौतक्रमेण पाठक्रमाद्बलीयसाऽऽदित्यात्पूर्वं निवेशः। एवं संवत्सरादूर्ध्वमादित्यात्पूर्वं वायुदेवलोकयोः प्राप्ताविदं चिन्त्यते। किं वायुदेवलोकौ भिन्नाविति तौ यथेष्टक्रमेण विद्वान् गच्छति। उताभिन्नाविति संवत्सरादूर्ध्वं वायुं सन्तं देवलोकं गच्छतीति। किं युक्तम्। भिन्नार्थत्वप्रसिद्धेरूर्ध्वशब्देन पञ्चम्या चोभयोरपि संवत्सरादित्यान्तराळे श्रुतिक्रमेण प्राप्तत्वे विशेषाभावाच्च यथेष्टं गच्छति। न च 'योऽयं पवते एष देवानां ग्रह' इति श्रवणान्न वायुदेवलोकौ भिन्नाविति वाच्यम्। 'संवत्सरः स्वर्गो लोक' इत्यर्थवादान्तरश्रवणात् संवत्सर एव देवलोक इत्यपि कल्पनासम्भवेन मासादित्ययोर्मध्ये संवत्सरदेवलोकौ निवेशनीयौ उत देवलोकवायू इत्यत्र विनिगमकाभावप्रसङ्गादिति। एवंप्राप्ते उच्यते। संवत्सरादूर्ध्वं विद्वान्वायुं गच्छति। देवलोकशब्देन देवानां लोक इत्यविशेषेणोक्तस्य 'स वायुमागच्छती'ति विशिष्य वायुरूपेण विधानात् 'वायुरेव हि देवानां लोकः योऽयं पवत' इति श्रवणात्। न च 'संवत्सरः स्वर्गो लोक' इतिवत्तदर्थवादमात्रं दिव्यानां विमानानां वायुपाशधृतत्वेन वायोः स्तम्भादिवत् देवगृहान्तर्भावोपपत्त्या स्वार्थपरत्वसम्भवात्॥

संग्रहकारिकाः॥

श्रुत्यैव संवत्सरदेवलोकयोर्मासेभ्य ऊर्ध्वं झटिति प्रसक्तयोः।
संवत्सरो माससमन्वयाद्भवेदादौ तदूर्ध्वं निविशेतचेतरः॥
तत्रैव मारुतोऽपि प्राप्नोत्यूर्ध्वपदरूपया श्रुत्या।

कौषीतकिनामर्चिस्समनन्तरपाठतो बलीयस्या ॥
तयोर्न पूर्वोत्तरतानियामकं ततो यथेष्टं विनिवेशनं भवेत् ।
तदेव लोकाह्वविशेषमीरितस्सवायुरेवात्र मितस्तथा श्रुतेः ॥
श्रुतमपि देवगृहत्वं वायोरिव तत्पुरत्वमब्दस्यापि ।
स्तुतिरेव तद्यथार्थं विमाननिवहस्य वायुपाशधृतत्वात् ॥

इति वाय्वधिकरणम् ॥ २ ॥

---

## तडितोऽधिवरुणस्सम्बन्धात् ॥ ३ ॥

कौषीतकिनां 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छती' त्यादिश्रवणे अग्निलोकशब्दस्यार्चिःपर्यायत्वेन प्राथम्यमविगीतम् । तत्र तदनन्तरपठितस्य वायोस्संवत्सरादूर्ध्वं निवेश उक्तः । आदित्यस्यापि तत्र वरुणानन्तरपठितस्य पाठक्रमबाधेन देवलोकादादित्यमिति वाजसनेयकोक्त-श्रुतिक्रमाद्देवलोकशब्दाभिहितात् वायोरुपरि निवेशस्सिद्धः । वरुणेन्द्रप्रजा-पतिषु चिन्ता—किं तेषां वायोरूर्ध्वं निवेशः उत विद्युत ऊर्ध्वमिति । वायोरू-र्ध्वमिति तावत्प्राप्तम् । अन्यत्र क्वाप्यवकाशाभावात् । अर्चिरादिविद्युत्पर्य-न्तानां सर्वेषामपि श्रौतक्रमवत्त्वात्तदनन्तरममानवपुरुषस्यैव ब्रह्मप्रापयितृत्व-श्रवणाच्च । ततश्च सर्वत्रावकाशाभावेन तेषां निवेशाप्राप्तौ तदुपदेशावैय-र्थ्यायावश्यं क्वच न श्रौतक्रमे बाधनीये 'स वायुलोकं स वरुणलोक' मिति पाठक्रमेण वायोरनन्तरं वरुणो निवेशनीयः । क्रमिबाधात् क्रमबाधस्य न्याय्यत्वात् । एवं वाय्वादित्ययोश्श्रौतक्रमबाधे सति इन्द्रप्रजापती अपि वरुणानन्तरं निवेशनीयाविति । एवं प्राप्त उच्यते— वरुणस्तावद्विद्युत ऊर्ध्वं निवेशनीयः । सम्बन्धात् विद्युत उपरि सनीरनीरददर्शनेन नीराधिपतेर्वरु-णस्य तत उपरिभावौचित्यात् तदनन्तरमिन्द्रप्रजापत्योर्निवेशः परिशेषात्; 'आगन्तुकानामन्ते निवेश' इति न्यायाच्च । अमानवपुरुषस्य ब्रह्मप्रापकत्वं वरुणादिव्यवधानेन तत्साहित्येनवोपपद्यत इति न विरोधः ॥

संग्रहकारिकाः ॥

वरुणाद्या निविशेरन्मध्ये वायोश्च भानोश्च ।
अन्यत्रापि निवेशे श्रौतः कश्चित्क्रमो बाध्यः ॥
इत्युपरि निवेशे भवति स एनानिति श्रुतेर्बाधः ।
उपदिष्टानां तेषां कचिन्निवेशश्च वक्तव्यः ॥
तस्माद्वायोरूर्ध्वं वरुणस्स्यात्तत्र पठितत्वात् ।
तदनन्तरमितरावपि वाय्वादित्यक्रमस्य भग्नत्वात् ॥
मैवं विद्युत उपरि श्रौतक्रमबाधितस्य वरुणस्य ।
सम्बन्धाद्धिनिवेशस्तदुपर्यवशिष्टयोर्यथापाठम् ॥
वैद्युतपुरुषस्य न हि व्यवधिविहीनमश्रुतं गमयितृत्वम् ।
तेन स एनानिति श्रुतेर्विबाधस्य शङ्काऽस्ति ॥

इति वरुणाधिकरणम् ॥ ३ ॥

---

## आतिवाहिकास्तल्लिङ्गात् ॥ ४ ॥
## वैद्युतेनैव ततस्तच्छ्रुतेः ॥५॥

अर्चिरादीनां क्रमो निरूपितः। तेषां स्वरूपं चिन्त्यते। किमर्चिरादयो मार्गचिह्नभूताः, उत भोगभूमयः, अथवा विदुषामतिवोढार इति तत्र वननदीपर्वतादिमार्गचिह्नोपदेशकलौकिकवाक्यच्छायापन्नवाक्यबोध्यत्वात्। अथवा भोगभूमयः एत एव लोकाः। 'यदहोरात्राण्यर्धमासा ऋतवस्संवत्सरा' इत्यहरादीनां लोकत्ववचनात्, कौषीतकिशाखायामग्निलोकमागच्छतीति लोकशब्दश्रवणाच्च। नत्वतिवोढारः। अमानवपुरुषस्यैव विशिष्यातिवोढृत्वश्रवणात्। विद्युदनन्तरममानवपुरुषस्यातिवोढृत्वेन वरुणादीनामतिवोढृत्वासम्भवाच्चेति। एवं प्राप्ते उच्यते— विदुषामतिवाहे परमपुरुषेण नियुक्ताः देवताविशेषाः एतेऽर्चिरादयः। 'स एनान्ब्रह्म गमयती' त्यमानवपुरुषस्य श्रूयमाणो यः प्राप्यप्रापकभावसम्बन्धः स एव पूर्वे-

ष्वर्चिरादिष्वपि सम्बन्धइत्यवगमात् सामान्यतो निर्दिष्टस्य सम्बन्धस्य विशेषपर्यवसानापेक्षत्वात् । नचाचेतनानामातिवाहिकत्वानुपपत्तिः, अर्चिरादीनां तदभिमानिदेवतापरत्वात् । यद्येते सर्वेऽप्यातिवाहिकाः तदा कथं विद्युदनन्तरं श्रुतानामिन्द्रादीनामातिवाहिकत्वोपपत्तिः । तत्रामानवपुरुषस्यैवातिवाहिकत्वश्रवणादितिचेन्नैवम् । तत्र वरुणादीनामपि तदनुग्राहकत्वेनातिवाहिककोट्यन्तर्भावोपपत्तेः ॥

संग्रहकारिके ॥

मार्गचिह्नानि विदुषां पठिता येऽर्चिरादयः ।
सर्वत्र लोकशब्दाद्वा भवेयुर्भोगभूमयः ॥
वर्ण्यते ह्यातिवोढृत्वं वैद्युतस्योपसंहृतौ ।
ततस्सएव सम्बन्धः पूर्वेषामपि सिध्यति ॥

इति आतिवाहिकाधिकरणम् ॥४॥

---

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ६ ॥

विशेषितत्वाच्च ॥७॥

सामीप्यात्तु तद्व्यपदेशः ॥ ८ ॥

कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ९ ॥

स्मृतेश्च ॥ १० ॥

परं जैमिनिर्मुख्यत्वात् ॥११॥

दर्शनाच्च ॥ १२ ॥

न च कार्ये प्रत्यभिसन्धिः ॥ १३ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॥ १४ ॥

## विशेषञ्च दर्शयति ॥ १५ ॥

गमयितृनिरूपणानन्तरं गन्तृनिरूपणमिति सङ्गतिः । किमयमर्चिरादिको गणः कार्यं हिरण्यगर्भमुपासीनान्नयति उत परंब्रह्मोपासीनानथ परंब्रह्मोपासीनान् प्रत्यगात्मानं ब्रह्मात्मतयोपासीनांश्चेति संशये कार्यमुपासीनान्नयति । कार्यं हिरण्यगर्भमुपासीनस्यैव गत्युपपत्तेः । न हि परिपूर्णं परंब्रह्मोपासीनस्य तत्प्राप्तये देशान्तरगतिरुपपद्यते । नित्यप्राप्तत्वात् । परब्रह्मविषयाविद्यानिवृत्तिमात्रस्य परविद्याकार्यत्वात् । 'पुरुषो मानव एत्य ब्रह्मलोकान्गमयती' ति, 'प्रजापतेस्सभां वेश्म प्रपद्य' इति च बहुवचनान्तेन लोकशब्देन लोकविशेषु तत्रापि प्रजापतिशब्दवाच्यहिरण्यगर्भसभायां वर्तमानं हिरण्यगर्भमुपासीनानेव नयतीति विशेषितत्वाच्च । 'स एनान्ब्रह्म गमयती' ति तस्मिन्नपुंसकलिंगब्रह्मशब्दस्तु तस्य परब्रह्मप्रथमापत्यत्वेन तत्सन्निकृष्टत्वादुपपद्यते । अर्चिरादिना हिरण्यगर्भं प्राप्तस्य 'तयोर्ध्वमायन्नमृतत्वमेती' ति 'इमं मानवमावर्तं नावर्तन्त' इतिचामृतत्वापुनरावृत्त्युक्तिः कार्यब्रह्मलोकात्यये तदध्यक्षेण हिरण्यगर्भेणावसिताधिकारेण सह कार्यब्रह्मलोकात्परस्य परब्रह्मलोकस्य प्राप्तिविषयत्वेनोपपद्यते । 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयश्शुद्धसत्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति श्रुत्या 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परंपद' मिति स्मृत्या च तथैव प्रतिपादनात् । अथवा परंब्रह्मोपासीनानेव नयति । 'स एनान्ब्रह्म गमयती' ति ब्रह्मशब्दस्य तत्र मुख्यत्वात्, परब्रह्मणस्सर्वगतत्वेऽपि विदुषस्तल्लोकविशेषंप्राप्तस्यैव कर्मतद्वासनादिबन्धनिवृत्तिरिति पर्यङ्कविद्यादिशास्त्रैरवगमात्, 'अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इत्यर्चिरादिना गतस्य परब्रह्मप्राप्तिश्रवणाच्च । न च 'प्रजापतेस्सभां वेश्म प्रपद्य' इति विद्वदभिसन्धिप्रतिपादनात् कार्यब्रह्मप्राप्तिश्शङ्कनीया । तत्रैव 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानी' ति

मन्त्रे 'अकृतं ब्रह्मलोक' मिति विशेषितत्वेन तदनुरोधात् प्रजापतिशब्दस्य योगेन परमपुरुषपरत्वोपपत्तेः । एवं प्राप्ते उच्यते— कार्यमुपासीनानेव नयतीतिवा परमुपासीनानेव नयतीति वा न नियमः । उभयथापि दोषात् । कार्यमुपासीनान्नयतीति पक्षे "परं ज्योतिरुपसंपद्य" त्यादिकाः श्रुतयः प्रकुप्येयुः । परमेवोपासीनान्नयतीति पक्षे "तद्य इत्थं विदु" रिति श्रुतिः प्रकुप्येत् । सा हि श्रुतिः ब्रह्मात्मकत्वेन जीवमुपासीनानामप्यर्चिरादिगतिं प्रतिपादयति । कुत एतत्– तत्क्रतुन्यायेन 'तत्रापः पुरुषवचसो भवन्ती' त्याद्युक्तिभंग्या शरीररूपाचिद्वियुक्तजीवस्वरूपोपासनाविधानस्य ब्रह्मात्मकत्वेन तदुपासने तात्पर्यावगमात् । अन्यथा तत्क्रतुन्यायविरोधेन पञ्चाग्निविदां ब्रह्मप्राप्त्ययोगात् । नचैवमपि तदयोगस्तुल्यः, "आत्मेतितूपगच्छन्ती" त्यधिकरणे ब्रह्मणो जीवं प्रत्यात्मत्वेनानुसन्दधानस्यैव ब्रह्मप्राप्तिसाधनत्वोक्तेरिति वाच्यम् । ब्रह्मात्मकत्वेन जीवानुसन्धानेऽपि ब्रह्मणो जीवं प्रत्यात्मत्वानुसन्धानाक्षतेः लक्ष्मणपूर्वज इत्यतो रामानुज इत्यस्येव विशेषणविशेष्यभावमात्रं हि तत्र भिद्यते । तस्मात् हिरण्यगर्भादिजीवमेव य उपासते केवलमचिद्वस्तु चिद्वस्तु ये वा ब्रह्मदृष्ट्योपासते न तान्प्रतीकालंबनान्नयति अर्चिरादिको गणः । अपि तु परंब्रह्म जीवविशेष्यत्वेन तद्विशेषणत्वेन वा य उपासते तानेव नयति । अत एव 'यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवती' त्यादिका श्रुतिर्नामादिप्रतीकमुपासीनानां ब्रह्मप्राप्त्यर्थार्चिरादिगत्यनपेक्षं परिमितफलविशेषं दर्शयतीति । अनया हि श्रुत्या देवमनुष्यादि नाम यावत्सञ्चरति तावत्पर्यन्तमेव नाम ब्रह्मेति प्रतीकालम्बनानां यथाकामं सञ्चार उच्यते । तेन यत्र 'तथा विद्वान्नामरूपाद्विमुक्त' इति श्रुतिसिद्धो देवादिनामरूपविमोक्षः तत्र संञ्चारो नास्तीति ज्ञाप्यते । 'वेदान्तविज्ञानसुनिश्चितार्था' इति मन्त्रस्तु हिरण्यगर्भोपासनयाऽर्चिरादिना हिरण्यगर्भं प्राप्तस्य तेन सह ब्रह्मप्राप्तिं न प्रतिपादयति । किं तु हिरण्यगर्भोपासनया तल्लोकं प्राप्तस्य तत्रैव कृतब्रह्मोपासनस्य स्वदेहावसाने ब्रह्मप्राप्तिम् । तस्यह्ययमर्थः– श्रवणमननादिभिर्निश्चितवेदान्तार्थतत्वा जितेन्द्रियाः पुरुष-

धौरेयाः परब्रह्मण्येव लोके वर्तमानास्तन्निष्ठास्सन्तः परस्य चरमदेहस्यान्तकाले अवसाने परामृतात् परब्रह्मणस्सकाशात् तस्यैव प्रसादात् मुच्यन्त इति । तस्मादप्रतीकालम्बनानेव नयतीति सिद्धम् ॥

संग्रहकारिकाः ॥

ब्रह्माणमुपासीनान्गमयत्येषोऽर्चिरादिगणः ।
तस्य परिच्छिन्नत्वाद्गत्वा प्राप्यत्वमुपपन्नम् ॥
न ब्रह्मोपासीनान्व्यापित्वेनेह तत्प्राप्तेः ।
गमनस्य व्यर्थत्वादित्येवं बादरिर्मेने ॥
ब्रह्मैवोपासीनान्गमयति तत्र खलु तत्पदं मुख्यम् ।
तल्लोकविशेषस्थं गत्वा प्राप्यमिति जैमिनिर्मेने ॥
ब्रह्मतदुपासते ये ये च ब्रह्मात्मकं जीवम् ।
तानुभयानपि गमयति दोषात्पक्षद्वयेऽपि पूर्वोक्ते ॥
बादरिमतेऽर्चिरादिप्राप्यं ब्रह्म श्रुतं विरुध्येत ।
जैमिनिमतेर्चिरादिः पञ्चाग्निविदां श्रुतो न लभ्येत ॥
ये वा हिरण्यगर्भं येवा मनआद्युपासते ब्रह्म धिया ।
केवलमथवाविधितस्तस्मात्सर्वान्नयतिप्रतीकदृशस्ते ॥
विशेषणं विशेष्यंवा कृत्वा ब्रह्मनिजात्मनः ।
उपासीनान्गमयतीत्येवं सिद्धान्तपद्धतिः ॥

इति कार्याधिकरणम् ॥ ५ ॥

---

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य श्रीविश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूखमालिकाख्ये द्वितीयपरिच्छेदे चतुर्थस्याध्यायस्य तृतीयः पादः ॥

---

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

---

॥ श्रीः ॥

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

## ॥ चतुर्थाध्यायस्य चतुर्थः पादः ॥



विदुषां ब्रह्मप्राप्तिफला गतिरुक्ता । ब्रह्मप्राप्तानां तेषामैश्वर्यप्रकारः चिन्त्यते—

## संपद्याविर्भावः स्वेन शब्दात् ॥ १ ॥

## मुक्तः प्रतिज्ञानात् ॥ २ ॥

## आत्मा प्रकरणात् ॥ ३ ॥

'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत' इत्यत्र देवादिरूपवत्साध्यरूपेणाभिनिष्पत्तिर्विवक्षिता उत स्वाभाविकरूपेणाविर्भाव इति अभिनिष्पत्तिस्वेनशब्दाभ्यां संशये साध्यरूपेणाभिनिष्पत्तिरिति युक्तम् । स्वतस्सिद्धस्य रूपस्याभिनिष्पद्यत्वायोगात् । तस्य सुषुप्त्यादिषु पुरुषार्थत्वादर्शनात् स्वेनशब्दस्यार्थसिद्धस्वीयत्वानुवादकतोपपत्तेरिति पूर्वपक्षः । स्वतस्सिद्धस्याप्यनादिकर्मबन्धरूपाविद्यातिरोहितस्य तन्निवृत्त्याभिव्यक्तिरूपेण साध्यत्वसम्भवात् अपहतपाप्मत्वादिरूपेणाभिव्यक्तस्य तस्य पुरुषार्थतायाः प्रजापतिविद्यायामुपपादितत्वात् । 'यथा न क्रियते ज्योत्स्ना मलप्रक्षाळनान्मणेः । दोषप्रहाणान्नज्ञानमात्मनः क्रियते तथा ॥ यथोदपानखननात्क्रियते न जलाम्बरम् । सदेव नीयते व्यक्तिमसतस्सम्भवः कुतः ॥ तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते' इति शौनकस्मरणाच्च । ज्ञानानन्दादिरूपस्य स्वाभाविकजीवस्वरूपस्य कर्मबन्धेन संकुचितरूपस्य कर्मबन्धक्षयेसति विकासरूपाविर्भावो न स्वरूपत उत्पत्तिः । तथासति स्वेनविशेषणानर्थक्यापत्त्या येन रूपेणाभिनिष्पद्यते तस्य स्वीयताया अर्थसिद्धत्वेन स्वेन शब्दस्यासाध्यत्वपरताया वक्तव्यत्वाच्चेति सिद्धान्तः ॥

संग्रहकारिके ॥

आगन्तुकं किञ्चिदुपैति रूपं मुक्तोऽभिनिष्पत्तिवचोऽनुरोधात् ।
स्वरूपमात्रे पुरुषार्थतायास्सुषुप्तिदृष्टेऽनुपलम्भनाच्च ॥

त्रिदिवगतवन्मुक्तस्यागन्तुकत्ववितर्कणां
न हि विषहते रूपेस्वेनेति तस्य विशेषणम् ।
अपि तदभिनिष्पत्तिर्युक्तैव बन्धविधूनना-
द्विकसति हि तज्ज्ञानानन्दादि संकुचितं तदा ॥

इति सम्पद्याविर्भावाधिकरणम् ॥१॥

## अविभागेन दृष्टत्वात् ॥ ४ ॥

किमयं ब्रह्मप्राप्तो विद्वान् स्वात्मानं ब्रह्मणः पृथग्भूतमनुभवति, उत तदविभक्तमिति साम्यसाहित्यपरमसाम्यश्रुतिभ्यां तत्त्वमस्यादिश्रुतिभिश्च संशये 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते' ति, 'निरञ्जनः परमं साम्यमुपैती' ति च मुक्तस्य ब्रह्मणा सह साहित्यपरमसाम्यश्रवणात् पृथग्भूतमेवानुभवति । नत्वविभक्तम् । अविभागस्याभेदरूपत्वे साहित्यश्रुतिविरोधात् प्रकारप्रकारिभावरूपत्वे परमसाम्यश्रुतिविरोधादिति पूर्वपक्षः ॥

सिद्धान्तस्तु– अविभक्तमनुभवति । परब्रह्मप्राप्त्या निवृत्ताविद्यस्य स्वात्मनो यथावस्थितस्य स्वेन दृष्टत्वात् । स्वात्मस्वरूपं हि तत्त्वमस्यादिश्रुतिभिः परमात्मनः तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितम् । तस्मादविभागेन तत्प्रकारतयैवानुभवति । साहित्यश्रुतिस्तु कर्तृसाम्यं कर्मसाम्यं वा प्रतिपादयन्ती न प्रकारप्रकारिभावेन विरुध्यते । प्रकारप्रकारिभावोऽपि न परमसाम्येन विरुध्यते । ब्रह्मानन्दानुभवादिगुणैः परमसाम्यस्य प्रकारप्रकारिभावेऽपि सत्त्वात् । न च सर्वैरपि गुणैस्सर्वात्मना साम्यं विवक्षितम् । तथा सति व्यावर्तकधर्माभावेनाभेदापत्तेः । एतेन मुक्तौ परमसाम्यश्रवणात् प्रकारप्रकारिभावश्रुतिर्बद्धावस्थाविषयेत्यपीतिपूर्वपक्ष्याशयो निरस्तः । सर्वात्मना साम्यासम्भवात् । तुलाधृतयोः स्वर्णशिलाशकलयोः परमसाम्योक्ताविव विवक्षितांशे अत्यन्तसाम्यसत्त्वात् ॥

सङ्ग्रहकारिकाः ॥

अनुभवति स्वात्मानं मुक्तः परमात्मनः पृथग्भूतम् ।
साहित्यसाम्यविषयश्रुत्यनुसारेण तत्क्रतुन्यायात् ॥
एवं संति प्रकारप्रकारिभावादिवैधर्म्यम् ।
बद्धावस्थामात्रेण तु मुक्तौ परमसाम्यसम्पत्तेः ॥
मैवं तत्त्वमसीत्याद्यपरिमितश्रुतिमितार्थतत्वस्य ।
दृष्टत्वात्स्वं ब्रह्माविभक्तमनुभवति तत्प्रकारतया ॥
प्रकारभूतस्यापि स्यात्साहित्यं भोगकर्मणि ।
अन्यथैव भवेत्साम्यं तेन तस्य विवक्षितम् ॥

इति अविभागाधिकरणम् ॥२॥

---

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥५॥**

**चितितन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥६॥**

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥७॥**

ब्रह्मप्राप्तस्य स्वरूपाविर्भाव उक्तः । सकेनस्वरूपेणाविर्भाव इति श्रुतिद्वैविध्याद्विचार्यते । तत्र विज्ञानमात्ररूपेणेति तावत्प्राप्तम् । ' स यथा सैन्धवखिल्योनन्तरोबाह्यः कृत्स्नो रसघनएव एवं वा अरेऽयमात्मानन्तरोबाह्यः कृत्स्नः प्रज्ञानघन एवे ' ति तस्य विज्ञानमात्रत्वश्रवणादपहतपाप्मत्वादिश्रवणं मनश्शरीरधर्मपाप्मत्वाद्यनाश्रयत्वपरम् । सत्यकामत्वसत्यसङ्कल्पत्वश्रवणं संसारदशायां कादाचित्कस्य सत्यकामत्वादिपरमिति । एवं प्राप्तउच्यते– ब्राह्मेण दहरविद्यायां ब्रह्मणि श्रुतेनापहतपाप्मत्वादिगुणजातेनायमाविर्भावः प्रजापतिविद्यायां जीवेऽपि तदुपन्यासान्मुक्तावेव जक्षणादिश्रुतेश्च । न प्रज्ञानघनएवेत्यवधारणविरोधः । न हि तेन विज्ञानातिरिक्तरूपनिषेधः क्रियते । किं तु बाह्याभ्यन्तरभेदं विना सर्वत्र स्वप्रकाशबोधरूपत्वमुच्यते । तत्र दृष्टान्तानुगुण्यात । न हि दृष्टान्ते सैन्धवशकले सर्वत्र प्रदेशे लवणरस-

व्याप्तिं विना रूपस्पर्शादिव्यावर्तनेऽपि तात्पर्यमस्ति । त्वगादिप्रदेशभेदेन चूतफलादेरिव प्रदेशभेदेन नानारसत्वं नास्तीत्येतावदेव हि तत्र विवक्षितम्। अत्र श्रुतिद्वयानुरोधात् कर्मबन्धरूपाविद्याक्षये सत्यपहतपाप्मत्वादिगुणजातेन विकसितज्ञानस्वरूपेणचायमाविर्भावइति युक्तम् ॥

सङ्ग्रहकारिकाः ॥

ब्राह्मेणाविर्भावं गुणाष्टकेनाह मुक्तस्य ।<br>
जैमिनिरथौडुलोमिस्तमाह विज्ञानमात्रतया ॥<br>
उभयविधश्रुतिदृष्टेरुभयात्मतयेति सिद्धान्तः ।<br>
विज्ञानमात्रतात्विह कात्स्न्यैन स्वप्रकाशत्वम् ॥<br>
सा मुक्तस्याम्नाता निवर्तिका नेतरगुणानाम् ।<br>
सैन्धवखिल्यस्य यथा रसघनताधवलतादीनाम् ॥

इति ब्राह्माधिकरणम् ॥ ३ ॥

---

## संकल्पादेव तच्छ्रुतेः ॥८॥

## अतएवचानन्याधिपतिः ॥९॥

रसघन एवेत्यवधारणं न प्रमाणान्तरसिद्धस्य रूपादेरिव संङ्कल्पादेवेत्यवधारणं न लोकसिद्धस्य व्यापारान्तरस्य निवर्तकमिति शङ्कया सङ्गतिः। प्रजापतिविद्यायां 'जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वे' त्यादिना प्रतिपादिता ब्रह्मसम्पन्नस्य स्त्र्यादिप्राप्तिः किं सङ्कल्पमात्रसाध्या उत व्यापारान्तर सापेक्षेति संशये जीवसङ्कल्पानां सिद्धसङ्कल्पतया प्रसिद्धेषु सार्वभौमादिष्वभिमतार्थनिष्पादने व्यापारान्तरापेक्षैव तस्य स्त्र्यादिप्राप्तिरिति। एवंप्राप्त उच्यते– सङ्कल्पमात्रसाध्या मुक्तस्य स्त्र्यादिप्राप्तिः । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति स यदि स्त्रीलोककामो भवति सङ्कल्पादेव स्त्रियस्समुत्तिष्ठन्ती' त्यादिसावधारणश्रुतेः, 'प्रज्ञानघनएवे' तिवदिहावधारणविरोधिश्रुत्यन्तराभावाच्च । न च मुक्तस्यापि जीवत्वाविशेषा-

द्राजादिवत् कदाचिन्मोघसङ्कल्पताप्रसङ्गः स्वरसाद्भवतीति । तस्याकर्म-वश्यत्वरूपानन्याधिपतित्वश्रवणात् ॥

सङ्ग्रहकारिकाः ॥

कर्माधीनत्वाच्च कदाचित्सङ्कल्पमोघतायाः ।
मुक्तानां ज्ञात्यादिप्राप्तिर्यत्नान्तरापेक्षा ॥
सङ्कल्पमात्रसाध्यं राज्ञामपि न क्वचिद्दृष्टम् ।
सङ्कल्पादेवेति ह्यवधारणबाधिकाश्रुतिर्नास्ति ॥
तस्मात्सर्वेश्वरवत्तेषां सङ्कल्पमात्रजा सृष्टिः ॥

इति सङ्कल्पाधिकरणम् ॥ ४ ॥

---

**अभावं बादरिराह ह्येवम् ॥१०॥**

**भावं जैमिनिर्विकल्पामननात् ॥११॥**

**द्वादशाहवदुभयविधं बादरायणोऽतः ॥१२॥**

**तन्वभावे सन्ध्यवदुपपत्तेः ॥१३॥**

**भावे जाग्रद्वत् ॥ १४ ॥**

**प्रदीपवदावेशस्तथा हि दर्शयति ॥१५॥**

**स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥१६॥**

किं मुक्तस्य देहेन्द्रियाणि सन्ति उत न सन्ति । अथवा यथासङ्कल्पं सन्ति न सन्ति चेति विशये सति न सन्त्येव । "न हवै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः" इति ह्याह श्रुतिः । अत एव तस्य शरीरात्समुत्थानमनन्तरमेव वदति "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाये'त्यादिना । न च मुक्तस्य स्वशरीरसृष्टौ तदर्थपित्रादिसृष्टौवाऽपेक्षा स्यात् । तदा तस्य ब्रह्मानुभवादन्यपरत्वं ब्रह्मणो निरतिशयभोग्यत्वहानिश्च प्रसज्येत । 'स एकधा भवति त्रिधा भवती'

द्याद्याम्नानंत्वर्थवादमात्रम्। अणोर्जीवस्य युगपदनेकदेहव्याप्त्ययोगादिति पूर्वपक्षः। सिद्धान्तस्तु—

मुक्तस्येच्छया शरीराणि सन्ति न सन्ति च श्रुतिद्वयानुरोधात्। यथा 'द्वादशाहमृद्धिकामा उपेयुः, द्वादशाहेन प्रजाकामं याजये' दिति श्रुतिद्वयदर्शनात् द्वादशाहश्चसत्राहीनोभयात्मकः। ननु विदेहावस्थायां कथं कामभोगः तदभावे कथं विदेहावस्थेच्छा। यदि मनोमात्रेण तदा भोगः तदा कदाऽपि देहापेक्षा न स्यादिति चेत् उच्यते। देहाभावे स्वप्नइव सूक्ष्मभोगः। तद्भावे जागररूपस्पष्टस्थूलभोगः। यदा मुक्तस्य शरीराद्युपकरणानि सन्ति तदा तानि तस्य सत्यसंकल्पत्वेऽपि तेनैव सृष्टानीति नास्ति नियमः। कदाचित् स्वप्न इव सर्वेश्वरसृष्टैः पितृलोकादिभिर्लीलारसं भुङ्क्ते कदाचिज्जागरइव स्वसृष्टैस्सर्वेश्वरसृष्टैश्च पित्राद्युपकरणैर्लीलारसं भुङ्क्ते। सर्वेश्वरो लीलार्थं दशरथवसुदेवादिपितृलोकादिकमात्मनस्सृष्ट्वा तैर्मनुष्यधर्मलीलादिकं यथा भुङ्क्ते, तथा मुक्तानामपि स्वलीलायै स्वपितृलोकादिकं स्वयमेव सृजति। कदाचित्तुमुक्तास्सत्यसंकल्पत्वात स्वपितृलोकादिकं स्वयमेव सृजन्तीति विशेषः। न चैतावता मुक्तस्य ब्रह्मानुभवादन्यपरत्वप्रसंङ्गः। न हि ते स्वभोगलांपट्येन पित्राद्युपकरणादि सृजन्ति। किन्तु सविभूतिकब्रह्मानुभवार्थं ब्रह्मविभूतिविशेषतयैव सृजन्ति। नन्वेवं सतियदाकश्चिन्मुक्तः स्वल्प पित्राद्युपकरणं सृजति अन्यस्त्वधिकं तदा तयोस्सविभूतिकब्रह्मानुभूतावुत्कर्षापकर्षौ स्यातामितिचेत्। नैषदोषः। सर्वस्यापि मुक्तस्य स्वसृष्टपरसृष्टातीतानागतसकल विभूतिविशिष्टब्रह्मानुभूत्यङ्गीकारात्। नचाणोर्जीवस्य युगपदनेकदेहाधिष्ठानासंभवः। संसारदशायां सर्वाङ्गीणसुखानुभवोपपादकैकैकदेहव्याप्तियोग्यस्यैव मुक्तिदशायामनेकदेहव्याप्तियोग्यस्य धर्मज्ञानविकासस्य सद्भावात्। 'बालाग्रशतभागस्य शतधाकल्पितस्य च। भागो जीवस्सविज्ञेयस्सचानन्त्याय कल्पत' इति मुक्तौ धर्मज्ञानविकासेनापरिच्छेदरूपानन्त्यश्रवणात्। ननु 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेदनान्तर'मितिश्रुत्या मुक्तस्य ज्ञानाभावउच्यते। कथं तस्य ज्ञानविकास-

स्सार्वज्ञ्यञ्चोपेयते । नैषदोषः । तस्याःश्रुतेस्सुषुप्तिमरणान्यतरावस्थाविषय-त्वात । तयोरेवहि ज्ञानाभावः प्रसिद्धः । 'नाहखल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवती' ति सुषुप्तौ 'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्यसंज्ञास्ती'ति मरणे । मुक्तौतु सार्वज्ञ्यं स्पष्टमेवोच्यते– 'सर्वं हपश्यः पश्यति सर्वमाप्नोति सर्वश' इति । तस्मान्मुक्ताः स्वेच्छया सदेहा विदेहाश्च भवन्तीति सिद्धम् ॥

संग्रहकारिकाः ॥

अपवर्गं प्राप्तानां न सन्ति देहास्तथाश्रवणात् ।
सङ्कल्पात्पित्रादेस्सृष्ट्युक्त्याऽपि च न तत्सिद्धिः ॥
देहे पित्रादौ वा भवन्त्यपेक्षाजुषो यदि ते ।
तेषां ब्रह्मानुभवादन्यपरत्वं प्रसज्येत ॥
ब्रह्मणि च भोग्यताया निरतिशयत्वं प्रहीयेत ।
सन्ति विकल्पाम्नानात्तेषां देहेन्द्रियादीनि ॥
इत्यपरम्मतमाहुः बादरिजैमिनिमतद्वयंत्वेतत् ।
सन्ति न सन्ति च देहाः स्वकीयसङ्कल्पभेदतस्तेषाम् ॥
पित्राद्युपकरणैस्सह सृजन्ति तान्नस्वभोगरसतस्ते ।
भगवल्लीलान्तर्गतिमालोच्य सृजन्ति किं तु यथा ॥
यत्तस्य दशरथादिस्रष्टुर्लीलेदृशी दृष्टा ।
अणवोऽपि जीवदीपाश्चैतन्यैस्स्वप्रभारूपैः ॥
युगपत्सृष्टान्देहान्बहूनपि व्याप्नुवन्ति तदा ।
चैतन्यानि हि मुक्तौ प्राक्संकुचितानि कर्मगणैः ॥
संकोचकप्रहाणाद्व्याप्तिं यान्तीति सिद्धान्तः ।

इति अभावाधिकरणम् ॥ ९ ॥

---

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च ॥१७॥**

**प्रत्यक्षोपदेशान्नेति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥१८॥**

**विकारावर्ति च तथा हि स्थितिमाह ॥१९॥**

**दर्शयतश्चैवं प्रत्यक्षानुमाने ॥२०॥**

**भोगमात्रसाम्यलिंगाच्च ॥२१॥**

**अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥२२॥**

तदिदं मुक्तस्यैश्वर्यं सर्वेश्वरस्येव जगद्व्यापारसहितं उत तद्वर्जमिति संशये परमसाम्यश्रुतेर्जगद्व्यापारसहितमिति प्राप्तम् । न च सृष्टिनियमनादिप्रकरणेषु सर्वेश्वरस्यैव प्रकृतत्वात् मुक्तानामसन्निहितत्वाच्च तस्यैव सृष्ट्यादिव्यापारो न मुक्तानामिति वाच्यम् । श्येनप्रकरणे श्येनवदिषोरसन्निहितत्वेऽपि 'समानमितरच्छ्येनेने'ति साम्यवचनात्तदीयवैशेषिकाङ्गानामिषाविव मुक्तानामीश्वरसाम्यवचनात्तदीयसृष्ट्यादिव्यापाराणां तेषु सिध्युपपत्तेः । 'इमाँल्लोकान्कामान्नी कामरूप्यनुसञ्चर'न्निति मुक्तानां लोकसञ्चारश्रवणात् तादृशसञ्चारस्य तत्तल्लोकगतवस्तुनियमनादिलीलार्थत्वाच्च । न च तत्तल्लोकगतफलभोगार्थं तत्स्यादिति वाच्यम् । ब्रह्मानन्दमनुभवतोऽपि विषयान्तरलिप्सया सञ्चाराभ्युपगमे तस्य निरतिशयत्वभङ्गापत्तेः । न च मुक्तानां जगत्सृष्ट्यादिसत्त्वे सर्वथा सर्वेश्वरसाम्यापत्तेः 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुतिविरोधः स्यात । अतः साम्यं केनचिदेव रूपान्तरेणेति संकोचनीयमिति वाच्यम् । साम्यश्रुतिविरोधात्तन्निषेधश्रुतिरेव संसारिषु ब्रह्मसाम्यनिषेधविषयेति संकोचोपपत्तेः । अधिकारवाक्यावगतफलविरोधेन 'को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेती'त्यस्यैव 'परमं साम्यमुपैती'ति फलवाक्यविरोधेन साम्यश्रुतेरन्यथा नयनौचित्याच्च । 'कारणन्तु ध्येय' इति श्रुतेर्जगत्कारणत्वविशिष्टब्रह्मोपासनस्य तत्क्रतुन्यायेन सृष्ट्यादिफलप्रापकत्वावश्यम्भावाच्चेति । एवं प्राप्त उच्यते । जगत्सृष्ट्यादिवर्जमेव मुक्तैश्वर्यं ।

जगत्कारणत्वस्य ब्रह्मलक्षणत्वश्रुत्या जगत्स्रष्टुरेकत्वश्रुत्या च विरोधात् । त-स्माद्यथाप्रकरणं सर्वेश्वरासाधारणं निखिलजगद्व्यापारः नत्वसन्निहितमुक्त-साधारणं । सर्वलोकसञ्चारोऽपि न नियमनार्थः । किंतु तत्तल्लोकगतभोगप्रा-प्त्यर्थः । 'कामान्नीकामरूपी' ति विशेषणात् । न च मुक्तस्य जन्मवृद्ध्या-दिविकारवत् क्षुद्रभोगलिप्सया लोकपरिभ्रमणे तद्भोग्यब्रह्मानन्दस्य निरति-शयत्वहानिः । न हि संसारिवत् मुक्तस्य तत्तल्लोकभोगानुभवो लौकिकसु-खतयेष्यते । किंतु सविभूतिकब्रह्मानन्दानुप्रविष्टतया । तत्क्रतुन्यायस्त्व-साधारणोपास्यधर्मातिरिक्तविषयः । जगत्कारणत्वन्तु लक्ष्मीपतित्वादिवद-साधारणं 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' 'अपएव ससर्जादौ तासु वीर्यमपासृज' दित्यादिश्रुतिस्मृतिभ्यां तथैव प्रतिपादनात् । अतः परमसाम्यश्रवणं सविभूतिकब्रह्मानन्दानुभवरूपभोगसाम्यमात्रविषयम् । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते' ति तन्मात्रश्रवणालिङ्गात् । एवं ब्रह्मासाधारणं जगद्व्यापारं मुक्तास्सत्यसंकल्पा अपि कथमाशंसेरन् । ते च तेषां सत्यसंकल्पत्वादिगुणाश्च मुक्तावपि भगवत्परतन्त्रा इति हि 'तस्य च नित्यत्वा' दिति द्वितीयाध्यायसूत्रेण प्रतिपादितम् । मुक्तानां सत्यसंक-ल्पताऽपि भगवत्परिचरणोपयोगिस्वदेहपित्राद्युपकरणसृष्टिमात्रविषयेति सर्वे-श्वरस्य भगवतः पुरुषोत्तमस्यैव जगत्सृष्ट्यादिव्यापारः ॥

संग्रहकारिकाः ॥

ऐश्वर्यं मुक्तिभाजामपिनिखिलजगद्व्यापृतिव्यापकं स्या-
दाम्नाता ब्रह्मणा यत्परमसदृशता सत्यसंकल्पता च ।
कामान्नीकामरूपी सकलभुवनसञ्चारशाली स्वराडि-
त्यादिष्टं यत्ततोपि स्फुटमिह जगतान्तादधीन्यप्रतीतिः ॥
मैवं ब्रह्मप्रकरणगतास्सृष्टिसंहारमुख्याः
सम्बध्यन्ते कथमपि न तैस्सान्निधानप्रसङ्गे ।
तत्तल्लोकप्रथितविषयाभोगभोगैकभावं
नैवाचष्टे नियमयितृतां लोकसञ्चारसूक्तिः ॥

हेया अपि मुक्तानां विकारलोकस्थिता भृशं भोगाः।
ब्रह्मविभूतितया स्युर्भोग्यास्सविभूतिकं तदनुभवति ॥
मुक्तानां या सत्यसंकल्पतोक्ता तत्संकल्पाधीनसत्त्वैव साऽपि ।
ते चान्ये ये तद्गुणास्सर्व एतेऽप्यापद्यन्ते सर्वदा तादधीन्यम् ॥
एवं मुक्तावप्यचिद्वस्तु तुल्यं जीवास्सर्वे शेषतैकस्वभावाः ।

इति जगद्व्यापारवर्जाधिकरणम् ॥ ६ ॥

---

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य श्रीविश्वजिद्याजि-श्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ चतुर्मतसारे नयमयूख-मालिकाख्ये द्वितीयपरिच्छेदे चतुर्थस्याध्यायस्य चतुर्थः पादः ॥

---

॥ श्रीमते हयवदनपरब्रह्मणे नमः ॥

---

॥ अध्यायश्च समाप्तः ॥

---

॥ नयमयूखमालिका समाप्ता ॥

---



